PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE N° 24. II

# AJITĀGAMA

Vol. II

*édition critique*
*par*

N. R. BHATT

INSTITUT FRANÇAIS D'INDOLOGIE
PONDICHÉRY
1967

PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE N° 24. II

# AJITĀGAMA

**Vol. II**

*édition critique*

*par*

N. R. BHATT

INSTITUT FRANÇAIS D'INDOLOGIE
PONDICHÉRY
1967

# INTRODUCTION

La première partie de l'*Ajitāgama* traitait du *liṅga*, ses variétés, son installation, son culte, etc. Le *liṅga* représente Śiva non manifesté (*avyakta*). Cette deuxième partie traite des images de Śiva manifesté (*vyakta*), des divinités qui l'entourent, leur installation, les rituels afférents, etc. (*paṭala* 36 à 54).

Les deux volumes maintenant publiés, représentent le contenu des manuscrits dont nous avons donné la description dans l'introduction du premier volume. Un troisième volume comprendra des *paṭala* souvent incomplets qui se trouvent dans le seul manuscrit "D", ainsi que d'autres cités occasionnellement dans des ouvrages ultérieurs.

Le *paṭala* 36 est consacré à la préparation des images, en indique les mesures d'après les dimensions de la porte du sanctuaire, des piliers, en *hasta* ou en *tāla*. Puis sont données les définitions de 20 images de Sadāśiva, dites *sakala*. Elles sont classées en 10 *māheśvara* et 10 *raudra*. Cette classification semble propre à cet *āgama*. Le *Diptāgama* donne 16 images *sakala*, omettant 6 de celles mentionnées ici et en ajoutant 2. Le *Kāraṇāgama* en donne 18, en omettant 5 et en ajoutant 3. Le *Vātulaśuddha* en donne 25, en omettant 1 et en ajoutant 6 [1]. Dans les autres āgama, on trouve aussi une classification de ces images en rapport avec chacune de cinq têtes de Sadāśiva et de ses cinq actions, *sṛṣṭi*, *sthiti*, *saṃhāra*, *tirobhāva*, *anugraha*. Ensuite sont définies ces vingt images avec celles des divinités qui les entourent (*parivāradevatā*). Leurs mesures sont données dans le plus grand détail et pour toutes leurs parts.

Dans le *paṭala* 37 sont données les différentes sortes de *maṇṭapa*, dans le *paṭala* 38 les 5 enceintes, les gopura et l'emplacement des bâtiments annexes, des puits, des images, selon l'enceinte à laquelle ils appartiennent, selon l'orientation, etc. Le *paṭala* 39 donne l'emplacement et les dimensions des temples secondaires, selon les différentes enceintes. Un *pīṭha* peut remplacer une image d'une divinité secondaire. Définition du *pīṭha*, l'arrangement des *bali* sont alors donnés. Le *paṭala* 40 répartit les vingt images de

[1] Cf. p. 26 note 20

Śiva en 7 groupes,[1] et décrit le rituel d'installation commun à toutes les images. Les cinq *paṭala* qui suivent définissent les particularités de ce rituel propres à chacun de ces sept groupes. Les *paṭala* 46 à 54 donnent le rituel d'installation des principales divinités secondaires. Occasionnellement, les légendes de leur apparition sont données. Et à la fin sont décrits les rituels propres à chacune d'elles, quand elles sont divinité principale. Les rites d'installation de Viṣṇu et Kṣetrapāla sont donnés dans deux *paṭala* qui se trouvent dans le seul manuscrit "D". Il y a de nombreuses lacunes dans cette portion du manuscrit. Ces deux *paṭala* seront publiés dans le troisième volume.

Un essai de restitution a été fait pour quelques lacunes, d'après d'autres āgama traitant des mêmes sujets, sous forme soit de simples citations, soit de reconstructions pour les lacunes plus brèves. Tout passage restitué est mis entre crochets.

Nous remercions Sri P. Nilakantha Sarma et Sri T. Ramanujam pour l'aide qu'ils ont apportée à la préparation de ce travail, par leurs transcriptions de manuscrits. Nous tenons également à remercier toutes les personnes qui nous ont permis l'accès aux manuscrits ayant servi de base à cette édition.

[1] Cf. p. 116 note 1

## MANUSCRITS DE L'AJITĀGAMA UTILISÉS POUR LA PRÉSENTE ÉDITION

1. A : Ms. sur ôles ; 40 x 3.5 cm ; 140 fol ; 8 lignes par page ; car. grantha. Possesseur : Śiva Śrī Akṣaya kurukkaḷ, KīLveḷūr, dist. de Tañjāvūr. Transcription achevée le 31-3-1958 par P. Nīlakaṇṭha Śarmā. Contenu : 55 *paṭala* ; 1 à 27, 29 à 35 du vol. I et les *paṭala* 36 à 54 du vol. II de notre édition.

2. C : Ms. sur papier ; 19 x 16 cm ; 503 pages ; 14 lignes par page ; car. devanāgarī. Possesseur : Adyar Library and Research Centre, Madras No. T. R. 591. Transcription achevée le 24-8-1962 par S. Naṭarājan. Contenu : 45 *paṭala* ; les *paṭala* 1 à 12, 15 à 17, 19 à 27 et 29 à 35 du vol. I et 36 à 43 du vol. II de notre édition.

3. D : Ms. sur papier ; 27 x 23 cm ; 480 pages; 20 lignes par page ; car. grantha. Possesseur : Madras Government Oriental Manuscripts Library, R. no. 1330. Contenu ; 67 *paṭala*; les *paṭala* 1 à 12, 16 à 18, 20 à 27, 29 à 34 du vol. I et les *paṭala* 36 à 42 du vol. II de notre édition.

4. E : Ms. sur papier ; 32 x 21 cm ; 182 pages ; 41 lignes par page ; car. grantha. Possesseur : G. Svāminātha Śivācārya, Tiruvāṭuturai, dist. de Tañjāvūr. Contenu : 46 *paṭala* ; *paṭala* 1 à 35 du vol. I et les *paṭala* 36 à 42 du vol. II de notre édition.

5. G : Ms. sur ôles : 46.5 x 4 cm ; 10 lignes par page; car. grantha. Possesseur : Svāminātha Śivācārya, Mylapore, Madras. Transcription achevée le I5-9-65 par M. S. Rāmamūrti ; contenu : 3 *paṭata* ; le *paṭala* 42 du vol. II de notre édition ; voir vol. III pour les *paṭala* 64 et 65.

6. H : Ms. sur ôles ; car. grantha. Possesseur : Venkatesvara University Oriental Research Institute, Tirupati, no. 3972. Transcription achevée le 30-8-1967 par K. A. Bālasubrahmaṇyam. Contenu : les *paṭala* 2 à 12, 14 à 23 et 28 du vol. I et les *paṭala* 36 à 38, 40 à 48, 52 à 54 du vol. II de notre édition. N'a pu être utilisé que pour les *paṭala* 52 à 54.

श्रीः

## उपोद्घातः

हंसोद्यतेन विधिना च महावराहरूपाश्रितेन हरिणा यदभूदजय्यम् ।
तच्छाम्भवं विमलभक्तिगुणैकवेद्यं ज्योतिः परात्परतरं स्वजितं नमामः ॥

अष्टाविंशतिमूलशैवागमेष्वेकतमस्यास्याजितागमस्य प्रथमे भागे पशूनामनुग्रहाय सिसृक्षोः परशिवस्याधिकारावस्थायां यत् सदाशिवरूपत्वं तस्य चाव्यक्तस्वरूपभूतपरमेशप्रसादसंपादनपूर्वकं भोगमोक्षप्रसाधकेन सकलजनसाध्येन बहिर्यागेनाराध्यं यच्छिवलिङ्गं तस्य लक्षणं भेदाः प्रतिष्ठा पूजोत्सवादिविषयाः सविस्तरं न्यरूपिपत । द्वितीयेऽस्मिन् भागे तस्यैव सदाशिवमूर्तेर्व्यक्तदशायां महेश्वरस्वरूपे या व्यक्ताः प्रतिमाः, तथा शिवालये या याः परिवारदेवतास्तासां स्वरूपलक्षणप्रतिष्ठादेस्तथा तत्संबन्धिक्रियाकलापस्य च प्रतिपादकाः षट्त्रिंशात् प्रभृति चतुःपञ्चाशदन्ताः पटलाः प्रकाश्यन्ते । आगमस्यास्य प्रकाशन उपयुक्तासु मातृकास्वनुस्यूतमुपलब्धाः समग्राः पटलाः सर्वे प्रथमद्वितीयभागयोः प्राकाश्यन्त । इतः परं प्रायः D इत्यङ्किते मद्रपुरीस्थ-राजकीय-तालपत्रागारीयकोशे परमुपलभ्यमानाः ग्रन्थपातभूयिष्ठा असमग्राश्च ये पटलाः, तथा ग्रन्थान्तरेषु प्रसङ्गादुदाहृता अजितागमीयपटलाश्च समुच्चित्य तृतीयभागे प्रकाशयिष्यन्ते ।

द्वितीयेऽस्मिन् भागे प्रथमभूते षट्त्रिंशे पटले स्वतन्त्रालये द्वारतः स्तम्भतो हस्ततश्चेति त्रिविधेन मानेन परतन्त्रालये लिङ्गवशाच्च मानेन, तथा दशतालप्रभृति त्रितालपर्यन्तेन विविधेन तालमानेन प्रतिमाकरणप्रकारः सप्रपञ्चं प्रादर्शि । ततः सदाशिवमूर्तेर्व्यक्तदशायां संभाव्यमानानां सकलस्वरूपाणां विंशतिसंख्याकानां लक्षणं न्यरूपि । तत्र सकलप्रतिमारूपाणि द्वेधा विभक्तानि माहेश्वराणि रौद्राणि चेति । लिङ्गोद्भव-सुखासीन-गौरीसहित-भिक्षाटन-कङ्कालधर-नृत्त-त्रिमूर्ति-चक्रप्रसाद-चन्द्रशेखर-देव्यर्धसंज्ञका दश माहेश्वररूपेऽवान्तरभेदाः परिगण्यन्ते । दक्षिणामूर्ति-कामनाशन-कालनाश-वैवाह्य-स्कन्दोमासहित-जलंधरवध-हर्यर्ध-वृषारूढ-त्रिपुरान्तक-विषसंहरणाभिधाना दश रौद्ररूपभेदा निर्दिश्यन्ते । प्रतिमारूपविभजने विशिष्टोऽयं क्रमः आगमेऽस्मिन् दृश्यते । यद्यपि दीप्तागमे[1] षोडश प्रतिमाः परिगणितास्तथाप्यजितागमे निर्दिष्टाः कङ्कालधर-त्रिमूर्ति-चक्रप्रसाद-सोमास्कन्द-जलन्धरवध-विषसंहरणाख्याः षण्मूर्तयो नाभिहिताः, सदाशिव-चण्डेश्वरप्रसादाह्वयं मूर्तिद्वयमधिकं प्रोक्तम् । [2]कारणागमेऽष्टादशमूर्तयो निर्दिश्यन्ते । परं त्वत्र ग्रन्थे निर्दिष्टा-

---

[1] दीप्तागमे षोडशपटले 117-121 श्लोकाः

[2] पूर्वकारणागमे एकादशे पटले 150b-155a श्लोकाः

त्रिमूर्ति-चक्रप्रसाद-स्कन्दोमासहित-जलन्धरवध-विषसंहरणाभिध-पञ्चमूर्तयो न परिगणिताः, गङ्गाधर-चण्डेशानुग्रह-मुखलिङ्गाख्यमूर्तित्रयमधिकं निर्दिष्टम् । [1]वातुलशुद्धाख्ये पञ्चविंशतिमूर्तयो निर्दिश्यन्ते । अत्र निर्दिष्टां त्रिमूर्त्याख्यप्रतिमां विनान्यासां एकोनविंशतिमूर्तीनां नामानि लभ्यन्ते । गजारि-वीरभद्र-किरात-चण्डेशानुग्रह-विघ्नप्रसाद-एकपादाख्यषण्मूर्तीनां परिगणनमधिकतया दृश्यते । आगमान्तरेषु सृष्टिमूर्ति-स्थितिमूर्ति-संहारमूर्ति-अनुग्रहमूर्त्यादिशीर्षकेण शिवप्रतिमानां वर्गीकरणमपि दृश्यते । एवमस्त्यागमेषु मूर्तिपरिगणनविषये बहुधा व्यत्यासः ।

एवमुपरि निर्दिष्टानां विंशतिमूर्तीनां तथा परिवारदेवतानां विष्णु-ब्रह्म-शक्तिद्वय-विनायक-स्कन्द-सूर्य-दुर्गा-क्षेत्रपाल-चण्डेश-मोटी-ज्येष्ठा-शास्तृ-दिक्पाल-सप्तमातृ-वीरभद्र-गणेशानाम् एकादशरुद्र-द्वादशादित्य-अष्टवसु-विद्येशानां तथा नन्दि-महाकाल-शैलादि-श्री-सरस्वतीनां कुम्भयोनि-नारद-अष्टादशगण-भृङ्गि-गणेश्वर-रुद्रकिङ्कराणां भक्तानां वृषस्य च लक्षणं सविशेषं प्रत्यपादि । प्रतिमालक्षणविषयेऽवधार्यः आयादिविधिश्च सम्यक् प्राकाश्यत ।

सप्तत्रिंशे पटले मण्टपानां लक्षणं न्यरूपि । तत्र श्रीकर-श्रीभद्र-श्रीविशाल-श्रीभोग-श्रीकूट-सर्वतोमुखाह्वया मण्टपभेदाः सलक्षणं प्रापञ्च्यन्त ।

अष्टत्रिंशे पटलेऽन्तर्मण्डल-अन्तर्हार-मध्यहार-मर्यादिभित्तिक-महामर्यादिभित्तिक-रूपाणां प्राकारपञ्चकानां दण्डमानहस्तमानप्रदर्शनपूर्वकं लक्षणं प्रतिपादितम् । गोपुराणां लक्षणं तथा प्राकाराश्रितानां पचनालय-व्यञ्जनालय-पुष्पशाला-कोशागार-धान्यालय-धर्मश्रवणमण्टप-विद्याशाला-शस्त्रशाला-वस्त्रशाला-शयनालय-छत्रालय-कूपानां तथा प्रतिमानां स्थानानि च निरदिश्यन्त ।

एकोनचत्वारिंशे पटले परिवारालयानां स्थानमाने सामान्येन प्रदर्श्य तदनु परिवाराष्टकानामालयानामाकृतिः, परिवाराणां पीठानि, पश्चिमद्वारालये तेषां विशेषतो निवेशनस्थानानि च प्रोक्तानि । परिवाराष्टके वृषः, ब्रह्मा, मातृगणः, विनायकः, स्कन्दः, ज्येष्ठा, दुर्गा, सूर्यश्च पर्यगण्यन्त । दुर्गास्थाने विष्णोर्वा स्थानमनुमन्यते ।

षोडशपरिवारेष्वष्टौ लोकपालाः, सूर्याचन्द्रमसौ, नारदागस्त्यौ, श्रीसरस्वत्यौ व्यासवागीशौ च परिगण्यन्ते । द्वात्रिंशत्परिवारेषु वस्वष्टकं मरुदष्टकं नागाष्टकं प्रमथाष्टकं च परिगणय्य सर्वेषामेषां परिवाराणां युक्तानि स्थानानि कथ्यन्ते । परिवारपरिगणन-

[1] वातुलशुद्धाख्ये प्रथमे पटले 126b-134 श्लोकाः

स्थाननिर्देशादिविषयेऽस्त्यागमेषु भेदः । स च तत्र तत्र टिप्पण्यां दिङ्मात्रतया निर्दिष्ट इति तत एवावधार्यः । क्षेत्रपालस्य विशिष्य अन्तर्हारे ऐशान्यां स्थानं प्रोक्तम् । परिवाराणां बेराभावे पीठकल्पनं तथा प्रसङ्गात् परिवाराणां बलिक्रमः, महापीठस्थानं तल्लक्षणं तद्देवताश्च विशदतया प्रतिपाद्यन्ते ।

चत्वारिंशे पटले विंशतिधा विभक्ताः प्रतिमाः सप्तवर्गेष्वन्तर्भाविताः । सर्वासां प्रतिमानां स्थापनार्थं क्रियमाणस्य मण्टपस्य वेदिकायाः कुण्डानां च लक्षणं, पुण्याहवाचन-वास्तुहोम-रत्नादिन्यास-नेत्रोन्मीलन-जलाधिवास-स्नानमण्टपानयन-बेरशुद्धि-मण्टपसंस्कारम-ण्टपपूजा-शयनाधिवास-कुम्भस्थापन-कुम्भपूजा-होम-कुम्भाभिषेकदिनकृत्य-पूर्णाहुति-कुम्भाभि-षेक-मन्त्रन्यासादिसामान्यक्रियाकलापश्च न्यरूपि । तथा अचल-चल-चलाचलेति त्रिधा विभक्तानां लोहज-शैल-मृन्मय-चित्रादिरूपाणां प्रतिमानां स्थापनविषये विशेषाश्च प्रादर्शिषत ।

षट्त्रिंशे पटले लक्षिता विंशतिमूर्तयोऽत्र सप्तधा वर्गीकृता इत्युक्तम् । ते च वर्गाः केवल-साम्बिक-साम्बिकागुह-सब्रह्मकेशव सोमाश्रीविष्णुपद्मज-हर्यर्ध-देव्यर्धेति नाम्नाभिधीयन्ते । तत्र केवलाख्ये प्रथमे वर्गे सुखासन-भिक्षाटन-कङ्कालधर-दक्षिणामूर्ति-कामनाशनाह्वया देवीरहिताः पञ्च मूर्तयः, साम्बिकाख्ये द्वितीये वर्गे देवीसहिताः गौरीसहित-नृत्त-चक्रप्रसाद-चन्द्रशेखर-कालनाशन-जलन्धरबध-वृषारूढ-त्रिपुरान्तक-विषसंहरणाख्या नव मूर्तयः, साम्बिकागुहाख्ये तृतीये वर्गे सोमास्कन्दमूर्तिः, सब्रह्मकेशवाख्ये तुरीयवर्गे लिङ्गोद्भव-त्रिमूर्त्याख्यमूर्ती, सोमाश्रीविष्णुपद्मजाख्ये पञ्चमे वर्गे कल्याणसुन्दरापराभिधवैवाह्यमूर्तिः, हर्यर्धाख्ये षष्ठे वर्गे हरिहरमूर्तिः, देव्यर्धाख्ये सप्तमे वर्गेऽर्धनारीमूर्तिश्च गुम्फिताः । एषु केवलवर्गस्य चत्वारिंशे पटले, साम्बिकाख्यस्य साम्बिकागुहाह्वयस्य वर्गद्वयस्य चैकचत्वारिंशे, सब्रह्मकेशवाभिधस्य द्विचत्वारिंशे, सोमाश्रीविष्णुपद्मजनाम्नस्त्रिचत्वारिंशे, हर्यर्धस्य चतुश्चत्वारिंशे, देव्यर्धस्य पञ्चचत्वारिंशे पटले चानुक्रमेण प्रतिष्ठाक्रियाकलाप आवेद्यते । यथास्मिन्नागमे प्रतिमा वर्गीकृत्य स्थापनक्रियाकलापनिरूपणमागमान्तरेषु न तथा दृश्यते ।

षट्चत्वारिंशपटलमारभ्य प्रतिमालक्षणे लक्षितानां मुख्यानां परिवाराणां प्रतिष्ठाविधिराख्यायते । तत्र षट्चत्वारिंशे वृषेन्द्रस्य, सप्तचत्वारिंशे ब्रह्मणः, अष्टचत्वारिंशे मातृकाणाम्, एकोनपञ्चाशे विनायकस्य, पञ्चाशे स्कन्दस्य, एकपञ्चाशे चण्डस्य, द्विपञ्चाशे ज्येष्ठायाः, त्रिपञ्चाशे दुर्गायाः, चतुःपञ्चाशे सूर्यस्य च प्रतिष्ठाक्रियाकलापो वर्ण्यते । परिवारदेवतानां प्रतिष्ठाविधौ तत्तद्देवतानामुत्पत्तिकथा, तथा तासां देवतानां प्रधानालयविषये प्रतिष्ठाविधौ विशेषश्च प्रादर्शीत्ययमपि विशेषः आगमान्तरेभ्योऽस्यागमस्य ।

मुख्येषु परिवारेषु क्षेत्रपालस्य विष्णोश्च प्रतिष्ठाविधिपटलौ D इत्यङ्किते मद्रपुरी-राजकीयतालपत्रागारकोशे यद्यप्युपलब्धौ तथापि भागेऽस्मिन् न तौ गुम्फितौ । तत्र कारण-द्वयम्—उपलब्धं पटलद्वयमप्यसमग्रं ग्रन्थपातभूयिष्ठं च, मातृकामेकां विनान्यासूपलब्धासु नोपलब्धमिति । अतो बह्वीषु मातृकास्वनुस्यूतमुपलब्धाः सर्वे पटला भागद्वये प्रकाशिताः । मातृकान्तरगवेषणे यद्यसमग्रतयोपलब्धाः पटलाः पूर्येरन् तर्हि यथाशक्त्यन्विष्य तेषां सुष्ठु प्रकाशने तृतीये भागे प्रयत्नः करिष्यते । यदि सर्वथा मातृकान्तरेष्वपि ते नोपलभ्येरन् तर्हि यथाशक्त्युपलब्धा अन्ये सर्वे पटला यथास्थितमचिरादेव तृतीये भागे प्रकाशयिष्यन्ते ।

आगमानामेषां संपादनसरणिः प्रथमभाग उपोद्घात एव निर्दिष्टेति नात्र पुनरुच्यते । केषुचन पटलेषु यो ग्रन्थपातः स आगमान्तरसाहाय्येन आगमान्तरादुद्धृतैः श्लोकैर्वा पूरित इत्ययं परमस्मिन् भागे विशेषः । विषयग्राहिणां वाचकानां सौकर्यायेयं पद्धतिरनुसृता, सा च कोष्ठान्तर्गतत्वेनाङ्किता विशिष्य टिप्पण्यां सूचितेति विमर्शकानां नात्र विप्रतिपत्त्यवसरः ।

एतत्पुस्तकसंपादनकार्ये मातृकाप्रतिलेखादिकरणेन सर्वात्मनोपकृतवतोर्ब्रह्मश्री-नीलकण्ठशर्म-श्रीरामानुजाय्यंगार्महाशययोस्तथा मातृकादानेनोपकृतवद्भ्यो तिरुवाडुदुरै-शिवश्री-स्वामिनाथशिवाचार्य-कील्वेलूर्-अक्षयशिवाचार्य-मदुरै-सुन्दरेशभट्टर्-मयूरपुरीस्वामिना-थशिवाचार्य-महाशयेभ्यः, एवं मद्रपुरी-राजकीयतालपत्रकोशागारप्रत्येवेक्षकेभ्यः अडयार् ग्रन्थागाराध्यक्षेभ्यश्च हार्दीं कृतज्ञतामावेदयामः ॥

अरुणां करुणामृतरस-
भरितां दुरितौघहरणधौरेयाम् ।
सुरुचिं वरचिन्तामणि-
शरणां शरणं व्रजामहे नित्यम् ॥

श्री:

# अजितागमः

## [ क्रियापादः ][1]

## [ षट्त्रिंशः पटलः ]

### [ प्रतिमालक्षणविधिः[2] ]

[ स्वतन्त्रालये प्रतिमानां मानम्; तत्र गर्भतो मानम् ]

[3]प्रतिमालक्षणं वक्ष्ये [4]शृणु त्वं हि जनार्दन । यत्र या स्थाप्यते धाम्नि प्रतिमा तत्र [5]गर्भतः॥१॥
द्वारतः पादतो वापि [6]मानात्तां परिकल्पयेत्[7] । [8]त्रिभागे गर्भविस्तारे [9]द्विभागेनोत्तमा भवेत् ॥ २

---

[1] Les indications entre crochets ont été ajoutées par nous.

[2] Pour le प्रतिमालक्षणविधि voir les āgama *Aṃśumat-kāśyapa, paṭala* 23 ; 43 ; 46-50 ; 55-68 ; 70-72 ; 75-77 ; 79-81 ; 91-92 ; *Kāmika* I, 62 et 65 ; II, 44-52 ; 57-58 ; 60-62 et 64-66 ; *Kāraṇa* I, 11-14 ; 30 ; 57 ; 60 ; 67 ; II, 53-60 ; 62-63 ; 65-69 ; 78 ; 80-81 ; 83 ; 86-87 ; 91-93 ; *Dīpta, paṭala* 16-17 ; 35 ; 41-42 ; *Mataṅgapārameśvara, kriyāpāda, paṭala* 40 ; *Yogaja, paṭala* 6-7 ; *Vātulaśuddhākhya, paṭala* 1 ; *Santāna, paṭala* 16 ; *Suprabheda*, I, 34 ; 39-47 ; 49-50 ; 53 ; voir aussi *Śilparatna* Vol. II et *Śrītattvanidhi* (Śivanidhi).

[3] Le scribe de A (ms. de Kīlveḷūr) ajoute un *śloka* de sa composition :
सृष्टिविशिष्टवशिष्टकुलश्रीसोमसुतकविना भुवि लिपिना । करिवनपण्डितपोस्तक अजिते करकृतकलुषं क्षमयथ सन्त: ॥

D (ms. de Madras Government Oriental MSS. Library, R. No. 1330) omet les *śloka* 1 à 30.

[4] C (ms. de Adyar Library No T. R. 591), E (ms. de Tiruvāṭuturai) et F (ms. de Madurai) : तच्छृणु त्वं समाहित: ।

[5] A : गर्भिता ; C, E : कल्पिता: ; F : कल्पित:

[6] A : मानतां ; E, F : मानोक्तां

[7] Cf. *Dīptāgama*, 16, 4-5a :
प्रासादवशमानेन गर्भमानेन वा पुन: । द्वारमानेन वा पश्चात्स्तम्भमानेन कारयेत् ॥
हस्तमानेन वा कुर्यान्मूलबेरप्रमाणत: ।

[8] Cf. *Kāraṇāgama*, I, 11, 6b-9 :
गर्भमानवशान्मानं द्विविधेन प्रकीर्तितम् । गर्भगेहं त्रिधा भज्य एकैकं तु त्रिधा भजेत् ॥
उत्तमत्रयमग्रे तु मध्यमे मध्यमत्रयम् । अधमत्रयमधस्तान्नवमानमुदीरितम् ॥
अथवान्यप्रकारेण गर्भमानं वदाम्यहम् । गर्भाद्विंशतिभागे तु दशहस्तं तु कन्यसम् ॥
रुद्रांशं मध्यमं ज्ञेयं रव्यंशं चोत्तमं भवेत् ।

[9] A : द्विभागे चोत्तमं भवेत्; F : द्विभागेनोक्तमा भवेत्

शरभागयुते गर्भे गुणभागेन[1] मध्यमा[2] । नेत्र[3]भागयुते गर्भे व्योमभागेन [4]चाधमा ॥ ३ ॥
नन्दभागयुते गर्भे व्योमांशेनाधमाधमा । नवभिश्चोत्तमश्रेष्ठा[5] प्रतिमेति निगद्यते ॥ ४ ॥
[6]तयोर्मध्यप्रमाणानां [7]सप्तमं संप्रयोजयेत् । [8]गर्भमानमिति प्रोक्तं [9]द्वारमानमतः शृणु ॥ ५

[ द्वारतः प्रतिमामानम्[10] ]

[11]शुद्धद्वारगतं मानं कृत्वा तु वसुभागिकम् । एकभागं[12] परित्यज्य शेषैरंशैस्तु[13] सप्तभिः ॥६॥
या भवेत् [14]कल्पितोच्छ्राया कन्यसा प्रतिमा भवेत् ।
[15]द्वारोत्सेधेऽथ नन्दांशे [16]व्योमांशं तेष्वपोह्य च ॥ ७ ॥
[17]शेषैस्तुल्या तु मध्या स्यादुत्तमा तत्समा भवेत् ।
[18]द्वारमानमिति [19]प्रोक्तं [20]स्तम्भमानमतः[21] शृणु ॥ ८ ॥

[स्तम्भतः प्रतिमामानम्[22]]

[23]स्तम्भोत्सेधसमोत्तुङ्गप्रतिमा चोत्तमा भवेत् । नवांशहीना मध्या [24]स्यादधमाष्टांशहीनका[25]॥९॥

---

[1] A : भागैक pour भागेन
[2] C : मध्यते pour मध्यमा
[3] F : भागे pour भाग
[4] A : चैधमा ; C : चाधुना
[5] A : उत्तमश्रेष्ठ pour उत्तमश्रेष्ठा ; C : उत्तमा श्रेष्ठा ; E : उत्तमे श्रेष्ठा
[6] E, F : तयोर्मध्ये pour तयोर्मध्य
[7] Le mot सप्तम est utilisé dans le sens de सप्तक ; cet usage est propre aux āgama.
[8] C, E, F : गर्भमानादिति
[9] C : द्वारमानादतः ; E : द्वारमानादथ ; F : द्वारमानं ततः
[10] Cf. *Dīptāgama*, 16, 12-13a :
द्वारमानेन कर्तव्यमुत्तमं द्वारतः समम् । नवभागैकहीनं तु मध्यमं प्रतिमोच्छ्रयम् ॥
अधमेऽष्टांशहीनं तु त्रिविधं प्रतिमोच्छ्रयम् ।
[11] F : शुद्धद्वारं गतं
[12] A : पाकं pour भागं
[13] C, E, F : च pour तु
[14] C, E : कल्पनोच्छ्रेया ; F : कल्पतोच्छ्रेया
[15] A : द्वारोत्सेधे धनदांशे ; E : द्वारोत्सेधस्य नन्दांशे
[16] C : व्योमांशेषु व्यपोह्य च ; E : व्योममंशं व्यपोह्य च ; F : व्योमांशे तेष्वपोह्य च
[17] C : शेषैस्तुल्यास्तु मध्यं
[18] C, E : द्वारमानादिति
[19] C : प्रोक्ता
[20] C, E : स्तम्भमानाद् pour स्तम्भमानम्
[21] E : अथ pour अतः
[22] Cf. *Suprabhedāgama*, I, 34, 9b-10 :
" स्तम्भमानमथ शृणु ।
स्तम्भायामार्धभागेन कर्तव्यं कन्यसं बुधः । त्रिपादं मध्यमं प्रोक्तं समं चैवोत्तमं भवेत् ॥
[23] C et E omettent les *śloka* 9 et 10a :
[24] F : स्यादधमा नांशहीनका
[25] A : हीनया pour हीनका

[ हस्ततः प्रतिमामानम्[1] ]

पादमानमिति[2] प्रोक्तं हस्तमानमतः शृणु। उत्तमा तिथिहस्ता स्यात्पङ्क्तिहस्ताथ[3] मध्यमा॥१०॥
शरहस्ताधमा प्रोक्ता स्वतन्त्रे स्यादयं विधिः।

[ परतन्त्रालये लिङ्गवशात्प्रतिमामानम्[4] ]

शिवलिङ्गं समुद्दिश्य प्रतिमा यत्र कल्प्यते[5]॥११॥
पादादिलक्षणं [6]तस्यास्तच्छृणु त्वं[7] जनार्दन। [8]लिङ्गस्योत्तुङ्गमाने तु[9] [10]विकारांशविभाजिते[11]॥
तैरंशैरग्निभिर्बाणैर्मुनिभिर्नन्दकैः[12] क्रमात्। [13]रुद्रैश्चापि भवेद्वृद्ध्या प्रमाणानां तु पञ्चकम्॥१३
बेराणां [14]तु समुद्दिष्टमेतैरेव पुनः क्रमात्। लिङ्गमानात्क्षयेणापि[15] भवेत्पञ्चप्रमाणकम्॥१४॥
[16]वृद्ध्या पञ्च प्रमाणानि क्षयात्पञ्च तथैव च। लिङ्गोत्तुङ्गसमं [17]चैवमेवमेकादशोच्छ्रयम्॥१५॥

---

[1] Cf. *Kāraṇāgama*, I, 11, 11b-13a:
त्रिहस्तमधमं ज्ञेयं पञ्चहस्तं तु मध्यमम्। उत्तमं नवहस्तं तु हस्तमानमुदीरितम्॥
एकादिनवहस्तान्तमधमाद्युत्तमान्तकम्। नवधा मानमित्युक्तं हस्तमानं विशेषतः॥

[2] F: पादमानादिति प्रोक्ता हस्तमानादिति शृणु [3] C, E, F: तु pour अथ

[4] Cf. *Kāraṇāgama*, I, 11, 17b-20a:
पूजाभागसमं मानं कन्यसं प्रतिमोदयम्। द्विगुणं मध्यमं ज्ञेयं नाहमानमथोत्तमम्॥ . . . . . .
. . . . . . . लिङ्गनाहवशात्कुरु। तिथ्यङ्गुलं कनिष्ठं तु पञ्चविंशतिर्मध्यमम्॥
पञ्चत्रिंशतिमात्रं तु उत्तमं चेति कीर्तितम्।

cf. *Aṃśumatkāśyapa*, 55, 22b-29:
सर्वासां प्रतिमानां तु मानमादौ वदाम्यहम्। सर्वेषामपि लिङ्गानां शिरोमानं विनोदयम्॥
गृहीतं विद्यमाने तु शिरसां वर्तनं तथा। स्थूलदेशे परीणाहं विस्तारं चैव तत्र वै॥
पूजांशद्विगुणं ग्राह्यं द्वात्रिंशद्विभजेत्समम्। तेषु वै सप्तविंशांशं पञ्चविंशांशमेव वा॥
त्रिभागाधिकविंशांशमेकविंशतिरेव वा। एकोनविंशदंशं वा षोडशं वा त्रयोदशम्॥
रुद्रांशं नन्दभागं वा सप्तांशं पञ्च एव वा। अथवा रुद्रभागोच्चे नवभागविभाजिते॥
तेष्वेकांशं समारभ्य एकैकांशविवर्धनात्। यावद्वै सप्तविंशांशं तावद्वै सप्तविंशतिः॥
पूजांशोच्चे तु बिम्बोच्चं साष्टत्रिंशतिभेदकम्। तथैव लिङ्गतारे च लिङ्गनाहे च कल्पयेत्॥
लिङ्गाद्बिम्बोच्चभेदं तु मन्वधिकशतं भवेत्।

[5] A: कल्पिते
[6] E: तस्य pour तस्याः
[7] A: तच्छृणुष्व pour तच्छृणु त्वं
[8] E: लिङ्गस्य तुङ्ग pour लिङ्गस्योत्तुङ्ग
[9] C, F: मानेन pour माने तु
[10] A: विकारांशे pour विकारांश
[11] C, F: विभाजितैः pour विभाजिते
[12] A: नन्दिकैः pour नन्दकैः; C, E: नन्दिभिः
[13] A: रुद्राश्चापि; F: रुद्रश्चापि
[14] F: त्वेतेनैव . . . . pour तु समुद्दिष्टमेतैरेव
[15] A: क्रमेणापि pour क्षयेणापि
[16] A: वृद्धयात् pour वृद्ध्या
[17] A: चैवमेकम् pour चैवमेवम्; E: चैवाप्येवम्

[1]प्रमाणानि च लिङ्गस्य कथितानि [2]वशात्पुनः । विस्तारे [3]कल्पयेद्धीमान्नाहे[4] चापि प्रकल्पयेत् ॥ १६ ॥

[बेराणामासनमानम्[5]]

तस्माल्लिङ्गवशान्मानं[6] त्रयस्त्रिंशदुदाहृतम् । [7]बेरोत्सेधे गुणांशे तु [8]व्योमांशमितमासनम् ॥ १७ ॥
[9]आसीनस्य समुद्दिष्टं संस्थितस्य [10]युगांशकम् । [11]भूतांशाद्वा [12]सपद्मं [13]तदासनं परिकल्पयेत् ॥ १८
[14]एवं मानं समुद्दिष्टं प्रतिमापीठयोरिदम् ।

[अष्टविधं तालमानम्[15]]

[16]लब्धं बेरेषु यन्मानं [17]तालगण्यं तु तद्भवेत् ॥ १९ ॥
[18]अङ्गुलं देहलब्धं तु तत्तालं [19]द्वादशाङ्गुलम् । कल्पितं [20]स्यात्सुरश्रेष्ठ तैर्बेरेष्वङ्गकल्पना ॥ २० ॥
[21]अङ्गुलैकादिपादान्तं [22]मानोन्मानादिभिर्भवेत् । दशतालं नवतालमष्टतालमतः परम् ॥ २१ ॥
[23]सप्ततालं च षट्तालं पञ्चतालमतः परम् । चतुस्तालं [24]त्रितालं च तालमष्टविधं भवेत् ॥ २२ ॥

---

[1] A : प्रमाणादिभिर्लिङ्गस्य [2] A : तथा पुन:
[3] A : कल्येद् pour कल्पयेद् [4] C : नाभे pour नाहे
[5] Cf. *Dīptāgama*, 16, 16-17 :
प्रतिमायां त्रिधा कृत्वा भागैकं पीठिकोच्छ्रयम् । आसीनस्य तु देवस्य आसनं ह्येवमेव तु ॥
चतुर्भागैकमेवं स्यात्पीठिका सुस्थितस्य तु । पञ्चभागैकभाग: स्यात्स्थानके तु विशेषत: ॥
[6] A : वशोन्मानात् pour वशान्मानं ; C : वशान्मानात् [7] A : बेरोत्सेधं
[8] A : व्योमांशमिति मानसम् ; C : व्योमांशमिदमासनम् ; F : वोमासामिदमानसम्
[9] C : आसनस्य [10] F : युगांगकम् [11] F : भूतांशं वा
[12] A : सपर्यन्तदासनं [13] E : तम् pour तद् [14] C, F : एव pour एवं
[15] Cf. *Kāraṇāgama*, I, 11, 47-49a :
बेरायामं परिग्राह्य तालं संख्याक्रमाद्भजेत् । दशतालं नवतालं वा वसुतालर्षितालकै: ॥
रसतालेषु सहितं युगतालं त्रितालकम् । एवं तालक्रमं प्रोक्तमेकैकं त्रित्रिभेदकम् ॥
उत्तमं मध्यमं चेति कन्यसं तालकं प्रति ।
[16] A : इत: pour इदम् [17] A : तालं तस्यां तु ; C : तालगुह्यं तु ; F : तालगुण्यं तु
[18] Cf. *Ajitāgama*, vol. I, 12, 13-14
[19] C, E : द्वादशांशकम् F : द्वादशांशत: [20] F : स्यात्सुरश्रेष्ठं तैर्बेरेष्वङ्गकल्पनात्
[21] F : अङ्गुलै: पादपादान्तां [22] C : मानो मानादिभिर्भवेत् ; E : मानमानादिभिर्भवेत्
[23] C et E omettent le *śloka* 22a
[24] F : त्रितालं . . . लं षड्विधं भवेत्

[ दशतालनवतालयोस्त्रैविध्यम्[1] ]

रव्यङ्गुलमिदं तालमिति शास्त्रस्य निश्चयः । त्रैविध्यं [2]दशतालस्य नवतालस्य चैव हि ॥ २३ ॥
उत्तमं [3]मध्यमान्तं च तेषां भेदो विधीयते । उत्तमं दशतालं तु चतुर्विंशच्छताङ्गुलम् ॥ २४ ॥
चतुरङ्गुलहीनं [4]तद्दशतालं तु मध्यमम् । तस्माच्चाधममित्युक्तं हीनं यच्चतुरङ्गुलैः ॥ २५ ॥
नवतालोत्तमं ज्ञेयं [5]शतं [6]सद्वादशाङ्गुलम् । हीनं [7]तस्माच्च मध्यं स्यादङ्गुलानां चतुष्टयात् ॥२६॥
ततश्च [8]पूर्ववद्धीनं नवतालाधमं भवेत् ।

[ बेराणां तालक्रमः ; तत्रोत्तममध्यमाधमदशतालेन कार्या बेराः[9]]

[10]दशतालोत्तमाज्ज्ञेया [11]ब्रह्मविष्णुमहेश्वराः ॥ २७ ॥

---

[1] Cf. *Dīptāgama*, 16, 20-23.
दशतालं नवतालं च एकैकं तु त्रिभेदकम् । उत्तमं दशतालं स्याच्चतुर्विंशच्छताङ्गुलम् ॥
मध्यमं विंशतिशतमधमं षोडशाधिकम् । उत्तमं मध्यमं चैव कनिष्ठं दशतालकम् ॥
दशतालं त्रिविधं स्यान्नवतालं शृणुष्व हि । नवतालोत्तमं विद्धि द्वादशाधिकतच्छतम् ॥
मध्यमं नवतालं तु अष्टाधिकशताङ्गुलम् । चतुरङ्गुलाधिकशतं नवताले तु कन्यसम् ॥

cf. *Aṃśumatkāśyapa*, 43, 4b-8a :
धर्मतालात् त्रितालान्तं श्रेष्ठान्तराधमं त्रिधा । उत्तमं दशतालाख्यं चतुर्विंशच्छताङ्गुलम् ॥
मध्यमं दशतालं स्याद्धानुपङ्क्तघङ्गुलं भवेत् । कलाधिकशताङ्गुल्यमधमं दशतालकम् ॥
सद्वादशशतं भागं नवतालोत्तमं भवेत् । अष्टोत्तरशतांशं तु मध्यमं नवतालकम् ॥
कन्यसं नवतालं स्याद्वेदाधिकशतं भवेत् । तालं प्रत्येवमेवं तु क्रमाद्वेदाङ्गुलं हरेत् ॥

[2] A : दशतालं स्यान्नवतालं स चैव हि
[3] A : मध्यमं चैव pour मध्यमान्तं च ; C : मध्यमं तं च ; F : मध्यमं तद्वत्
[4] C, E, F : तद्दशताले तु [5] A : स तैः pour शतं [6] C : सद् pour स ; F : तद्
[7] A : तस्यां तु मध्या [8] A : पूर्ववद्धीमान् ; C, F : पूर्ववद्धीने
[9] Cf. *Dīptāgama*, 16, 24-26 :
उत्तमदशतालेन ब्रह्मविष्णुमहेश्वरान् । उमां दुर्गां महालक्ष्मीं चामुण्डीं च महीं तथा ।
ब्रह्माणीं ज्येष्ठां रुद्राणीं वैष्णवीं च सरस्वतीम् । मध्यमदशतालेन ; क्षेत्रपालं तथैव च ।
आदित्यं गुहरुद्रांश्च आर्यकं वज्रधारिणम् । ऋषीनप्सरसोऽश्विन्यौ कनिष्ठदशतालकैः ॥

cf. *Aṃśumtakāśyapa*, 54, 16b-19 :
उत्तमदशतालेन ब्रह्मविष्णुमहेश्वराः । मध्यमदशतालेन उमा सरस्वती तथा ॥
उषा भूमिश्च दुर्गा च लक्ष्मीश्च मातरस्तथा । ज्येष्ठा चैव प्रकर्तव्या स्वस्वाङ्गैस्तु समन्विताः ॥
चन्द्रादित्यावश्विनौ च ऋषींश्चैव ग्रहांस्तथा । अर्यं च षण्मुखं चैव चण्डेशं क्षेत्रपालकम् ॥
कन्यसदशतालेन कारयेद्द्विजसत्तम ।

[10] A: दशतालोत्तमं ज्ञेयं ; C : दशतालोत्तमानेन ; E : दशतालोत्क्रमानेन
[11] A : ब्रह्मविष्णुमहेश्वरम्

उमा कात्यायनी लक्ष्मीश्चामुण्डा[1] च सरस्वती। [2]माहेशी वैष्णवी ब्राह्मी दशतालस्य मध्यमात् ॥
[3]स्कन्दमिन्द्रं तथादित्यं [4]वीरभद्रं तथैव च। [5]क्षेत्रपालं शचीं देवीमुषां भूमिं तथैव च[6]॥२९॥
वाराहीं च तथेन्द्राणीं कौमारीं च तथाश्विनौ। दशतालाधमे कुर्याद्; वह्निं किन्नरमेव च [7]॥३०॥

[नवतालाष्टतालाभ्यां कार्या बेरा:[8]]

निर्ऋतिं [9]यादसां नाथं वायुं वैश्रवणं तथा। ईशानं च ऋषीन्सर्वाञ्शास्तारं मदनं[10] तथा॥३१॥

---

[1] C, E, F : चामुण्डी pour चामुण्डा

[2] C, E : माहेश्वरी वैष्णवी च pour माहेशी वैष्णवी ब्राह्मी ; F : महेशी pour माहेशी

[3] A : स्कन्दमिश्रं [4] F : सूरभद्रं [5] A : क्षेत्रपाल: शची देवी उमा भूमिस्तथैव च

[6] Après les *śloka* 29b le ms. A donne le colophon इत्यजिताख्ये महातन्त्रे प्रतिमालक्षणविधि:, puis les *paṭala* numérotés dans notre édition 42 à 49, 51, 52, 41, 47 et 63, et qu'il numérote 36 à 48 ; dans le *paṭala* qui suit, numéroté 49 par lui, intitulé सकललक्षणस्थापनविधि: il donne les *śloka* 30 à la fin, en faisant un *paṭala*. Et il donne comme colophon à ce *paṭala*, इत्यजिताख्ये महातन्त्रे सकललक्षणस्थापनविधि: (पञ्चत्रिंश:) एकोनपञ्चाश: पटल:। Cela indique qu'il y a confusion dans le ms. Nous donnons ici ce *paṭala* ainsi que les autres interposés, tels qu'ils sont trouvés dans la majorité des autres mss. C, D, E et F.

[7] Le ms. A donne वह्निं कन्नरिमेव च ; F : वह्निं किन्नरमेव च ; C et E : वह्निं किरणमेव च. La meilleure lecture semble être वह्निं किन्नरमेव च. Ce *pāda* semble appartenir à la portion traitant des images à faire dans le नवतालोत्तमप्रमाण. Mais le mot किन्नर vient de nouveau dans 34b qui appartient à la portion traitant des images à faire dans le नवतालाधमप्रमाण. Généralement, d'après les autres *āgama* (voir *Kāraṇa* I, 11, 54b) tous les विद्येश et लोकपाल ou दिक्पाल doivent être faits dans le नवतालोत्तमप्रमाण. Or dans cet *āgama* Indra est donné parmi les divinités qui doivent être faites dans le दशतालाधमप्रमाण : six autres lokapāla sont donnés comme devant être faits dans le नवतालोत्तमप्रमाण ; Yama n'est pas donné. Il semble qu'une meilleure lecture pourrait être वह्निमन्तकमेव च au lieu de वह्निं किन्नरमेव च।

[8] Cf. *Kāraṇāgama*, I, 11, 54b-58a :

विद्येशांल्लोकपालांश्च अष्टमूर्तीन्वसूंस्तथा। नवतालोत्तमेनैव कारयेल्लक्षणान्वितम् ॥
अन्यांश्च सर्वदेवांश्च नवतालोत्तमेन तु। यक्षानप्सरसश्चैव अष्टमूर्तीमरुद्गणान् ॥
नवतालस्य मध्येन विद्याधरांस्तथा कुरु। राक्षसान्यातुधानांश्च गन्धर्वान्सिद्धचारणान् ॥
असुरांश्च पितॄंश्चैव नवतालाधमेन तु। अष्टतालेन मर्त्यांश्च "

[9] C : यादवं [10] F : शास्तारममदं pour शास्तारं मदनं

एतेषामपि पत्नीश्च [1]तथैवाप्सरसां गणम् । महामोटीं च [2]विघ्नेशांस्तार्क्ष्यगन्धर्वयक्षकान् ॥३२॥
सिद्धचारण[3]नागेन्द्रान्विद्याधरगणानपि । रुद्रानेकादशादित्यान्द्वादशाष्ट[4] वसूनपि ॥ ३३ ॥
[5]नवतालोत्तमेनैव कारयेद्देशिकोत्तमः । राक्षसानसुरांश्चैव किन्नरानपि कारयेत् ॥ ३४ ॥
नवतालेन मध्येन [6]नवतालाधमेन च । [7]शेषान्देवगणान् [8]देवीरष्टतालेन मानवाः ॥ ३५ ॥

[सप्त-षट्-पञ्च-चतुस्त्रितालैः कार्या बेराः[9]]

पिशाचाः सप्ततालाः स्युः [10]षट्तालाः कुब्जकास्तथा । पञ्चतालो गजास्यः स्याच्चतुस्तालाश्च [11]वामनः
भूताः सर्वे त्रितालाः स्युर्वृषेन्द्रस्य[12] तथैव हि । एवं [13]तालक्रमः प्रोक्तो बेराणां [14]परिकल्पने॥

[तालमानम्[15]]

[16]तालजस्याङ्गुलस्यास्य यवोऽष्टांश[17] उदाहृतः । अङ्गुलं मात्रमंशश्च[18] शब्दाः पर्यायवाचकाः॥३८

---

[1] A : तमेव pour तथैव [2] E : विघेशीं pour विघेशान्
[3] D : मार्गेन्द्रान् pour नागेन्द्रान् [4] F : अष्टौ pour अष्ट
[5] A : नवतालोत्तमं चैव [6] A : नवतालायमेन [7] A : शेषां pour शेषान्
[8] A : देवीं pour देवीर्; C, D : देवीन्; F : देवि नष्टतालेन pour देवीरष्टतालेन
[9] Cf. *Kāraṇāgama*, I, 11, 58-60a :

" पिशाचान्सप्ततालतः । कुब्जकान्रसतालेन शरतालोत्तमेन च ॥
विघ्नेशं कारयेत्तस्य मध्यमेनाधमेन च । भूतरूपं तु कर्तव्यं युगतालेन बालकान् ॥
किन्नरान्किम्पुरुषांश्चैव त्रितालेनैव कारयेत् ।

[10] A : षट्तालं [11] A : वामनम् [12] A : ऋक्षेन्द्रस्य pour वृषेन्द्रस्य
[13] A : तालक्रमं प्रोक्तं [14] A : परिकल्प्यते
[15] Cf. *Dīptāgama*, 16, 34-38a :

प्रतिमायाममानं तु तालगण्येन भाजितम् । लब्धोत्सेधस्य मानं तु चतुर्विंशच्छतं कुरु ॥
तत्तद्भागैकमानं यत्तदङ्गुलमिति स्मृतम् । अङ्गुलं तु भवेन्मात्रं मात्रादष्टविभाजितम् ॥
एकभागं यवं विद्याद्यवाष्टगुणिताङ्गुलम् । द्व्यङ्गुलं कीलकं विद्यात्त्र्यङ्गुलेन कला भवेत् ॥
भागं स्याच्चतुरङ्गुल्यं भागद्विगुणं यावकन् । भागं यावकसंयुक्तं मुखमेवं प्रकीर्तितम् ॥
मुखं तालयवं चैव द्वादशाङ्गुलसंज्ञकम् ।

cf. *Suprabhedāgama*, I, 37, 30b-34a :

ईश्वरादिचतुर्मूर्ति दशतालेन कारयेत् । शक्तीनामन्यदेवानां नवतालं प्रकीर्तितम् ॥
दिव्यमार्षमनुष्याणामष्टतालेन कारयेत् । रक्षसामसुराणां च सप्ततालमिहोच्यते ॥
षट्तालेनैव गन्धर्वान्पञ्चतालेन विघ्नकम् । वामनान्पञ्चतालैस्तु चतुस्तालैस्तु भूतकान् ॥
त्रितालं किन्नराणां तु मत्स्यानां तु द्वितालकम् । एकतालस्तु कूश्माण्डः पिशाचा विंशदङ्गुलाः ॥

[16] A : तालस्य pour तालजस्य; F : जातस्य [17] E : अङ्ग pour अंश
[18] C, D, E : अंशं च pour अंशश्च

द्व्यङ्गुलं कोलकं ज्ञेयं त्र्यङ्गुलं तु [1]कला भवेत् । भागं स्याच्चतुरङ्गुल्यं [2]यावकं तद्द्वयं भवेत्॥३९
भागं [3]यावकसंयुक्तं मुखमेतत्प्रकीर्तितम् । मुखं तालमिति [4]प्रोक्तं द्वादशाङ्गुलसंयुतम् ॥४०॥

[पञ्चविधानि मानानि[5]]

मानं प्रमाणमुन्मानं [6]लम्बमानोपमानके । एवं पञ्चप्रमाणेन[7] [8]व्यक्तलिङ्गं तु कारयेत् ॥४१॥
[9]मानं स्यात्प्रतिमोत्सेधं तद्विस्तारं तु यद्भवेत् । तत्प्रमाणमिति [10]ज्ञेयमुन्मानं तस्य नाहकम् ॥४२
लम्बमानं तु सूत्रेण [11]मितं [12]यत्तदुदीरितम् । [13]तद्द्व्यन्तरप्रमाणं यदुपमानं तदुच्यते ॥४३॥
[14]मानैः पञ्चभिरेतैस्तु [15]न्यूनाधिकविवर्जितैः । [16]निर्मिता [17]प्रतिमा या [18]स्यात्सा सर्वाभीष्टसिद्धिदा ॥ ४४ ॥

[उत्तमदशताललक्षणम् ; तत्राङ्गमानम्[19]]

लब्धे तु प्रतिमोत्सेधे चतुर्विंशच्छताङ्गुले । केशान्तात्पादपर्यन्तमङ्गमानमतः शृणु ॥ ४५ ॥

---

[1] A : कलं pour कला

[2] A : यावातददयं भवेत् ; C : यावकौ च द्वयं भवेत् ; E : यावकद्वितयं भवेत् ; F : यावक्रं तदयं भवेत्

[3] F : यावर्तसंयुक्तं

[4] C : प्रोक्त pour प्रोक्तं

[5] Cf. *Kāraṇāgama*, I, 11, 64b-69 :
मानं चैव प्रमाणं च उन्मानं ह्युपमानकम् । परिमाणं लम्बमानं षड्विधं मानमिष्यते ॥
मानं यत्प्रतिमायामं तिर्यङ्मानं प्रमाणकम् । उन्मानं तत्प्रदेशाच्च द्व्यन्तरं ह्युपमानकम् ॥
परिमाणं नाहमानं लम्बमानं च सूत्रकम् । मानहीने महाव्याधिरधिके शत्रुवर्धनम् ॥
नाहहीने विनाशः स्यात्तद्वृद्धिः स्यात्क्षयंकरी । प्रमाणहीने दारिद्र्यमधिके दारनाशनम् ॥
लम्बमानविहीने तु राजराष्ट्रस्य दोषकृत् । उपमानाधिके हीने शिल्पिनं हन्ति देशिकम् ॥
सर्वलक्षणयुक्तं चेत्सर्वसिद्धिप्रदायकम् ।

[6] A : लम्बमानावमानकौ ; C : लम्बमानोपमानकौ ; F : लम्बमानापमानकौ

[7] A : प्रमाणेति pour प्रमाणेन

[8] C : युक्तलिङ्गं ; D, E : युक्तं लिङ्गं

[9] C : मानसात् pour मानं स्यात्

[10] C : ज्ञेयमुमानन्तस्य

[11] C : इदं pour मितं ; E : मानं

[12] D : युक्तम् pour यत्तद्

[13] C, E : तद्यन्तरं प्रमाणं

[14] F : मान्यैः pour मानैः

[15] C, D, E : न्यूनाधिक्य pour न्यूनाधिक

[16] C : निर्मितां

[17] F : प्रमिता

[18] A : स्यात्सर्वाभीष्टसुसिद्धिदा

[19] Cf. *Kāraṇāgama*, I, 11, 70-76a :
चतुर्विंशच्छतं मात्रं मूर्धाद्यङ्घ्रितलान्तकम् । उष्णीषमङ्गुलं प्रोक्तं केशान्तं तु कला भवेत् ॥
सार्धत्रयोदशमात्रं मुखमानं विधीयते । केशान्तादक्षिसूत्रान्तं भागं चतुर्यवाधिकम् ॥
अक्षिसूत्रात्पुटान्तं तु तत्समं चैव कारयेत् । पुटान्ताद्धनुपर्यन्तं मानं चतुर्यवाधिकम् ॥
गलमर्धाङ्गुलं चैव कर्णं भागसमुच्छ्रयम् । हिक्कादि हृदयान्तं च सार्धत्रयोदशाङ्गुलम् ॥
हृदादिनाभिपर्यन्तं तत्समं चेति कीर्तितम् । नाभ्यादिमेढ्रमूलान्तं त्रयोदशाङ्गुलं भवेत् ॥
मेढ्रमूलात्तु जान्वन्तं सप्तविंशतिमात्रकम् । द्विकोलकं तु जानुः स्याज्जङ्घा चाप्युरुतः समा ॥
तलोत्सेधं तु भागं स्यात्कायमानमिति स्मृतम् ।

उष्णीषमङ्गुलं ज्ञेयं केशान्तं स्यात्कलाङ्गुलम् । त्रयोदशाङ्गुलं सार्धं मुखमानमिति स्मृतम्॥४६॥
तेषु वेदाङ्गुलं सार्धं केशान्तादक्षि[1]सूत्रकम् । [2]नासापुटान्तं तत्सूत्रात्तत्प्रमाणमिति स्मृतम्॥४७॥
[3]पुटान्ताद्धनुपर्यन्तं पूर्ववत्परिकीर्तितम् । [4]तस्याधोऽर्धाङ्गुलेनैव गलवृद्धिं प्रकल्पयेत् ॥४८॥
[5]कण्ठमानमिति ज्ञेयं तच्च हिक्कान्तमुच्यते । तस्माच्च हृदयान्तं तु सार्धत्रयोदशाङ्गुलम्॥४९॥
तस्माच्च नाभिपर्यन्तं मानं तद्वदुदाहृतम् । नाभेश्च मेढ्रपर्यन्तं त्रयोदशाङ्गुलमुच्यते[6] ॥ ५० ॥
जान्वन्तं [7]च ततो मेढ्रात्सप्तविंशाङ्गुलं भवेत् । [8]कोलकद्वितयं जानु जङ्घा गुल्फान्तमूरुवत् ॥५१
[9]भागं पादतलोत्सेधं कायमानमिति स्मृतम् ।

[ मुखमानम् ]

[10]द्वादशाङ्गुलतारेण [11]मितं कुर्यात्तदाननम् ॥ ५२ ॥
उष्णीषात्पूर्व[12]केशान्तं नन्दाङ्गुलमिति स्मृतम् । उष्णीषात्पृष्ठकेशान्तं [13]रव्यङ्गुलमिति स्मृतम्॥
उष्णीषात्पार्श्वकेशान्तं प्रत्येकं तु दशाङ्गुलम् । कर्णयोरन्तरं वक्त्रे विंशमात्रमिति स्मृतम् ॥
नासाग्रात्कर्णपर्यन्तं प्रत्येकं द्वादशाङ्गुलम् । [14]कर्णयोरन्तरं पृष्ठे सार्धं स्याद् द्वादशाङ्गुलम्॥५५

---

[1] C : अक्ष pour अक्षि
[2] A : नासापुटान्तते सूत्रान् ; F : नासापुटान्तरे सूत्रात्
[3] A : पुटान्तर्धनुपर्यन्तं ; D : पुटान्तार्द्धनुपर्यन्तं
[4] C : तस्यायोधर्धाङ्गुलेनैव ; C : तस्मादर्धाङ्गुलेनैव
[5] A : कर्णमानमिति ; C : कर्णभागमिति ; D : कण्ठभागमिति ; E : कर्ण भागमिति
[6] E : भवेत् pour उच्यते
[7] E : तु pour च
[8] A : कोलकद्वितवज्जानु ; C, E, F : कोलकद्वितयं चानु
[9] Après le *śloka* 51 on trouve dans le ms. D भागं.........य परिकल्पयेत् (voir *śloka* 111b), les *śloka* 112a à 123b, 74b à 111b et 124a ff ; les *śloka* 52a à 74a manquent.
[10] Cf. *Dīptāgama*, 16, 53-60a :
द्वादशाङ्गुलविस्तारं मुखं पूर्वक्रिया भवेत् । उष्णीषात्पूर्वकेशान्तं षट्कोलकमिति स्मृतम् ॥
उष्णीषात्पूर्वकेशान्तं नवमात्रं विधीयते । उष्णीषात्पार्श्वकेशान्तमेकैकं तु नवाङ्गुलम् ॥
लकाराक्षरसंयुक्तं केशान्तस्याकृतिर्भवेत् । कर्णयोरन्तरं पूर्वे दशकोलकमेव च ।
नासाग्रात्कर्णपर्यन्तं चत्वारि हि कला भवेत् । कर्णयोरन्तरं पृष्ठे त्रिभागार्धाङ्गुलं भवेत् ॥
कोलकं कर्णविस्तारमायतं द्विगुणं भवेत् । कण्ठश्रोत्रायतं तारमात्रमर्धाङ्गुलं विदुः ॥
यवद्वयं कर्णपाल्यं तत्समं कर्णपट्टिका । मात्रार्धं कर्णपट्टि स्याद् द्व्यङ्गुलं कर्णनालकम् ॥
लकारावर्तयोर्मध्ये पिञ्छली कर्णचूलिका । भागं नालायतं चार्धमध्यर्धाङ्गुलविस्तृतम् ॥
अपाङ्गात्कर्णमूलान्तमृषिमात्रं विधीयते ।
[11] A : मितिं
[12] C : पर्वं pour पूर्वं
[13] C : नव्यङ्गुल pour रव्यङ्गुल
[14] A omet le demi-*śloka* 55b

[1]कोलकं कर्णतारं स्यात्कर्णदैर्घ्यं च कोलकम् । कर्णयोरपरे तारमङ्गुलं सार्धमुच्यते ॥ ५६ ॥
द्वियवं कर्णपाली स्यात्तत्समं[2] कर्णपट्टिका । [3]मात्रार्धं कर्णपट्टं स्यादङ्गुलं कर्णतालकम् ॥ ५७ ॥
[4]भागान्नालायतं चैव [5]ह्यध्यर्धाङ्गुलविस्तृतम्[6] । अपाङ्गात्कर्णमूलान्तं[7] सप्तमात्रमिति स्मृतम् ॥
भ्रूसूत्रेण समं तीर्यं[8] कर्णोर्ध्वं तु प्रकल्पयेत् । [9]द्विमात्र[10]द्वियवाधिक्यं [11]नेत्रायामं विधीयते ॥
[12]षड्यवं नेत्रविस्तारमायामं [13]तु त्रिधा भवेत् । कृष्णमण्डलमेकं[14] स्यान्मध्ये[15] पार्श्वद्वयं सितम् ॥
कृष्णमण्डलमध्ये तु [16]दृष्टिर्यूकप्रमाणतः । करवीरं यवं रक्तं नयनं स्यात्तु [17]मूलके ॥ ६१ ॥
[18]नवतिः पक्ष्मरोमाणि नेत्रयोश्च पृथक् पृथक् । भ्रूरेखा पक्ष्मरेखा च कोलकं [19]पादसंयुतम् ॥
भ्रूरेखा चोर्ध्वकेशान्ता [20]तत्समा तु प्रकीर्तिता । ऊर्ध्व[21]वर्मविशालं यत्पञ्चभिश्च यवैर्मितम् ॥
[22]अधोवर्म यवं [23]विद्याद्भ्रूदीर्घं स्याद्रसाङ्गुलम् । तद्विस्तारं यवं विद्याच्चापाकारं[24] प्रकल्पयेत् ॥ ६४ ॥

---

[1] Au lieu des *śloka* 56 et 57 on trouve dans le ms. A le demi-*śloka* कोलकं कर्णतारं स्यादङ्गुलं कर्णतारकम् qui comprend le premier *pāda* du *śloka* 56a et le quatrième *pāda* du *śloka* 57b; dans le ms. C on trouve 56a, le premier *pāda* de 56b et le quatrième *pāda* de 57b.

[2] F : समा pour समं

[3] F : मात्रार्धा कर्णपट्टा

[4] C : भागान्न तालयुतं चैव ; E : भागान्नतायतं चैव

[5] A, B, C et F omettent हि

[6] C : विस्मृतम् pour विस्तृतम्

[7] C : तालान्तं pour मूलान्तं

[8] C : तीर्थं pour तीर्यं

[9] Cf. *Kāraṇāgama*, I, 11, 84b-90:

द्विमात्रद्वियवाधिक्यनेत्रायामं विधीयते । षड्यवं नेत्रविस्तारमायामं तु त्रिधा भवेत् ॥
कृष्णमण्डलमेकं तन्मध्यमे सितमण्डलम् । कृष्णमण्डलमध्ये तु दृष्टिर्यूकप्रमाणतः ॥
करवीरो यवं रक्तं नयनत्रयमूलके । कनीनिका यवा दीर्घा त्रिवर्णैर्लोचनं युतम् ॥
ऊर्ध्ववर्मस्य मानं तु यवं चार्धमधो भवेत् । नवतिः पक्ष्मरोम स्यात्कृष्णाञ्जनसमप्रभम् ॥
भ्रूरेखा चक्षुरेखा च कोलद्वययवाधिकम् । भ्रूरेखामूर्ध्वरेखान्तं तत्समं चेति कीर्तितम् ॥
भ्रूदीर्घं रसमात्रं तु विस्तारं यवमेव च । आरूढचापाकृतिवन्मूलाग्रं तु क्रमात्कृशम् ॥
द्व्यङ्गुलं त्रियवं प्रोक्तं द्वयोर्नेत्रान्तरं स्मृतम् ।

[10] C, E, F : द्विमात्रं pour द्विमात्र

[11] C : नेत्रायामे

[12] A : षड्यवर्णं त्रिविस्तारं

[13] C : त्रियवं pour तु त्रिधा ; E : त्रिविधं

[14] A : एवं pour एकं

[15] A : मध्य pour मध्ये

[16] A : दृष्टिर्युगप्रमाणतः ; C : धृष्टिर्युकप्रमाणतः

[17] F : मूलकम्

[18] A : नवनिम्ब्वक्षिरोमाणि ; C : नयति पक्ष्मरोमाणि ; E : विंशतिः पक्ष्मरोमाणि

[19] A : पादसमन्वितम् ; C : वादसंयुतम् ; E : वाथ संयुतम्

[20] C : तस्य मान प्रकीर्तिता ; E : तस्य मानं प्रकीर्तिता

[21] E : चर्म pour वर्म

[22] C : कथं चर्म pour अधोवर्म ; E : अधश्चर्म ; F : अधःपङ्कं

[23] A : विद्याद् दिर्वं pour विद्याद्भ्रूदीर्घं

[24] A : चकारं pour चापाकारं

नेत्रयोरन्तरं चापि द्विमात्रं परिकीर्तितम् । [1]मूलनासार्धमात्रा[2] [3]स्यादग्रा सयवमात्रका ॥६५॥
अर्धमात्रप्रमाणेन पुटयोरन्तरं भवेत् । तयोः पञ्चयवं तुङ्गं सुषिरं त्रियवं भवेत् ॥ ६६ ॥
तद्बाह्ये परितो विद्याद्यवार्धं घनमेव हि । पुटान्तरं [4]च त्रियवं [5]गोजिमानं चतुर्यवम् ॥ ६७ ॥
[6]गोज्याश्च नासिकातुङ्गं [7]कोलकं द्वियवाधिकम् । [8]वंशस्येव तु विस्तारमङ्गुलं चेति कीर्तितम् ॥
पुष्करं यवमात्रं स्यात्पुरस्तात् षड्यवं ततः । तिलपुष्पसमाकारं [9]नासाग्रपुटयोर्द्वयोः ॥ ६९ ॥
[10]पुटान्तादधरोष्ठान्तं कोलकं द्वियवाधिकम् । द्वियवं दन्तविस्तारमुत्सेधं तत्समं भवेत् ॥७०॥
दंष्ट्रायामं [11]यवाधिक्यं सदृशं [12]मुकुलाकृतेः । [13]ऊर्ध्वे द्विरष्टदन्तास्तु तावदेवाप्यधःस्थिताः ॥

---

[1] Cf. *Kāraṇāgama*, I, 11, 91-95a :

मूलनासार्धमात्रं च अग्रनासा यवाङ्गुलम् । पुटमर्धाङ्गुलं तारं तत्तुङ्गं पञ्चभिर्यवैः ॥
सुषिरं त्रियवं तिर्यग्बाह्ये चार्धयवं घनम् । पुटान्तात्त्रियवं चैव गोजिमानं चतुर्यवम् ॥
गोज्याश्च नासिकोत्सेधं कोलकं च यवाधिकम् । वंशस्यैव तु विस्तारमङ्गुलं चेति कीर्तितम् ।
पुष्करं तु यवोत्सेधं पुरस्तात्षड्यवं ततः । द्वियवं चार्धमेकं तु पुष्करस्य विधीयते ॥
तिलपुष्पसमाकारं नासाग्रस्य पुटद्वयोः ॥

[2] A : मूलनासार्धमात्रं स्याद् ; C : मूलनासादर्धमात्रं [3] A : अग्रासयवमात्रकम् ; C : स्यादग्रां यवमात्रकः

[4] A, E : त्रियवं चैव pour च त्रियवं ; C : त्र्यङ्गुलं चैव [5] A : गोधूमानां ; F : भोजीमानं

[6] A : भोज्याश्च नाडिकां तुङ्ग [7] A : कोलक pour कोलकं [8] A : वंशस्यैव

[9] F : नालाग्र pour नासाग्र

[10] Cf. *Dīptāgama*, 16, 71-73 :

पुटसूत्राधरोष्ठान्तं कोलकं यवमुच्यते । दशनं दृश्यादृश्यं तु द्वात्रिंशच्च विधीयते ॥
यवत्रयं तु विस्तारमुत्सेधं तत्समं भवेत् । दंष्ट्रायामं यवाधिक्यं सदंशो मुकुलाकृति ॥
ऊर्ध्वे षोडशदन्तं स्यादधस्तात्तावदेव तु । अधस्ताद्दशविस्तारं द्वियवं तावदुच्छ्रयम् ॥

cf. *Kāraṇāgama*, I, 11, 95b-98a :

पुटान्तादधरोष्ठान्तं कोलकं द्वियवाधिकम् । दशनं दृश्यादृश्यं हि द्वात्रिंशत्परिकीर्तितम् ॥
द्वियवं दन्तविस्तारमुत्सेधं तत्समं भवेत् । दंष्ट्रायामं यवाधिक्यं सदंशमुकुलाकृति ॥
ऊर्ध्वे षोडशदन्तं स्यादधस्तादपि तावकी । अधोदशनविस्तारं यवार्धं तारमुच्छ्रयम् ॥

[11] E : द्वयाधिक्यं [12] C, F : मुकुलाकृतिः

[13] A : ऊर्ध्वदृष्टदन्तरस्तु ; C, F : ऊर्ध्व दृष्ट . . . दन्तास्तु ; E : ऊर्ध्व . . . दन्तास्तु ; correction sur la base de *Kāraṇa* et *Dīpta* ; cf. *Kāraṇa*, I, 11, 97b : ऊर्ध्वे षोडशदन्तं स्यादधस्तादपि तावकी ; *Dīpta*, 16, 73a : ऊर्ध्वे षोडशदन्तं स्यादधस्तात्तावदेव तु ; *Mānasollāsa* II, 1, 274 : दन्ता द्वादश दृश्याः स्युः पङ्क्तिद्वयसमाश्रिताः

[1]जिह्वायामं तु [2]षण्मात्रं विस्तारं स्यात्तदर्धतः[3] । अधरोष्ठस्य विस्तारमङ्गुलं स्याद्यवाधिकम् ॥
[4]अधरोष्ठं रक्तवर्णं तारात्सप्तयवं भवेत् । [5]तदायामं द्विमात्रं स्यादास्यतारं[6] द्विकोलकम् ॥७३॥
उत्तरोष्ठस्य तारं च त्रियवं परिकीर्तितम् । [7]हनुः[8] [9]स्याद्द्वयङ्गुलायाममूर्ध्वनिम्नं[10] यवं भवेत् ॥
सप्तयवोच्चमधरात्त्रिमात्रं[11] हनुवर्धनम् । [12]त्रियवं चोन्नतं विद्धि [13]कलार्धं चिबुनिर्गतिः[14] ॥
पूर्णचन्द्राकृतिं[15] वक्त्रमुक्तलक्षणसंयुतम् । कारयेत्सुप्रसन्नं तु [16]स्मेररम्यमनिन्दितम् ॥ ७६ ॥

[ कण्ठः[17] ]

[18]कृकटीपृष्ठग्रीवं च भागायाममिति स्मृतम् । भागायाममधस्तस्य शूर्पाकारं प्रकल्पयेत् ॥७७॥
[19]ककुदः कटिसंध्यन्तं त्रिंशदङ्गुलमुच्यते । तत्समं [20]कक्षयोर्मध्यं [21]कटिसंध्यं च पृष्ठतः ॥

---

[1] Cf. *Kāraṇāgama*, I, 11, 98b-101a :
जिह्वायामं तु षण्मात्रं विस्तारं स्यात्तदर्धकम् । अधरोष्ठस्य विस्तारमङ्गुलं स्याद्यवाधिकम् ॥
मुनियवं रक्ततारमायामं स्याद्द्विमात्रकम् । भागं च त्रियवाधिक्यमास्यतारमिति स्मृतम् ॥
त्रिवक्त्रं चोत्तरा पाली यवार्धं चोत्तमं मतम् । उत्तरोष्ठस्य विस्तारं त्रियवं परिकीर्तितम् ॥

[2] A : षण्मात्रविस्तारः [3] A : अर्धकः pour अर्धतः

[4] E : अधरोष्ठौ ताम्रवर्णौ [5] A : तदायामद्विमात्रं [6] F : तालं pour तारं

[7] Cf. *Dīptāgama*, 16, 78-79 :
हनुः स्याद् द्वयङ्गुलायामं तदूर्ध्वे तु यवाङ्गुलम् । सप्तयवोच्चमधरात्त्रिमात्रं हनुवर्धनम् ॥
त्रियवं चोन्नतं विद्धि कलार्धं चिबुनिर्गमः । पूर्णचन्द्राकृतिर्वक्त्रं सर्वलक्षणसंयुतम् ॥

[8] D : हनू pour हनु ; F : बहु ; la meilleure lecture est हनोः

[9] A, E : स्यादङ्गुलायामम् [10] E : ऊर्ध्वे नम्रं pour ऊर्ध्वनिम्नं

[11] C : असुरं त्रिमात्रं pour अधरात्त्रिमात्रं ; D : मधुरं त्रिमात्रं ; E, F : अधरं त्रिमात्रं

[12] A : त्रयं pour त्रियवं [13] A : कालार्धं ; C : कालार्थं [14] E : निसृतिः pour निर्गतिः

[15] Le *bahuvrīhi* पूर्णचन्द्राकृतिं doit s'accorder avec वक्त्रम् et l'on devrait le neutre पूर्णचन्द्राकृति.

[16] A : स्मे . स्वरमनिन्दितम् ; C : सस्मितं रम्यनिन्दितम् ; D : सस्पेरं रम्यनिन्दितम् ; E : सस्मितं रम्यमनिन्दितम्

[17] Cf. *Dīptāgama*, 16, 80-84 :
कृकाटपृष्ठग्रीवं च भागायतमिहोच्यते । अधस्तात्कोलकायामं शूर्पं तस्याकृतिर्भवेत् ॥
ककुदः कटिसन्धेश्च दशकलाङ्गुलमायतम् । तत्समं कक्षयोर्मध्ये प्रमाणं परिकीर्तितम् ॥
पृष्ठार्धं कटिसन्धिश्च त्रयोदशार्धाङ्गुलायतम् । ब्रह्ममात्रार्धविस्तारं पृष्ठमण्डलमेव च ॥
तत्समानतविस्तारं तदर्धं चोन्नतं भवेत् । ग्रीवाग्रस्य तु विस्तारं वसुमात्रार्धमङ्गुलम् ॥
ग्रीवमूलस्य विस्तारं नवमात्रार्धमिष्यते । सुवृत्तं ग्रीवमेवोक्तं द्विरेखापरिवेष्टितम् ॥

[18] Le mot कृकटि ayant le sens कृकाट, कृकाटक ou कृकाटिका ne se trouve pas dans les lexiques sanskrits ; C : आकटी pour कृकटी ; E : ककुदि pour कृकटी

[19] A : कु . न्ततः कटीसन्ध्यं pour ककुदः कटिसन्ध्यन्तं

[20] A : कक्षयान्मध्यं ; C : कृतयोर्मध्यं [21] D, E : कटिसन्धि च

कलाभिः [1]सप्तभिः प्रोक्तं वसुमात्रार्धसंमितम्[2] । ग्रीवाग्रविस्तरं [3]प्रोक्तं भागद्वितयसंयुतम्[4]॥
[5]तत्तारान्मूलतारं यत्तद्धवेदङ्गुलाधिकम् । [6]ग्रीवा सुवृत्ता निर्दिष्टा रेखाद्वितयवेष्टिता ॥

[ बाहुः[7] ]

हिक्कासूत्रादधो[8] [9]बाहू सप्तविंशाङ्गुलायतौ । [10]प्रकोष्ठौ च पृथक् स्यातामेकविंशाङ्गुलायतौ ॥
सप्ताङ्गुलौ पाणितलौ [11]मध्यमेऽर्धांशहीनके । [12]तर्जन्यनामिके स्यातां यवद्वयविहीनके॥८२॥
अङ्गुष्ठं च चतुर्मात्रं कनिष्ठा च तथा भवेत् । हिक्कासूत्रात्तु [13]कक्षान्तं [14]नवमात्रार्धमुच्यते॥८३॥
हिक्कासूत्रोपरि[15] स्कन्धौ गलपार्श्वे[16] द्विकोलकम्[17]। कोलकार्धं तदर्धं च [18]मध्यपर्यन्तयोर्भवेत्॥८४

---

[1] F : पृष्ठसप्ताभिः pour सप्तभिः प्रोक्तं

[2] A : संज्ञितम् pour संमितम्

[3] C : प्रोक्त pour प्रोक्तं

[4] A : संमितम् pour संयुतम्

[5] E : तत्तारं pour तत्तारात्

[6] A : ग्रीवा वृत्ता सुनिर्दिष्टा

[7] Cf. *Kāraṇāgama*, I, 11, 106b-121a :

हिक्कासूत्रात्क्रमेणोच्चं भागं कोलकमङ्गुलम् । अर्धाङ्गुलं क्रमात्क्षीणं बाहुपर्यन्तमेव वा ॥
वक्षःस्थलस्य चायामं दशभागं चतुर्यवम् । हिक्कासूत्रादधो बाहुः सप्तविंशतिमात्रकः ॥
गोपुरं कोलकायाममेकविंशत्प्रकोष्ठकम् । मध्याङ्गुलाग्रात्तस्याग्रात्सार्धत्रयोदशाङ्गुलम् ॥
सप्ताङ्गुलं तु चायामं शेषं मध्याङ्गुलायतम् । पाणेस्तलस्य विस्तारं सप्तमात्रमिति स्मृतम् ॥
तत्तारस्याष्टभागैकहीनमग्रस्य तारकम् । सार्धकोलकमात्रेण तालमूले घनं भवेत् ॥
षड्यवेनैकमात्रं तु तस्याग्रस्य घनं भवेत् । अनामिकाङ्गुलायामतन्मानानामिका भवेत् ॥
द्वियवोपेतभागेन अङ्गुष्ठस्य तु दैर्घ्यकम् । यवाधिकेन भागेन दैर्घ्यं कानिष्ठकस्य तु ॥
रसाब्धिरन्ध्रवस्वर्कयवतारं कनिष्ठिका । अङ्गुष्ठान्तं तथाग्रे तु अष्टभागैकहीनकम् ॥
अङ्गुल्यग्रं त्रिधा कृत्वा द्विभागं नखविस्तरम् । तत्तारेण यवोपेतं नखायामं प्रकीर्तितम् ॥
अङ्गुष्ठं तु द्विपर्वं स्यादन्याङ्गुल्यास्त्रिपर्वकम् । तलाग्रे त्वङ्गुलं नीत्वा द्विरेखामन्तरं कुरु ॥
तलमूलादेकरेखा मध्यमाङ्गुलिमूलका । मणिबन्धस्य विस्तारं भागमेकं प्रकीर्तितम् ॥
प्रकोष्ठमध्यविस्तारं त्रियवेन शराङ्गुलम् । प्रकोष्ठमूलतारं तु कौशिकाङ्गुलमुच्यते ॥
कूर्परस्य तु विस्तारं सार्धसप्ताङ्गुलं भवेत् । बाहुमध्यमविस्तारं सार्धयावकमुच्यते ॥
बाहुमूलस्य विस्तारं नवमर्धार्धमिष्यते । हिक्कासूत्रात्तु कक्षान्तं नवमात्रार्धमुच्यते ॥
कारयेदुपबाहू च मूलतारं गुणाङ्गुलम् । अध्यङ्गुलेन मध्ये तु शेषं पूर्ववदाचरेत् ॥

[8] A : सूत्रादयो pour सूत्रादधो

[9] A : बभ्रुः pour बाहू

[10] A : प्रकोष्ठयोः pour प्रकोष्ठौ च

[11] Le mot मध्यमे ayant le sens de "deux doigts médians" est un duel féminin et par conséquent est प्रगृह्य et doit être soustrait au सन्धि ; le सन्धि est appliqué peut être en raison du mètre.

[12] A : तर्जन्यानामिके

[13] F : कर्षान्तं

[14] C : नवपात्रार्धमुच्यते ; D : नवपात्रार्थमुच्यते

[15] A : हिक्कासूत्रपरिस्कन्धौ

[16] C, D : पार्श्वौ pour पार्श्वे ; E : पार्श्वौ

[17] C : द्विकालकम् ; D : द्विगोलकम्

[18] F : मध्यपर्यान्तरो भवेत्

[1]बाहुमूलस्य विस्तारं नवमात्रं तु सार्धकम् । बाहुमध्यगतं तारमष्टमात्रं यवाधिकम् ॥ ८५ ॥
[2]कूर्परस्य तु विस्तारं मुनिमात्रमिति स्मृतम् । प्रकोष्ठमूलगं तारं षण्मात्रं यवहीनकम् ॥ ८६ ॥
कोष्ठमध्यमविस्तारं [3]पञ्चाङ्गुलं यवाधिकम् । मणिबन्धस्य विस्तारं [4]त्रिमात्रं षड्यवाधिकम् ॥
[5]तलस्य [6]तिर्यङ्मानं तु पाण्योरायामवद्भवेत्[7] । एकादशयवं तारमङ्गुष्ठस्य प्रकीर्तितम् ॥८८
[8]तर्जन्या विस्तरं तत्र यवाष्टकमुदाहृतम् । यवाधिकं ततश्चापि [9]मध्यमं परिकल्पयेत् ॥८९॥
[10]तर्जनीवदनामा च पञ्चभिस्तैः कनिष्ठिका । सप्तार्धं चतुर्यवार्धं च [[11]पञ्चार्धं ][12]चतुरर्धकम् ॥
[13]त्रियवार्धं च विस्तारमङ्गुष्ठादिनखस्य तु । स्वविस्ताराद्यवाधिक्यं [14]नखानां दीर्घमुच्यते ॥
अङ्गुष्ठं तु द्विपर्वं स्याच्छेषाः पर्वत्रयान्विताः । [15]सर्वासां मूलविस्तारादग्रमष्टांशहीनकम् ॥ ९२

[हृदयम् उदरं च[16]]

[17]रेखात्रययुतं कुर्यात्तलं पाण्योर्जनार्दन । कक्षयोरन्तरं[18] चाथ त्रयोविंशाङ्गुलं भवेत् ॥९३॥
हिक्कास्तनान्तरे तारमर्धाधिकत्रयोदशम् । स्तनयोरन्तरं[19] तद्वत् [20]स्तनयोर्मण्डलेऽपि च॥९४॥
द्विद्व्यङ्गुलं भवेत्तारं तन्मध्ये चापि चूचुकम् । [21]यवद्वितयविस्तारं यवोत्सेधयुतं भवेत्[22]॥९५॥

---

[1] A : ब्राह्ममूलविस्तारं ; C : बाहुमूलविस्तारं

[2] C, D et E omettent les *śloka* 86 et 87a ; F : कोर्परस्य pour कूर्परस्य

[3] A : पञ्चाङ्गुलयवाधिकम्

[4] C et E : द्वि pour त्रि

[5] A : तस्य pour तलस्य

[6] E : निम्नमानं तु

[7] E : आसमवद्भवेत् pour आयामवद्भवेत्

[8] C : तर्जन्यं ; F : तर्जन्यां

[9] E : मध्यमौ

[10] D : तर्जनीपदनामा च

[11] Tous les manuscrits omettent le mot पञ्चार्धं ; correction sur la base de *Dīpta*, **16, 95**b : सप्तार्धं चतुरर्धं च पञ्चार्धं चतुरर्धकम् । त्रियवार्धं यवं तारमङ्गुष्ठादिनखस्य तु ॥

[12] A : चतुरश्रकम्

[13] Les mss. C, D et E omettent la portion entre le premier *pāda* du *śloka* 91a et le second *pāda* du *śloka* 92b et lisent : त्रियवार्धं च विस्तारमग्रमष्टांशहीनकम्

[14] A : नवानां दीर्घ उच्यते

[15] A : सर्वेषां

[16] Cf. *Kāraṇāgama*, I, 11, 121b-124 :
कक्षयोरन्तरं तिर्यक् चतुर्विंशतिमात्रकम् । हिक्का चुबु[चूचु?] कयोर्मध्ये सार्धत्रयोदशाङ्गुलम् ॥
स्तनयोरन्तरं यद्व[तद्व?] चूचुकं तु यवान्तकम् । द्वियवं तस्य विस्तारं मण्डलं तु द्विमात्रकम् ॥
हृत्प्रदेशस्य विस्तारं सार्धं त्रिस्त्र्यङ्गुलं भवेत् । जठरस्य तु विस्तारं सार्धत्रयोदशाङ्गुलम् ॥
cf. *Dīptāgama*, **16, 101**b-**102**a :
हृदयस्य च विस्तारमष्टादशाङ्गुलार्धकम् । उदरस्य तु विस्तारं पञ्चादशाङ्गुलार्धकम् ॥

[17] C : रेरे pour रेखा

[18] F : अन्तर: pour अन्तरं

[19] A : अन्तर: pour अन्तरं

[20] C : स्नानयोर् pour स्तनयोर्

[21] A et D : याव pour यव

[22] D ajoute : वक्षसश्चापि विस्तारं यवोत्सेधयुतं भवेत्

वक्षसश्चापि विस्तारं सार्धमष्टादशाङ्गुलम् । [1]उदरस्य तु विस्तारं [2]तिथ्यङ्गुलं तु सार्धकम्॥९६॥

[नाभिः, श्रोणी, कटिश्च[3]]

नाभिः [4]प्रदक्षिणावर्तस्तद्विस्तारं[5] तु षड्यवम् । [6]निम्नं यवद्वयं विद्यात्तारं श्रोणीगतं तु यत् ॥
[7]तच्चाप्यर्धाधिकैरेव भवेत्सप्तदशाङ्गुलैः । कटिप्रदेशविस्तारं नवभिश्च दशाङ्गुलम् ॥ ९८ ॥

[मेढ्रम्, ऊरुः, जानु च[8]]

भूताङ्गुलं यवाधिक्यं मेढ्रायाममिहोच्यते । [9]मुष्कश्च चतुरङ्गुल्यो [10]विस्तारायामतः समः॥९९॥
कोलकं तु यवाधिक्यं तन्मेढ्रस्य तु [11]विस्तरम् । ऊरुमूलस्य विस्तारं त्रयोदशाङ्गुलं भवेत्॥१००
अधस्तादूरुविस्तारं द्वादशाङ्गुलकं भवेत् । जानुमध्यस्य विस्तारं नवमात्रमुदाहृतम् ॥ १०१ ॥

---

[1] C, D, F: उदरं मध्यविस्तारं ; E: उदरमध्यविस्तारं [2] C: तीर्थाङ्गुलं

[3] Cf. *Dīptāgama*, **16**, 102b-**105**a:
नाभिः प्रदक्षिणावर्तः षड्यवं तत्र कारयेत् । निम्नं तु तद्यवार्धं च तत्पूर्वोक्तविधिक्रमम् ॥
श्रोणीप्रदेशविस्तारं सप्तदशाङ्गुलार्धकम् । नागेन्द्रस्य फणाकारमुच्छ्रायं बाणमङ्गुलम् ॥
कटिप्रदेशविस्तारं नवभिश्च दशाङ्गुलम् । शरीरं गोमुखाकारं कटेरूर्ध्वं विशेषतः ॥
cf. *Kāraṇāgama*, I, 11, 124b-127a:
यवद्वयं तु निम्नं स्याद्विस्तारं षड्यवं भवेत् । नाभिः प्रदक्षिणावर्ता विस्तारसममायतम् ॥
श्रोणिप्रदेशविस्तारं सार्धसप्तदशाङ्गुलम् । कट्यग्रस्य तु विस्तारं विंशत्यङ्गुलमुच्यते ॥
कटिमूलस्य विस्तारं द्वात्रिंशत्यङ्गुलं भवेत् । शरीरं गोमुखाकारं कट्या ऊर्ध्वं प्रशस्यते ॥

[4] C, D: प्रदक्षिणावर्ता pour प्रदक्षिणावर्तः; E: प्रदक्षिणावर्तं

[5] A: षष्ठस्तारं pour तद्विस्तारं ; F: षड्विस्तारं

[6] A: निम्नायामद्वयं [7] A: तच्चाप्यस्वाधिकैरेव

[8] Cf. *Kāraṇāgama*, I, 11, 127b-131:
शरमात्रयवोपेतं मेढ्रायामं विधीयते । वेदाङ्गुलमिति प्रोक्तं मुष्कविस्तारदीर्घके ॥
पक्षाङ्गुलप्रमाणेन एकैकवृषणं स्मृतम् । शेफं शीर्षाङ्गुलायामं तारं दशयवं भवेत् ॥
क्षयमग्रेऽष्टभागैकं मुकुलोत्पलवद्भवेत् । ऊरुमूलस्य विस्तारं सार्धत्रयोदशाङ्गुलम् ॥
तन्मध्ये मत्स्यविस्तारं यवमर्धाङ्गुलाधिकम् । ऊर्वग्रस्य तु विस्तारं सार्धरन्ध्राङ्गुलं भवेत् ॥
जानुमण्डलविस्तारं वसुमात्रार्धमिष्यते ।
cf. *Dīptāgama*, 16, 106-109:
बाणाङ्गुलयवाधिक्यं मेढ्रायतमिहोच्यते । मुष्कश्च चतुरङ्गुल्यो विस्तारायामतः समः ॥
एकैकं द्व्यङ्गुलं ज्ञेयं मुष्कविस्तारमेव च । कोलकं च यवाधिक्यं मेढ्रविस्तारमुच्यते ॥
ऊरुमूलस्य विस्तारं त्रयोदशार्धाङ्गुलं विदुः । अधस्तादूरुविस्तारं द्वादशार्धाङ्गुलं भवेत् ॥
जानुमध्यमविस्तारं नवमात्रार्धमिष्यते ।

[9] A: मुष्का च चतुरङ्गुल्या : E: मुष्कं स्याच्चतुरङ्गुल्यं

[10] A: सोतारायामन्तस्समा ; C, D: विस्तारायामतत्समा ; F: स्तोरणायामतस्समा

[11] C, E: विस्तरः

[जङ्घा, पादश्च[1]]

जङ्घामूलस्य विस्तारं जानुवत्परिकीर्तितम् । जङ्घामध्यमविस्तारं [2]सप्ताङ्गुलं यवाधिकम् ॥
[3]नलकस्य तु विस्तारं वेदाङ्गुलं [4]च सार्धकम् । [5]पञ्चाङ्गुलयवाधिक्यं तारं [6]पादतलस्य तु ॥
[7]पादाङ्गुष्ठायतं चैव [8]द्विकोलकमिति स्मृतम् । तस्माद्यवाधिका प्रोक्ता देशिनी [9]मध्यमाथ च ॥
[10]द्व्यर्धमात्रयुता प्रोक्ता दैर्घ्यमेवमुदीरितम् । त्रयोदशयवं[11] विद्यादङ्गुष्ठस्य [12]तु विस्तरम् ॥
अनन्तरा नन्दयवा[13] मध्या वसुयवा स्मृता । तस्मादर्धविहीनान्या[14] तस्मादन्यार्धहीनका॥१०६
[15]एवमङ्गुलिविस्तारं क्रमेण परिकीर्तितम् । अङ्गुष्ठाद्यङ्गुलीनां तु नखविस्तारमुच्यते ॥ १०७
[16]सार्धपञ्चयवं पश्चात् [17]सार्धं चापि चतुर्यवम् । चतुर्यवं ततः सार्धं त्रियवं द्वियवं क्रमात्॥१०८
विस्तारेण समं [18]दैर्घ्यं नखानां परिकीर्तितम् । [19]विस्तारत्रिगुणं [20]नाहं सर्वेषु परिकल्पयेत्॥१०९
दशतालोत्तमेनैवं[21] प्रतिमां परिकल्पयेत् ।

[मध्यमदशतालविधिः]

[22]मध्यमदशतालेन कर्तव्या यास्तु[23] देवताः[24] ॥ ११० ॥

---

[1] Cf. *Dīptāgama*, 16, 110-116a :
जङ्घामध्यमविस्तारमष्टाङ्गुलमुदीरितम् । नलप्रदेशविस्तारं चतुर्मात्रार्धमिष्यते ॥
तलप्रदेशे विस्तारं पञ्चाङ्गुलयवाधिकम् । पादाङ्गुष्ठक्रमाज्ज्ञेयं द्विकोलकसमायतम् ॥
चतुर्मात्रं यवाधिक्यं देशिन्यायाममिष्यते । मध्यायामं त्रिमात्रं वानामिका त्र्यङ्गुलं भवेत् ॥
कनिष्ठा द्व्यङ्गुलार्धं च मानमेतद्विधीयते । त्रयोदश नवाष्टौ च सप्तार्धं षड्यवार्धकम् ॥
अङ्गुष्ठादिषु विस्तारं यथावदनुपूर्वशः । अष्टार्धं चैव पञ्चार्धं चतुरर्धं चतुर्यवम् ॥
त्रियवार्धं यवं तारमङ्गुलीनां नखे स्मृतम् । विस्तारतः समायामं नखानां परिकीर्तितम् ॥
विस्तारत्रिगुणं नाहं सर्वेषां च विधीयते ।

[2] A : सप्ताङ्गुलयवाधिकम्
[3] A : नालकस्य
[4] A : तु pour च
[5] A : पञ्चाङ्गुलयवाधिक्यं
[6] A : पार pour पाद
[7] D : पादाङ्गुष्ठायतश्चैव ; F : पादाङ्गुष्ठायितं
[8] A : द्विकोलमिति विस्तृतम् ; F : द्विकोलमिति विस्मृतम्
[9] C : मध्यमाथवा ; D : मध्यमांश च ; F : मध्यमाय च
[10] C : मध्यमा त्रियुता प्रोक्ता ; F : द्व्यर्धमानयुता प्रोक्ता
[11] A : युतं pour यवं
[12] A : द्वि pour तु
[13] C : धवा pour यवा
[14] A et F : अन्यत् pour अन्या
[15] A : एवमङ्गुलविस्तारक्रमेण
[16] C : सार्धद्वियवं पश्चात् ; E : सार्धद्वययवं पश्चात्
[17] A : सार्धपञ्च चतुर्यवम्
[18] A : दीर्घं
[19] E : विस्तारात्त्रिगुणं ; F : विस्तारं त्रिगुणं
[20] F : नाभं pour नाहं
[21] A : एव pour एवं
[22] A : मध्यमं pour मध्यम
[23] E : च pour तु
[24] A : देवताम् pour देवताः

तासां [1]मानादि वक्ष्येऽहमङ्गुलैस्तत्तदुद्भवैः[2] । [3]देवमानवशान्मानं[4] [5]देवीनां परिकल्पयेत् ॥
कर्णान्तं कर्णनालान्तं[6] [7]हन्वन्तं वापि कारयेत् । बाह्वन्तं वापि [8]देवीनां देवमानात्प्रकल्पयेत् ॥

[ कायमानम् [9]]

लब्धोत्सेधेन यन्मानं कुर्याद्विंशच्छताङ्गुलम् । [10]उष्णीषात्केशपर्यन्तं [11]वेदाङ्गुलमिति स्मृतम् ॥
तस्मान्नेत्रान्तमुद्दिष्टं पञ्चांशं पादहीनकम् । [12]ततो नासापुटान्तं [13]स्यादर्धहीनशराङ्गुलम् ॥११४
नासापुटाच्च हन्वन्तं श्रुत्यंशं पादहीनकम् । हनोः [14]कण्ठाच्च भागं स्यात्कण्ठाच्च हृदयान्ततः[15]॥

---

[1] E : मानं प्रवक्ष्ये pour मानादि वक्ष्ये [2] F : तु तदुद्भवैः pour तत्तदुद्भवैः

[3] Cf. *Dīptāgama*, 17, 52-53 :
प्रतिमोत्सेधमानेन देवीमानं वदाम्यहम् । नास्यन्तमपि चास्यान्तमनुबाह्वन्तमेव च ॥
नास्यन्तमुत्तमं ज्ञेयमास्यान्तं मध्यमं भवेत् । बाह्वन्तमधमं ज्ञेयं देव्यास्तुङ्गमिहोच्यते ॥
cf. *Aṃśumatkāśyapa*, 57, 3b-6a :
शम्भोर्नासाग्रसीमान्तं शक्त्युच्चमुत्तमोत्तमम् । शम्भोर्वा स्तनसीमान्तमधमाधममुच्यते ॥
तयोर्मध्येऽष्टभागे तु नवधा शक्तिमानकम् । शम्भोर्हिक्कान्तमुत्कृष्टं स्तनान्तमधमाधमम् ॥
तयोर्मध्येऽष्टभागे तु नवधा शक्तिमानकम् । एवमष्टादशोत्सेधं पादादुष्णीषसीमकम् ॥

[4] C, E : देवमानमंशमानं [5] C : देवितां ; E : देवीं तां

[6] A : तालान्तं pour नालान्तं [7] A : मन्वन्तं pour हन्वन्तं [8] A : देवानां

[9] Cf. *Kāraṇāgama*, 12, 2b-8a :
यावदुत्सेधमानं तु भजेद्विंशच्छताङ्गुलम् । उष्णीषात्केशपर्यन्तं चतुर्मात्रमिति स्मृतम् ॥
केशान्ताद्धनुपर्यन्तं त्रयोदशाङ्गुलं भवेत् । केशान्तादक्षिसूत्रान्तं तत्त्रिभागैकमुच्यते ॥
अक्षिसूत्रात्पुटान्तं च तत्समं चेति कीर्तितम् । तत्पुटाद्धनुपर्यन्तं तत्समं त्वभिधीयते ॥
ग्रीवायामं चतुर्भागं हिक्कासूत्रात्स्तनान्तकम् । त्रयोदशाङ्गुलं प्रोक्तं तस्मान्नाभेस्तु तत्समम् ॥
नाभेस्तु योनिपर्यन्तं त्रयोदशाङ्गुलं भवेत् । योन्यर्वागग्रकान्तं च षड्विंशति च मात्रकम् ॥
जान्वायामं तु भागं स्याज्जङ्घा चाप्यूरुतः समम् । तलोत्सेधं चतुर्मात्रं कायमानमिति स्मृतम् ॥
cf. *Dīptāgama*, 17, 3-8 :
मूर्ध्नि पादे तयोर्मध्ये मानं तत्र निबोधयेत् । उष्णीषमङ्गुलं प्रोक्तं त्र्यङ्गुलं शिर उच्यते ॥
केशान्तादक्षिसूत्रान्तं पञ्चाङ्गुलमिति स्मृतम् । अक्षिसूत्रात्पुटान्तं तु चतुर्मात्रार्धमिष्यते ॥
नासिकाहनुपर्यन्तमर्धाधिक्यं [च] त्र्यङ्गुलम् । गलवृद्धिर्न कर्तव्यं ग्रीवायाश्चतुरङ्गुलम् ॥
हिक्कासूत्रात्स्तनान्तं च त्रयोदशाङ्गुलमिष्यते । अधस्तान्नाभिसीमान्तं तत्समं कारयेद्बुधः ॥
नाभिसीमात्तु योन्यन्तमङ्गुलं स्यात्त्रयोदश । तद्योन्या जानुसीमान्तं षड्विंशत्यङ्गुलायतम् ॥
तज्जानुमण्डलं भागं स्याज्जङ्घा चोरुतः समम् । तलोत्सेधं चतुर्मात्रमूर्ध्वमानं प्रकीर्तितम् ॥

[10] C, E : दक्षिणात् pour उष्णीषात् [11] F : देव pour वेद

[12] E et F omettent les demi-*śloka* 114b et 115a

[13] C : स्यादर्धं हीनांशकाङ्गुलम् [14] A : कर्णाच्च pour कण्ठाच्च ; D : कण्ठश्च

[15] A : कर्णाच्च हृदयान्ततः ; C, E : कर्णाच्च हृदयाततः

त्रयोदशाङ्गुलं ज्ञेयं तस्मान्नाभ्यन्तकं [1]तथा । तस्माच्च योनिपर्यन्तं तथैव परिकल्पयेत् ॥११६
तस्माच्च जानुपर्यन्तं [2]षड्विंशाङ्गुलमुच्यते । चतुरंशं भवेज्जानु[3] जङ्घा चोरुवदुच्यते ॥ ११७ ॥

[ अङ्गानां विस्तारः[4] ]

भागं पादतलोत्सेधं [5]तस्यायाममथोच्यते । विकारांशं तदायामं भागमङ्गुष्ठ[6]दैर्घ्यकम् ॥ ११८
[7]तर्जनी तत्समा ज्ञेया [8]हीनार्धार्धाङ्गुलाः पराः । रविनन्दयवैरष्टसप्तभिः षड्भिरेव च ॥११९
अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीनां तु विस्तृतम्[9] । [10]तत्तत्तारार्धमानेन [11]नखविस्तारमुच्यते ॥१२०
पादाग्रमध्यपार्ष्णीनां षट्पञ्चचतुरङ्गुलम् । विस्तारं [12]गुल्फविस्तारं भूताङ्गुलमिति स्मृतम् ॥
[13]नलकाविस्तारं चापि वेदाङ्गुलमिति स्मृतम्[14] । जङ्घामध्यमविस्तारं षण्मात्रमिति कीर्तितम् ॥
[15]जानु सप्तांशविस्तारं [16]मुखमूरुविशालकम् । चतुर्विंशतिमात्रं तु कटिविस्तारमुच्यते[17] ॥१२३
[18]श्रोणीललाटं तेष्वेव षण्मात्रमिति कीर्तितम् । अश्वत्थपत्रवद्योनिर्विस्तारं[19] चतुरङ्गुलम् ॥

---

[1] C : ततः pour तथा
[2] D : षड्विध pour षड्विंश
[3] E : जानू pour जानु
[4] Cf. *Aṃśumatkāśyapa*, 57, 16-21a :
कलांशं पादतलायामं पार्ष्ण्यङ्गुष्ठाग्रसीमकम् । तर्जन्यङ्गुष्ठयोर्दीर्घं चतुर्भागमुदाहृतम् ॥
सार्धत्रिभागं मध्यं स्यात्त्रिभागं तदनामिका । सार्धद्विभागमानं तु कनिष्ठाङ्गुलिदीर्घकम् ॥
द्विरष्टौ सार्धसप्तांशं पातालरसभिर्यवैः । अङ्गुष्ठादिकनिष्ठान्तं चरणाङ्गुलिविस्तृतम् ॥
त्रिद्व्यंशं तु नखव्यासं पादोनायतवर्तुलम् । अङ्गुलीनां मुखोच्चं तु नखव्याससमं भवेत् ॥
पादतलाग्रविस्तारं षण्मात्रमिति विद्यते । मध्ये पञ्चाङ्गुलं पार्ष्णिविस्तारं चतुरङ्गुलम् ॥
अक्षिगुल्फान्तविस्तारं पञ्चभागं विधीयते ॥
[5] C : तस्याधम pour तस्यायाम
[6] A : अङ्गुल्य pour अङ्गुष्ठ
[7] C, E : तर्जनीयसमाख्या या ; D : तर्जनीयं समाज्ञेया
[8] C, E : हीनार्धार्धाङ्गुलापराः
[9] C : विस्मृतम्
[10] A : तत्तारार्धमानेन ; E : तत्तारादर्धमानेन
[11] C, E : खन pour नख ; D : खन
[12] A : पुष्प pour गुल्फ
[13] Cf. *Aṃśumatkāśyapa*, 57, 21b-24 :
नलकाततिं वेदांशं जङ्घामध्यं रसाङ्गुलम् । जानुव्यासं तु सप्तांशं भान्वंशं ह्यूरुमूलकम् ॥
भानुद्विगुणभागं तु विस्तारं कटिबन्धयोः । योनिपीठविशालं तु सप्ताङ्गुलमुदाहृतम् ॥
योनितारं चतुर्भागमधोगाश्वत्थपत्रवत् । विस्तारसदृशोत्सेधं योनिं कुर्यात्समांसलम् ॥
श्रोणिस्थाने तु विस्तारं सयवं विंशदङ्गुलम् ।
[14] Le ms. A omet le demi-*śloka* 122a
[15] Le ms. F omet les *śloka* 123 et 124a
[16] Le mot मुखम् est pris ici dans le sens de द्वादशाङ्गुलम् ; cf. supra, *śloka* n° 40.
[17] C, E : इष्यते pour उच्यते
[18] श्रोणीललाटम् = श्रोण्यग्रभागः = முகப்பு
[19] A : विस्तरं pour विस्तारं

श्रोणीविस्तारमानं[1] तु विंशदङ्गुलमुच्यते । [2]नाभिः प्रदक्षिणावर्ता[3] गम्भीरं षड्यवं भवेत् ॥
विस्तारं च तथैव स्यान्नाभिदेशस्य विस्तरम् । एकादशाङ्गुलं ज्ञेयं तदूर्ध्वे चोदरस्य तु ॥१२६
[4]त्रयोदशाङ्गुलं [5]तारं स्तनाधस्तात्प्रकल्पयेत् । स्तनतारं नवाङ्गुल्यं चूचुकं त्र्यङ्गुलं भवेत्॥१२७
विस्तारार्धं [6]स्तनोत्सेधं तस्य पञ्चाङ्गुलार्धकम् । तदुन्नतं यवं विद्यात्कक्षयोरन्तरं[7] ततः[8]॥१२८
भवेत्सप्तदशाङ्गुल्यं बाहुभ्यां च तदूर्ध्वतः । एकविंशाङ्गुलं [9]तारं हिक्कासूत्रं ततो भवेत् ॥
बाहुदीर्घं च [10]षड्विंशमङ्गुलं [11]कूर्परं ततः । नेत्राङ्गुलं भवेत्पश्चादष्टाधिकदशाङ्गुलम् ॥१३०
प्रकोष्ठं [12]तु तलं चापि सप्ताङ्गुलमितीरितम्[13]। षडंशं [14]मध्यमादैर्घ्यं [15]पञ्चांशा तर्जनी भवेत् ॥

---

[1] F : मात्रं pour मानं

[2] Cf. *Dīptāgama*, 17, 16-17a :
नाभिः प्रदक्षिणावर्तः षड्यवं विस्तृतं भवेत् । निम्नं यवद्वयं विद्यान्नाभिकामानमिष्यते ॥
उदरमध्यविस्तारमुक्तमेकादशाङ्गुलम् ।
cf. *Aṃśumatkāśyapa*, 57, 25 :
नाभेश्च निम्नविस्तारं षड्यवं परिकीर्तितम् । मध्यमस्य विशालं तु रुद्राङ्गुलमुदाहृतम् ॥

[3] A : आवर्त pour आवर्ता ; E : आवर्तः ; F : आवर्तं

[4] Cf. *Aṃśumatkāśyapa*, 57, 26-36a :
स्तनाधस्तात्तु विस्तारं सार्धत्रयोदशाङ्गुलम् । स्तनतारं नवांशं स्याद्गुणांशं स्तनचूचुकम् ॥
स्तनोच्चं सार्धवेदांशमक्षमर्धाङ्गुलोन्नतम् । स्तनाक्षं च स्तनं चैव वृत्तं कृत्वातिसुन्दरम् ॥
स्तनान्तरं यवाष्टांशं छन्नवीरं तु तत्र वै । कक्षयोरन्तरं विप्र सप्तदशाङ्गुलं स्मृतम् ॥
बाहुपर्यन्तविस्तारमेकत्रिंशाङ्गुलं भवेत् । हिक्कासूत्रादधो बाहुदीर्घं षड्विंशदङ्गुलम् ॥
कूर्परोच्चं द्विभागं स्यात्प्रकोष्ठं द्विनवाङ्गुलम् । मणिबन्धात्तलायामं सप्ताङ्गुलमुदाहृतम् ॥
तस्मान्मध्याङ्गुलिः षड्भिः पञ्चांशे तर्जनी भवेत् । अनामिका तर्जनीतुल्यं भागोऽङ्गुष्ठकनिष्ठयोः ॥
अङ्गुलीनां तु दीर्घं च हस्तयोरुभयोरपि । नवसप्ताष्टसप्तर्तुयवाङ्गुष्ठादिविस्तृतम् ॥
तत्षडंशे चतुर्भागं नखतारमिहोच्यते । यवद्वयाधिकं तारं नखायामं तु तीक्ष्णवत् ॥
हस्तस्य तलविस्तारं पञ्चाङ्गुलं विधीयते । मणिबन्धविशालोऽग्निर्भूतांशं कूर्परस्य तु ॥
षडंशं बाहुमध्ये तु सप्तांशं बाहुमूलके । तस्मादामणिबन्धान्तं तरुणवेणुवत्कृशम् ॥
हस्तविस्तारमेवं स्यात् ''

[5] C : तारं स्तानाधस्तात्प्रकल्पयेत् ; F : तारस्ताना: तत्परिकल्पयेत्

[6] D : स्तनोत्सेधस्तस्य ; E : घनोत्सेधं तस्य

[7] A : अन्तरे pour अन्तरं

[8] A : तदिः pour ततः ; F : ततिः

[9] A : तारा pour तारं

[10] A : षड्विंशदङ्गुलं

[11] A : कोर्परं

[12] C, D, E : च pour तु

[13] D, E : उदीरितम् pour इतीरितम् ; F : इति स्मृतम्

[14] A : मध्यमाद्दैर्घ्यं

[15] A : पञ्चांशं

तथैवानामिकादैर्घ्यं[1] कनिष्ठा चतुरङ्गुला[2] । तथैवाङ्गुष्ठदैर्घ्यं [3]स्याद्विस्तारं तद्गतं पुनः ॥१३२
नवसप्ताष्ट[4]सप्तर्तुयवैरङ्गुष्ठपूर्वकम् । मूलादग्रे क्षयं चापि [5]तत्तदष्टांशमुच्यते ॥ १३३ ॥
मुनिवेदशरैर्वेदरन्ध्रैरपि[6] यवैः क्रमात् । [7]अङ्गुष्ठादिनखानां तु तारमग्नियवं ततः ॥१३४॥
[8]कनिष्ठायां तु कुर्वीत तत्तद्दैर्घ्यं [9]यवाधिकम् । कनिष्ठानामिकामध्यादेशिन्यश्च[10] त्रिपर्वकाः[11]॥
अङ्गुष्ठं तु [12]द्विपर्वं [13]स्यात्तले तारं षडङ्गुलम् । मणिबन्धस्य विस्तारं [14]वह्नयङ्गुलमुदीरितम् ॥१३६
[15]कूर्परं तु [16]शराङ्गुल्यं बाहुमध्यं षडङ्गुलम् । सप्ताङ्गुलं भवेद्बाहुमूलं चैव क्रमेण वै[17] ॥
[18]सप्ताङ्गुलं भवेत्कण्ठे[19] विस्तारं तु ततो मुखे । [20]रुद्राङ्गुलं तु विस्तारमेवं तारं प्रकीर्तितम् ॥
दशतालेन मध्येन [21]स्त्रीमानमिति कीर्तितम् ।

---

[1] C : दीर्घं pour दैर्घ्यं  [2] A : चतुरङ्गुलम्  [3] C : स्याच्चतुस्तारं गतं पुनः

[4] A : सप्तं तु pour सप्तर्तु ; C : सप्तात्तु ; E : सप्तैस्तु  [5] A : तत्तदंशान्तमुच्यते

[6] C, D, E : वेद रत्नैरपि pour वेदरन्ध्रैरपि ; F : वेदै रन्ध्रैरपि ; une meilleure lecture semble être वेदानलैरपि

[7] D : अङ्गुष्ठानि pour अङ्गुष्ठादि  [8] F : कनिष्ठिकायां pour कनिष्ठायां तु  [9] E : यवादिकम्

[10] A : मध्याद्देशिन्यश्च pour मध्यादेशिन्यश्च ; C : मध्यादेशिक्यश्च ; E : मध्यादेशिनीनां

[11] A : त्रिपर्विका ; C, E : त्रिपर्वका ; D : त्रिपूर्वकाः

[12] C : त्रि pour द्वि  [13] A : स्यात्तलेताधिषडङ्गुलम् ; E : स्यात्तलतारं षडङ्गुलम्

[14] C : बाह्याङ्गुल pour वह्नयङ्गुल  [15] A : कोर्परं

[16] D : शत pour शर  [17] C, E : तु pour वै

[18] Cf. *Aṃśumatkāśyapa*, 57, 36-43a :

"सप्तांशं ग्रीवविस्तरम् । अग्रे मूले तु विस्तारं षडशं स्याद्यवाधिकम् ॥
रुद्रांशं मुखविस्तारं कुक्कटाण्डसमाकृतिः । भ्रूकेशान्तयोर्मध्यं सार्धद्व्यङ्गुलकं भवेत् ॥
भ्रूमध्यान्नेत्रसूत्रान्तं सपादद्व्यङ्गुलं भवेत् । पुटादास्यावसानं तु सयवैकाङ्गुलं भवेत् ॥
तदर्धं गोजिदीर्घं तु तस्यार्धं तस्य विस्तृतम् । अधरं सयवाङ्गुल्यं शेषं हन्वन्तमानकम् ॥
कर्णवेशं तु चिबुकात्सार्धत्र्यङ्गुलकं भवेत् । द्विभागं कर्णविस्तारं सपादं चतुरंशकम् ॥
कर्णदीर्घमिति ख्यातं तस्मान्नालं प्रलम्बयेत् । नालालम्बं तु पञ्चांशं कर्णबन्धनसंयुतम् ॥
हस्तिहस्तोपमं पादं हस्तं गोपुच्छवत्कृतम् । शेषमुत्तमतालोक्तमार्गेणैव समाचरेत् ॥
स्त्रीणां सामान्यमेतद्धि"

[19] A : कर्ण pour कण्ठे ; D : कण्ठं ; E : कर्ण

[20] A : रुद्राङ्गुलं तु विस्तारमेवारान्तं ; E : रुद्राङ्गुलमुविस्तारमेवान्तरं

[21] F : स्त्रीमानं परिकीर्तितम्

[ अधमदशतालविधिः[1] ]

अधमे दशताले तु [2]भाजिते [3]षोडशाधिकैः ॥ १३९ ॥
अङ्गुलानां शतैस्तैस्तैरङ्गकल्पनमुच्यते । उष्णीष[4]कण्ठजानूनां [5]तलस्यापि समुच्छ्रयम् ॥१४०
चतुरङ्गुलमुद्दिष्टं प्रत्येकं तु विशेषतः । [6]सार्धं रव्यङ्गुलं वक्त्रं [7]तद्वद्वक्षस्तथोदरम् ॥ १४१ ॥
तद्वन्मेढ्रं समुद्दिष्टं पञ्चविंशाङ्गुलं [8]ततः । ऊरुमानं[9] तथा जङ्घा शेषं पूर्ववदाचरेत् ॥१४२॥
कन्यसे दशताले तु देवानेवं[10] प्रकल्पयेत् ।

[ उत्तमनवतालविधिः[11] ]

[12]नवतालोत्तमं चापि ताल[13]गण्यमथोच्यते ॥ १४३ ॥
[14]मूर्ध्नि केशान्तमानं तु चतुरङ्गुलमुच्यते । [15]केशान्तादक्षिसूत्रान्तं[16] तस्माच्चैव[17] पुटान्तकम् ॥
[18]पुटान्ताद्धनुपर्यन्तं प्रत्येकं चतुरङ्गुलम् । [19]अर्धाङ्गुलं गले वृद्धिः [20]कण्ठं [21]सार्धगुणाङ्गुलम् ॥

---

[1] Cf. *Aṃśumatkāśyapa*, 58, 3-7 :
कलाधिकशतांशं स्यादधमं दशतालकम् । उष्णीषमङ्गुलं प्रोक्तं केशान्तं तु गुणाङ्गुलम् ॥
केशान्ताद्धनुपर्यन्तं सार्धभान्वङ्गुलं भवेत् । युगाङ्गुलमिति प्रोक्तं कण्ठमानं द्विजोत्तम ॥
हिक्कादिस्तनसूत्रान्तं सार्धभान्वङ्गुलं भवेत् । स्तनाधो नाभिपर्यन्तं तत्समं चेति कीर्तितम् ॥
नाभेस्तु मेढ्रमूलान्तं सार्धद्वादशमात्रकम् । तन्मेढ्रमूलादूर्वग्रं पञ्चविंशतिमात्रकम् ॥
वेदाङ्गुलं तु जानु स्याज्जङ्घायामूरुदीर्घकम् । वेदांशं चरणोत्सेधं तुङ्गमेवं विधीयते ॥

[2] F : भादिते
[3] A : षोडशांशकैः
[4] A : कर्ण pour कण्ठ ; C, E : खण्ड
[5] D : ताल pour तल ; le mot तल est pris ici dans le sens de पाद
[6] A : सार्धं रम्यं कुलं वक्त्रं ; C : सार्धरस्यङ्गुलं वक्त्रं ; D : सार्धरव्यङ्गुलं वक्त्रं
[7] A : तद्वक्त्रं च तथोदरम् ; D, F : तद्वद्वक्त्रं तथोदरम्
[8] C, E : ततम् pour ततः
[9] F : ऊरुमारं
[10] A : एव pour एवं
[11] Cf. *Aṃśumatkāśyapa*, 59, 2b-7a :
सद्वादशशतांशे तु बेरमाने विभाजिते । उष्णीषमेकभागेन केशान्तं तु गुणाङ्गुलम् ॥
केशान्तादक्षिसूत्रान्तं वेदमात्रं विधीयते । तस्मान्नेत्रात्पुटान्तं च वेदमात्रमुदीरितम् ॥
पुटान्ताद्धनुपर्यन्तं वेदांशं प्रविधीयते । कण्ठमानं तु वेदांशं भान्वंशं हृदयावधि ॥
हृदयान्नाभिसीमान्तं तावद्द्वादशमात्रकम् । नाभ्यादिमेढ्रमूलान्तं भानुमात्रं विधीयते ॥
ऊरुदीर्घं चतुर्विंशादंशं जानु युगांशकम् । जङ्घादीर्घं चोरुतुल्यं वेदांशं चरणोदयम् ॥

[12] A : नवतालोत्तमे चैव ; F : नवतालोक्तमेवापि
[13] F : गर्ह्य pour गण्य
[14] E : मूर्ध pour मूर्ध्नि
[15] F : शैलान्ताद् pour केशान्ताद्
[16] C : सूत्रान्ता pour सूत्रान्तं
[17] A : एव pour एवं
[18] C : पुटान्ता धनुपर्यन्तं ; F : पुटान्तार्धानुपर्यन्तं
[19] F omet les *śloka* 145b et 146
[20] A, C, E : कर्णं pour कण्ठं
[21] A : सार्धाङ्गुलांशकम्

कण्ठाद्धृद्देशपर्यन्तं तस्मान्नाभ्यन्तमेव च । नाभेर्मेढ्रान्तकं[1] चापि प्रत्येकं द्वादशाङ्गुलम् ॥ १४६

ऊरू द्वितालमानेन [2]जानू [3]वेदाङ्गुलौ स्मृतौ । जङ्घा द्वितालमानेन [4]तलौ च [5]चतुरङ्गुलौ ॥

[ मध्यमनवतालविधिः[6] ]

नवतालोत्तमं प्रोक्तं [7]गण्यमानवशाद्वरे । [8]वेदाङ्गुलविहीनं स्यान्नवतालस्य मध्यमम् ॥१४८॥

नवतालोत्तमात्तस्माद्ध्रासस्थानमथोच्यते । [9]जङ्घायामङ्गुलं प्रोक्तमूरावङ्गुलमेव हि ॥ १४९ ॥

[10]मेढ्रदेशेऽङ्गुलं चैव [11]वक्त्रे चाप्यङ्गुलं भवेत् । एवं मध्यमतालं[12] स्याद् ;

[ अधमनवतालविधिः[13] ]

अधमे नवतालके॥

[14]हिक्कानाभ्यन्तरे [15]हीनं नेत्राङ्गुलमुदीरितम् । ऊरावेकाङ्गुलं तद्वज्जङ्घायामं प्रकीर्तितम् ॥

---

[1] E : अन्तरं pour अन्तकं

[2] Le mot जानु se trouve au masculin au lieu du neutre dans ce texte; cf. *Rauravāgama*, vol. I, p. 69, note 6.

[3] A : देवाङ्गुलौ

[4] A : तरौ ; F : तारौ ; le mot तलौ est pris ici dans le sens de पादौ ; cf. supra, p. 21, note 5

[5] D : चतुरङ्गुलम्

[6] Cf. *Aṃśumatkāśyapa*, 60, 2b-7a :
अष्टोत्तरशतांशे तु प्रतिमोच्चे विभाजिते । उष्णीषं व्योमभागेन केशं पादोनकं त्रिकम् ॥
केशान्तान्नेत्रसूत्रान्तं युगांशं तद्यवोनकम् । पुटान्तं चैव तत्तुल्यं हन्वन्तं च तथा भवेत् ॥
पादोनचतुरंशं तु ग्रीवमानमुदाहृतम् । भानुश्चाग्नियवोनं तु हिक्कादाहृदयावधि ॥
नाभ्यन्तं चैव तत्तुल्यं मेढ्रमूलान्तकं तथा । पादाधिकगुणोपेतं विंशांशं चोरुदीर्घकम् ॥
जानुग्रीवसमं तुङ्गं जङ्घा चोरुसमं भवेत् । जानुतुल्यं तलोत्सेधम् ”

[7] C : गण्यमानं वशाद्वरे

[8] A : वेदाङ्गुलद्विहीनं ; C : वेदाङ्गुलं विहीनं

[9] A : जङ्घायामं गलं

[10] A : मेढ्रदेशाङ्गुलं

[11] A : मध्ये pour वक्त्रे

[12] A : ताले pour तालं

[13] Cf. *Śilparatna*, vol. II, 10, 1-5a :
उष्णीषोच्चं शिवांशं स्यात्केशं सार्धद्विभागया । केशान्तान्नेत्रसूत्रान्तं पादोनचतुरंशकम् ॥
तथैव तस्मान्नासान्तं तथा तद्धनुसीमकम् । सार्धलोकाङ्गुलं ग्रीवातुङ्गमानं ततः पुनः ॥
हृदयान्तं ततो नाभिसीमान्तं च ततः पुनः । मेढ्रान्तं च पृथक् पादयुक्तरुद्रांशमानकम् ॥
ऊरुदीर्घं तथार्धोनत्रयोविंशांशकं स्मृतम् । गलतुङ्गसमं जानु जङ्घामूरुवदाचरेत् ॥
गुल्फमानं तु सार्धाग्निभागमेव विधीयते ॥

[14] A : हिक्कां pour हिक्का

[15] D, E : हीन pour हीनं

[ अष्टतालविधिः[1] ]

नवतालाधमं[2] प्रोक्तमष्टतालमथोच्यते । द्विमात्रं तु शिरो ज्ञेयं मुखमेकादशाङ्गुलम् ॥१५२॥
[3]कण्ठायामं त्रिमात्रं स्यात् [4]कण्ठाद्धृदयमेव च । [5]हृद्देशान्नाभिपर्यन्तं [6]मुखायामवदिष्यते॥१५३
नाभेस्तु मेढ्रपर्यन्तं पङ्क्त्यङ्गुलमुदीरितम् । एकविंशाङ्गुलं [7]चैवमूर्वोश्चापि प्रकल्पयेत् ॥१५४
[8]जानु त्रिमात्रमुद्दिष्टं जङ्घा [9]चोरुवदुच्यते । त्रिमात्रं स्यात्तलोत्सेधमुक्तं [10]स्याद्वसुतालकम् ॥

[ सप्ततालविधिः[11] ]

मुनितालमथो वक्ष्ये तालगण्याङ्गुलेन तु । उष्णीषमङ्गुलं ज्ञेयं वक्त्रं रुद्राङ्गुलं भवेत् ॥१५६
[12]कण्ठं [13]त्रियङ्गुलं ज्ञेयं [14]कण्ठान्नाभ्यन्तकं ततः । अष्टादशाङ्गुलं सार्धं [15]नाभेर्मेढ्रमतः परम् ॥
सार्धं वस्वङ्गुलं [16]ज्ञेयमूरुश्चैकोनविंशकः । [17]जानू [18]त्रियङ्गुलौ ज्ञेयौ जङ्घा [19]चोरुवदिष्यते ॥
[20]ततः पादतलोत्सेधं[21] जानुवत्परिकल्पयेत् । सप्ततालमिति प्रोक्तम् ;

---

[1] Cf. *Aṃśumatkāśyapa*, 62, 1-6a :
अथ वक्ष्ये विशेषेण अष्टतालविधिं परम् । शतांशं चैव बिम्बोच्चं कृत्वोष्णीषं शिवांशकम् ॥
सार्धद्व्यंशं तु केशान्तं केशान्ताद्धनुसीमकम् । पादोनरुद्रभागं स्यात्तत्त्रिभागे विभाजिते ॥
शिवांशं त्वक्षिसूत्रान्तं पुटान्तं चैव तत्समम् । पुटान्ताद्धन्वन्तकं शेषं सार्धाग्न्यंशं गलोदयम् ॥
हिक्कादिहृदयान्तं तु रुद्रांशं द्वियवोनकम् । नाभ्यन्तं चैव तत्तुल्यं मेढ्रमूलान्तकं तथा ॥
सार्धत्रिसप्तभागं च ऊरुदीर्घमुदाहृतम् । जानुकण्ठसमं तुङ्गं जङ्घा चोरुसमा भवेत् ॥
जानुतुल्यं तलोत्सेधम् ''

[2] A : समं pour अधमं [3] A : कर्णायामं [4] A : कर्णाद् pour कण्ठाद्
[5] A : हृद्देशे नाभिपर्यन्तं [6] D : मुखायाम इतीष्यते [7] A, F : चैव ऊर्वोश्चापि
[8] A : जानूक्तमात्रमुद्दिष्टं ; E : जानू त्रिमात्रमुद्दिष्टं [9] A : चोरु यदुच्यते [10] C, E : स्याच्च सुतालकम्

[11] Cf. *Aṃśumatkāśyapa*, 63, 1-5a :
अथ वक्ष्ये विशेषेण सप्ततालविधिं परम् । पिशाचप्रतिमोत्सेधमष्टाशीत्यंशकं भवेत् ॥
उष्णीषमर्धभागेन केशान्तं शशिभागया [तः] । सार्धद्व्यंशं तु नेत्रान्तं सार्धाग्न्यंशं पुटान्तकम् ॥
चिबुकान्तं च तत्तुल्यं वेदांशं तु गलोदयम् । स्तनान्तं सप्तभागं तु रुद्रांशं नाभिसीमकम् ॥
तथा वै योनिमूलान्तं विंशांशं चोरुदीर्घकम् । जानुमानं द्विभागेन जङ्घा चोरुसमा भवेत् ॥
चरणोच्चं द्विभागेन ''

[12] A : कर्णं pour कण्ठं ; le mot कण्ठ se trouve au neutre au lieu du masculin dans ce texte ; cf. *Rauravāgama*, vol I, p. 69, note 6.

[13] Cf. *Ajitāgama*, vol I, p. 81, note 11 [14] A : कर्णनासान्तकं ; C, E : कर्णान्नाभ्यन्तरं
[15] A : नाभेर्मेढ्रान्ततः [16] A : ज्ञेयं मूलश्चैकोनविंशकम् ; E : ज्ञेयमूरू चैकोनविंशकम्
[17] Cf. supra, p. 22, note 2
[18] Cf. supra note 13 ; A : उक्त्यङ्गुलौ pour त्रियङ्गुलौ ; D : त्र्यङ्गुलौ ; E : त्रयाङ्गुलौ
[19] D : वा pour च [20] Le ms. D omet les *śloka* 159 à 161 [21] A : उत्सेधात् pour उत्सेध

[ षट्तालविधिः[1] ]

षट्तालमधुनोच्यते ॥ १४९ ॥
उष्णीषमङ्गुलं ज्ञेयं [2]वक्त्रं रुद्राङ्गुलं भवेत् । [3]कण्ठं च त्र्यङ्गुलं तत्र [4]कण्ठान्मेढ्रान्तमेव च॥
[5]एकोनविंशदङ्गुल्यमूरुमध्याङ्गुलं भवेत् । [6]सार्धं जानु त्रिमात्रं स्याज्जङ्घा चोरुवदिष्यते ॥
जानुवत्स्यात्तलोत्सेधं षट्तालमिति कीर्तितम् ।

[ पञ्चतालविधिः[7] ]

पञ्चतालमथो वक्ष्ये तालगण्येन भाजिते ॥ १६२ ॥
उष्णीषमङ्गुलं ज्ञेयं [8]मुखं नन्दाङ्गुलं भवेत्। [9]ग्रीवा तु द्व्यङ्गुलोच्छ्रेया तस्मान्मेढ्रान्तमेव हि[10] ॥
एकविंशाङ्गुलं ज्ञेयमूरुः[11] स्याद्द्वादशाङ्गुलः[12] । [13]द्व्यङ्गुलं तु भवेज्जानु जङ्घा रुद्राङ्गुलं भवेत् ॥
द्व्यङ्गुलं तु तलोत्सेधमुक्तं स्यात्पञ्चतालकम् ।

[ चतुस्तालविधिः[14] ]

चतुस्तालमथो वक्ष्ये तत्र लब्धाङ्गुलैः क्रमात् ॥ १६५ ॥

---

[1] Cf. *Śilparatna*, vol. II, 13, 1-4a :
अथ षट्तालम् । उष्णीषमर्धभागं स्यादेकांशं केशमानकम् । सार्धवस्वङ्गुलं प्राग्वत्केशान्ताद्धनुसीमकम् ॥
गलोदयं त्रिभागार्धं मुखतुल्यमतः पृथक् । हिक्कादिहृदयान्तं च नाभ्यन्तं च ततः क्रमात् ॥
तस्मान्मेढ्रस्य मूलान्तमूरू चात्यष्टिभागतः । सार्धभागं जानुदीर्घं जङ्घा चोरुसमोन्नता ॥
आगुल्फतलतुङ्गं तु सार्धभागमुदाहृतम् ।

[2] C, E : मुखं नन्दाङ्गुलं [3] A, F : कर्णं pour कण्ठं [4] A: कर्णं pour कण्ठात् ; C,E : कर्णात्

[5] La forme grammaticale correcte est एकोनविंशकाङ्गुल्यम्

[6] A : सार्धजातु ; F : सार्धं जानू

[7] Cf. *Śilparatna*, vol. II, 14, 1-4a :
[ पञ्चतालम् ]
मूर्ध्नो मस्तकसीमान्तमङ्गुलद्वयमुच्यते । तस्माद्वै नेत्रसूत्रान्तं चतुर्मात्रमुदाहृतम् ॥
ततोऽष्टमात्रमानं तु हनुसीमान्तमाततम् । गलं तु चतुरंशं स्याद्दशांशं हृदयं ततः ॥
ततो नाभिस्ततो मेढ्रं नवांशमिति कथ्यते । ऊरू सार्धषडंशोच्चौ जानुनी गुणभागतः ॥
जङ्घा चोरुसमायाता तलोत्सेधं गुणांशकम् ।

[8] D : वक्त्रं मन्वङ्गुलं भवेत्

[9] C : ग्रीवा तद्व्यङ्गुलं ज्ञेयं ; D : ग्रीवा तु द्व्यङ्गुला ज्ञेया ; E : ग्रीवा च त्र्यङ्गुला ज्ञेया

[10] C, E : च pour हि [11] E : ऊरू pour ऊरुः [12] A : अङ्गुलं pour अङ्गुलः

[13] E : द्व्यङ्गुले चैव जानू द्वे

[14] Cf. *Śilparatna*, vol. II, 15, 1-4a :
अथ चतुस्तालम् । एकाङ्गुलं शिरोमानं केशान्तं चैव तत्समम् ॥
द्विभागं नेत्रसूत्रान्तं पुटान्तं चैव तत्समम् । गुणांशं हनुसीमान्तं ग्रीवोच्चं तु गुणाङ्गुलम्॥
हिक्कासूत्रात्स्तनान्तं तु नवभागमुदाहृतम् । स्तनात्तु मेढ्रमूलान्तं सप्तमात्रमिति स्मृतम् ॥
भान्वंशमूरुदीर्घं स्याज्जानु द्व्यङ्गुलमेव हि । जङ्घादीर्घं दशांशं तु द्व्यंशं पादतलोन्नतम् ॥

अङ्गुलं स्यात्तदुष्णीषं [1]वक्त्रमर्काङ्गुलं भवेत् । [2]कण्ठं द्व्यङ्गुलमानं स्यात् [3]कण्ठात्सप्ताङ्गुलं ततः॥
हृदयान्तं समुद्दिष्टं [4]हृदयान्नाभिस्तथैव च । तस्माच्च मेढ्रपर्यन्तं षडङ्गुलमुदीरितम् ॥ १६७ ॥
[5]ऊरुः पञ्चाङ्गुलोत्सेधो [6]जानु स्यादङ्गुलद्वयम् । जङ्घा [7]वेदाङ्गुला [8]ज्ञेया तलोत्सेधं तु जानुवत् ॥

[ त्रितालविधिः[9] ]

[10]चतुस्तालमिति प्रोक्तं [11]गुणतालमतः शृणु । उष्णीषमङ्गुलं प्रोक्तं वक्त्रमष्टाङ्गुलं भवेत् ॥१६९
[12]कण्ठं नेत्राङ्गुलं ज्ञेयं [13]कण्ठान्मेढ्रान्तमेव च । मन्वङ्गुलं तु [14]विज्ञेयमूरुर्वेदाङ्गुलो भवेत् ॥१७०
[15]जानु च द्व्यङ्गुलं ज्ञेयं जङ्घा च त्र्यङ्गुला स्मृता । तलं जानुवदुद्दिष्टमेवमुक्तं त्रितालकम् ॥१७१
एवं मानं समुद्दिष्टं समासात्तालनिश्चितम् । [16]प्रमाणादन्यमानानि यथायुक्त्या प्रकल्पयेत् ॥
सर्वेष्वेतेषु तालेषु [17]तैस्तालैरुक्तलक्षणैः । याः [18]क्रियन्ते सुराणां तु प्रतिमा देवसत्तम ॥१७३
तासां सामान्यतः प्रोक्तं सर्वासां लक्षणं मया । विशेषलक्षणं वक्ष्ये [19]तच्छृणु त्वं जनार्दन ॥

[ दश माहेश्वराणि रूपाणि[20] ]

पूर्वं लिङ्गोद्भवं रूपं सुखासीनं [21]द्वितीयकम् । तृतीयं [22]गौरिसहितमुन्मत्तं[23] स्याच्चतुर्थकम् ॥१७५
पञ्चमं तु [24]भवेद्रूपं [25]कङ्कालधरमेव च । नृत्तरूपं तु षष्ठं स्यात्त्रिमूर्ति[26] [27]सप्तमं भवेत् ॥१७६

---

[1] F : वज्रकर्माङ्गुलं

[2] A : कर्ण pour कण्ठं ; F: कर्ण

[3] A : कर्णात् pour कण्ठात्

[4] A : हृदयं नाभिस्तथैव च ; E : हृदो नाभिस्तथैब च

[5] A : ऊरू पञ्चाङ्लोत्सेधे

[6] E : जानू pour जानु

[7] A : देवाङ्गुला ; E: वेदाङ्गुलं

[8] C, E : ज्ञेयमूरु वेदाङ्गुलं भवेत्

[9] Cf. *Brāhmīyacitrakarmaśāstra*, 14, 239-240 :
त्रिताले तु शिरोऽङ्गुल्यं मुखं रुद्राङ्गुलं भवेत् । कण्ठं[तु]द्व्यङ्गुलं कण्ठाद्धृन्नाभिश्च द्विभागिकम् ॥
नाभेर्मेढ्रं च वस्वंशमेवं श्रेष्ठं त्रितालकम् । द्विकोलकं तनौ हीनं भवेन्मध्यं त्रितालकम् ॥
मुखेऽङ्गुलं त्रयं काये हीनं हीनमुदाहृतम् ।

[10] C et E omettent les *śloka* 169 et 170

[11] Le ms. F omet la portion entre le premier *pāda* du *śloka* 169a et le second *pāda* du *śloka* 169b et lit : चतुस्तालमिति प्रोक्तं वक्त्रमष्टाङ्गुलं भवेत्

[12] A : कर्ण pour कण्ठं

[13] A : कर्णात् pour कण्ठात्

[14] A : विज्ञेयमूरु वेदाङ्गुलं भवेत् ; F : विज्ञेयमूरु देवाङ्गुलं भवेत्

[15] E : जानू pour जानु

[16] A : प्रमाणाद्यन्यमानानि

[17] F : तैस्तालैर्नृत्तलक्षणैः

[18] A : क्रियान्ते

[19] F : तच्छृणुष्व

---

[20] Cf. *Dīptāgama*, **16, 117-121** :

षोडशप्रतिमाकारो वक्ष्यते विधिना पुरा । प्रथमं सुखासनं प्रोक्तं वैवाहिकं द्वितीयकम् ॥
तृतीयमुमया युक्तं वृषारूढं चतुर्थकम् । पञ्चमं त्रिपुरघ्नं च नृत्तरूपं च षष्ठकम् ॥
चन्द्रशेखरमेवोक्तं सप्तमं तु विधीयते । अष्टमं चार्धनारीशं नवमं हरिरर्धकम् ॥
चण्डेश्वरप्रसादं तु दशमं परिकीर्तितम् । कामार्यैकादशं प्रोक्तं द्वादशं कालनाशनम् ॥
त्रयोदशं दक्षिणामूर्तिर्भिक्षाटनमतः परम् । सदाशिवं पञ्चदशं लिङ्गोद्भवं च षोडश ॥

cf. *Kāraṇāgama*, I, 11, 150b-155a :

पूर्वं लिङ्गोद्भवं बिम्बं द्वितीयं चन्द्रशेखरम् । तृतीयं दक्षिणामूर्तिं चतुर्थं कामनिग्रहम् ॥
पञ्चमं तु विवाहं स्यादुमया सहितं तु षट् । सप्तमं तु वृषारूढमष्टमं त्रिपुरान्तकम् ॥
नवमं चार्धनारीशं कङ्कालं दशमं भवेत् । नृत्तमूर्ति ततः प्रोक्तं भिक्षाटनमतः परम् ॥
त्रयोदशं तु कालारिर्हरिरर्धं चतुर्दश । सुखासनं ततः प्रोक्तं गङ्गाधरं तु षोडशम् ॥
चण्डेशानुग्रहं पश्चान्मुखलिङ्गमतः परम् । अष्टादशानामेतेषां बिम्बरूपं वदाम्यहम् ॥

cf. *Vātulaśuddhākhya*, 1, 121-122a et 126b-134 :

कर्मेशस्य सहस्रांशान्महेशस्य समुद्भवः । महेशं सकलं विद्यात्सृष्टिस्थितिलयात्मकम् ॥
पञ्चविंशतिभेदैस्तु तन्मूर्तिर्विविधा भवेत् ।.... प्रथमं सोमधारी स्याद् द्वितीयमुमया सह ॥
तृतीयं तु वृषारूढश्चतुर्थं नृत्तरूपकम् । वैवाह्यं पञ्चमं विद्यात् षष्ठं भिक्षाटनं भवेत् ॥
कामारिं सप्तमं विद्यात्कालारिश्चाष्टमो भवेत् । नवमं त्रिपुरारिः स्याज्जलन्धरवधो दश ॥
एकादशं गजारिः स्याद् द्वादशो वीरभद्रकः । त्रयोदशो हरेरर्धमर्धनारिश्चतुर्दश ॥
किरातः स्यात्पञ्चदशः कङ्कालः षोडशो भवेत् । चण्डेशानुग्रहः सप्तदशेति परिकीर्तितः ॥
विषापहरणश्चाष्टादशेति समुदाहृतः । चक्रदानस्वरूपं च एकोनविंशति स्मृतम् ॥
विंशतिर्विघ्नप्रसादः सोमास्कन्दस्ततः परम् । उमास्कन्दश्चैकविंशो द्वाविंशश्चैकपादकः ॥
सुखावहस्त्रयोविंशो भवेच्च तदनन्तरम् । दक्षिणामूर्तिरूपं तु चतुर्विंशतिरीरितम् ॥
लिङ्गोद्भवस्वरूपं तु पञ्चविंशतिरीरितम् । एते महेशरूपाश्च मूर्तिभेदाः प्रकीर्तिताः ॥

[21] D : तृतीयकम्

[22] La forme grammaticale correcte est गौरीसहितम् ; mais le mètre ne serait pas respecté.

[23] F : उत्तमं pour उन्मत्तं ; le mot उन्मत्तं est pris ici dans le sens de भिक्षाटनमूर्ति

[24] C, D, E, F : भवो रूपं  [25] A : कालकन्धरमेव च  [26] A : त्रिमूर्तिः pour त्रिमूर्ति

[27] C, D, E : सप्तमा

[1]चक्रप्रसादरूपं स्यादष्टमं नवमं [2]ततः । चन्द्रशेखरमुद्दिष्टं [3]देव्यर्धं दशमं भवेत् ॥ १७७ ॥
एवं [4]माहेश्वरं प्रोक्तं रूपाणां [5]दशकं मया । [6]अथ रौद्रं प्रवक्ष्यामि [7]रूपं नानाविधं भवेत् ॥

[ दश रौद्ररूपाणि ]

प्रथमं दक्षिणामूर्ति[8] द्वितीयं कामनाशनम् । तृतीयं [9]कालनाशं [10]स्याद्वैवाह्यं स्यात्ततः परम् ॥
स्कन्दोमासहितं[11] पश्चात्पञ्चमं परिकीर्तितम् । जलंधरवधं[12] षष्ठं [13]हर्यर्धं सप्तमं भवेत् ॥ १७९
अष्टमं तु [14]वृषारूढं नवमं त्रिपुरान्तकम् । [15]विषसंहरणं पश्चाद्दशमं परिकीर्तितम् ॥ १८० ॥

[ प्रतिमारूपाणां त्रैविध्यम् [16]]

यद्यद्रूपं भवेत्तत्तत् [17]सर्वं रौद्रांशमेव हि । त्रिविधं तत्समुद्दिष्टं सर्वरूपं जनार्दन ॥ १८१ ॥
अचलं च चलं चापि[18] [19]त्रितयं स्याच्चलाचलम् । अचलं [20]मृण्मयं प्रोक्तं शूलस्थापनपूर्वकम् ॥
चलं लोहमयं प्रोक्तं [21]सिक्थकर्मपुरःसरम् । शिलादारुमयं सर्वं चलाचलमिति स्मृतम् ॥१८३
मृण्मये लोहजे वापि [22]संस्कारो दारुसिक्थयोः[23] । पूर्वेद्युरेव [24]कर्तव्यस्तद्विधानं [25]तथोच्यते ॥

---

[1] A : शक्रं प्रसादरूपं ; C, D : शक्रप्रसादरूपं [2] C, D, E, F, : तथा pour तत :
[3] D : दैव्यर्धं ; F : देव्यार्धं [4] C, E : महेश्वरं [5] F : दशकर्मया [6] A : अधिरौद्रं
[7] C : रूपान्नानापि संभवेत् ; E : रूपं नानापि संभवेत [8] A : मूर्तिं pour मूर्ति ; C : मूर्तिः
[9] E : कालनाशः [10] C : स्याच्चैवं हि स्यात्ततः परम् ; F : स्याद्वैवाह्यस्य ततः परम्
[11] A : संयुतं pour सहितं ; E : सहित [12] A : वरं pour वधं [13] A : भार्यर्धं ; E : हर्यर्ध
[14] E : वृषारूढो नवमस्त्रिपुरान्तकः [15] A : विषसंहारणं ; E : विषापहरणं ; F : विषसंहारिणं
[16] Cf. *Kāraṇāgama*, I, 11, 1-5a :
अतः परं प्रवक्ष्यामि प्रतिमालक्षणं शृणु । त्रिविधं व्यक्तमव्यक्तं व्यक्ताव्यक्तं तथैव च ॥
व्यक्तं तु सकलाकारमव्यक्तं लिङ्गमुच्यते । मुखलिङ्गमिति प्रोक्तं व्यक्ताव्यक्तं प्रजायते ॥
अधुना प्रोच्यते सर्वं सकलानां तु लक्षणम् । चलं चलाचलं चैव अचलं च त्रिधा भवेत् ॥
चलं धातुमयं ज्ञेयं शैलं चलाचलं स्मृतम् । अचलं मृण्मयं ज्ञेयं भित्तिचित्रपटं तथा ॥
चित्रहीनं चलं शैलमचलं चित्रयुक् सदा ।
cf. *Suprabhedāgama*, I, 34, 1-4 :
अथातः संप्रवक्ष्यामि सकलानां तु लक्षणम् । सर्वावयवदृश्यत्वात्प्रतिमा त्विति चोच्यते ॥
ईश्वरादिचतुर्मूर्तिः पठ्यते सकलं त्विति । एतानि सकलादीनि त्रिविधानि मयोच्यते ॥
चित्रं चित्रार्धमेवं तु चित्राभासं तथैव च । सर्वावयवसंपूर्णं दृश्यं तच्चित्रमुच्यते ॥
अर्धावयवसंदृश्यमर्धचित्रं तथैव च । पटे भित्तौ च यो लिख्यं चित्राभासमिहोच्यते ॥
[17] A : तत्सर्वं रौद्रमेव हि ; C : सर्वं रौद्रजमेव हि ; F : सर्वं रौद्रमेव हि [18] A : अद्य pour अपि
[19] A : तृतीयं pour त्रितयं [20] A : ब्रह्मयं pour मृण्मयं
[21] A : सिद्धिकर्णं pour सिक्थकर्मं ; C, E : सिद्धिकर्म ; F : सन्धीकरण [22] A : संस्कारं
[23] C, D, E : सिद्धयोः pour सिक्थयोः [24] A : कर्तव्यं pour कर्तव्यस् [25] E, F : ततोच्यते

[ शूलयोग्याः वृक्षाः[1] ]

**असनखदिरचन्दनाःससाराः सुरतरुसप्तदलौ च राजवृक्षः ।**
**[2]वकुलपनसवेणु[पत्र]वृक्षा दश कथिताः प्रतिमासु शूलयोग्याः ॥ १८५ ॥**
**[3]जङ्घोरुदण्डौ कटिदण्डयुक्तौ [4]ब्रह्माख्यमन्यं प्रतिमानुरूपम् ।**
**[5]वक्षोभवं बाहुभवं प्रकोष्ठं कृत्वोक्तवृक्षैरधिवासयेत्तान्[6] ॥ १८६ ॥**

---

¹ Cf. *Kāraṇāgama*, I, 67, 1b-7 :

चन्दनश्च मधूकश्च खादिरः सरलस्तथा । शमीक्षीरासनाश्चैते शूलवृक्षास्तु शूलिनः ॥
पनसं सुरदारुं च प्लक्षमर्जुनकिंशुकम् । तिलकं सप्तपर्णं च विष्णुशूलस्य वृक्षकम् ॥
वकुलं कुटजं चैव पिण्डकस्तिमिजं तथा । धनं चार्जुनकं चैव ब्रह्मणः शूलवृक्षकम् ॥
मुक्तानां यद् द्रुमं प्रोक्तं देवीनां तद्द्रुमं भवेत् । वैकङ्कतं च खादिर्यं शम्यार्याया विधीयते ॥
पाटली चैव ज्येष्ठायां रोहिण्यां मातृभिस्तथा । सरस्वत्यास्तु सरसः सरलं चण्डेश्वरस्य तु ॥
राजवृक्षेण शूलं वै पलाशानां विशेषतः । खादिरं सर्वदेवानां शूलवृक्षमुदाहृतम् ॥
एकस्यैवैकवृक्षेण बहुवृक्षं न कारयेत् ।

² A : पद्मलंपनसकेणु...चे वृक्षा ; C : वकुलपतसकेषु चो वृक्षा ; D : वकुलपतसकेणवृक्षा ; E : वकुलपनसवे ...वृक्षा ; F : पत्रलपनसकेणु ...वृक्षा ;

Tous les mss. sont corrompus. Ils lisent tous, excepté E, केणु ou केषु pour वेणु, et deux syllabes manquent pour que le mètre soit complet ; enfin dans cette liste qui doit être de dix noms d'arbres, comme il est indiqué dans le 4º pāda, il manque un nom. Nous avons ajouté le mot पत्र synonyme de पलाश d'après *Kāraṇāgama* I, 67, 71 en prenant ससाराः comme épithète du mot précédent असनखदिरचन्दनाः. Si ससाराः est un nom d'arbre, et peut à la rigueur être pris comme synonyme de क्षीरवृक्ष alors il n'est pas nécessaire d'ajouter पत्र pour compléter la liste d'arbres. Pour compléter le mètre on peut, peut-être corriger वेणु en वेणुकाश्च. Quelques mss. ont च après वेणु, ce qui suggère une lecture de ce type. De toutes façons il faut remarquer que le वेणु n'est pas mentionné par le *Kāraṇāgama*, parmi les arbres utilisés pour faire le śūla. Ou bien la lecture de E est incorrecte, ou bien il s'agit d'une vue particulière, propre à l'*Ajitāgama*. Si वेणु est une mauvaise lecture, on pourrait corriger en किंशुकाश्च qui est aussi synonyme de पलाश.

³ Pour des détails concernant le *daṇḍa* voir *Kāraṇāgama*, I, 67, 25-47a

ब्रह्मदण्डस्य विस्तारं पञ्चाङ्गुलमिति स्मृतम् । मेढ्रादिनाभिपर्यन्तं ब्रह्मांशं चतुरश्रकम् ॥
नाभेर्हिक्कान्तकं चैव वस्वंशं वैष्णवं भवेत् । तस्योर्ध्वे वृत्तकं कुर्याच्छिवभागमिति स्मृतम् ॥
वक्षोदण्डस्य विस्तारं सप्ताङ्गुलमिति स्मृतम् । तद्वेरं तु कला चैव उभयोरग्रयोरपि ॥
कला चैव घनं तस्य उभयोः पार्श्वयोरपि । द्विमात्रेण शिखां कुर्यादेकद्वित्रिचतुःशिखा ॥

मुकुले दुर्नि [तु च ?]वृक्षस्य ऊर्ध्ववक्त्राकृतिर्भवेत् । रन्ध्रं विष्ण्वंशतारेण वक्षोदण्डस्य मध्यमे ॥
हिक्कासूत्रादधस्तात्तु वक्षोदण्डं तु सुस्थितम् । कटिदण्डस्य विस्तारं सप्तमात्रमुदाहृतम् ॥
कला चैव घनं तत्र उभयोः पार्श्वयोरपि । गुणाङ्गुलप्रमाणेन शिखां कुरूर्ध्ववक्त्रकम् ॥
ब्रह्मभागस्य तारेण तन्मध्ये सुषिरं कुरु । युगाश्रमूले त्र्यङ्गुल्यं मांसमानं त्यजेत्तरुम् ॥
द्विमात्रं नाभ्यधस्तात्तु हित्वात्र कटिदण्डकम् । योजयेद् ब्रह्मदण्डे तु सुस्निग्धं तदृढं कुरु ॥
ऊर्वायामं परिग्राह्य रुद्रमात्रेण संयुतम् । ऊरुदण्डं तथा ख्यातं विस्तारं चतुरङ्गुलम् ॥
ऊरुदण्डाग्रविस्तारं कोलकं चेति कीर्तितम् । तस्य मूले तु सुषिरं शिखामानेन कारयेत् ॥
तस्याग्रे तु शिखां कुर्यात्पक्षाङ्गुलप्रमाणतः । कटिदण्डशिखायां तु ऊरुदण्डं तु योजयेत् ॥
जङ्घायामं तु संग्राह्य भागेनैव तु योजयेत् । जङ्घामानस्य विस्तारमग्न्यङ्गुलमुदाहृतम् ॥
तस्याग्रस्य तु विस्तारं सार्धमात्रमिति स्मृतम् । आयामं तत्समं ज्ञेयं तद्घनं तु तदर्धकम् ॥
दोर्दण्डमूलविस्तारं गुणाङ्गुलमुदाहृतम् । तस्य मूले तु सुषिरं चतुरङ्गुलमायतम् ॥
ऊर्वग्रस्य शिखायां तु सुषिरं तस्य योजयेत् । योजयेदुभयोः संधौ जानुमण्डलकं बुधः ॥
जानुमण्डलविस्तारं युगाङ्गुलमुदाहृतम् । बाहुकाग्रस्य विस्तारं सार्धमात्रमिति स्मृतम् ॥
तन्मूले सुषिरं कुर्यात्पक्षाङ्गुलप्रमाणतः । वक्षोदण्डकरे [दण्डान्तरे ?] विप्र बाहुमूलं तु योजयेत् ॥
तारं प्रकोष्ठदण्डस्य मूलेऽग्न्यङ्गुलमुच्यते । तस्याग्रस्य तु विस्तारमेकाङ्गुलमिति स्मृतम् ॥
तन्मूलेन द्विमात्रेण सुषिरं कारयेद्बुधः । बाह्वग्रयोः शिखाश्चैव प्रकोष्ठेनैव योजयेत् ॥
वक्षोदण्डात्कटीदण्डात्पार्श्वदण्डायता [तं ?] स्मृतम् । द्विमात्रं तस्य विस्तारं तत्समं तु घनं भवेत् ॥
ऊर्ध्वे तु पार्श्वदण्डं तु [दण्डस्य ?] अङ्गुलं सुषिरे गतम् । अजदण्डात्पार्श्वदण्डाद् ग्रन्थ्यन्तं शरमात्रकम् ॥
मूले स्निग्धं प्रयोक्तव्यं पार्श्वदण्डं विशेषतः ।

4 A : बुसाख्य pour ब्रह्माख्य ; F : ब्रह्माण्य 5 A : वक्षोबभं ; F : वक्षौ हवं
6 A : अधिवाहयोक्तान् pour अधिवासयेत्तान् ; F : अधिवावयेत्तान्

[ शूलसिक्थादेरधिवासः[1] ]

यत्र [2]यत्प्रतिमारूपं प्रासादे [3]स्थाप्यते हरे। तस्याग्रे स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः ॥
पद्ममष्टदलं तत्र कर्णिकाकेसरैर्युतम् । आलिख्य तत्र विन्यस्य [4]शूलं सिक्थमथापि वा ॥ १८८
क्षालितं [5]शोषितं चैव [6]सर्वात्महृदयेन तु । पुण्याहं वाचयित्वाथ[7] तस्याग्रे होममाचरेत् ॥१८९
[8]तदर्थं स्थण्डिलं कृत्वा [9]सैकतं विधिवत्ततः । अग्निमाधाय विधिवत्तत्रैव जुहुयात्सुधीः ॥१९०

---

[1] Cf. *Kāraṇāgama*, I, 67, 58-78 et 80-81a :
अयने चोत्तरे काले शूलस्थापनमारभेत् । शुक्लपक्षे शुभर्क्षे तु सुतिथौ वा सुवारके ॥
प्रासादास्याग्रतः कुर्यान्मण्डपं चतुरश्रकम् । रन्ध्राष्टाब्धिकराः प्रोक्ता ज्येष्ठादीनां तु तारकम् ॥
षोडशस्तम्भसंयुक्तं श्रुतिद्वारसमायुतम् । मण्टपं तु त्रिधा कृत्वा मध्ये त्वेकेन वेदिकाम् ॥
रत्निमात्रं समुत्सेधं दर्पणोदरसन्निभम् । कुण्डानि परितः कुर्याद्दिशासु विदिशासु च ॥
नवाग्न्यायतनं वापि पञ्चाग्न्यायतनं तु वा । दिशासु चतुरश्राणि वृत्तानि विदिशासु वै ॥
ईशानशक्र्योर्मध्ये वृत्तं प्राधान्यकं कुरु । पञ्चाग्न्यायतनं चेत्तु विदिक्कुण्डानि वर्जयेत् ॥
गोमयालेपनं कुर्यात्प्रोक्षयेन्मन्त्रवारिणा । वितानध्वजसंयुक्तं मुक्तादामैरलंकृतम् ॥
चतुस्तोरणसंयुक्तं नालिकेरफलैर्युतम् । मङ्गलाष्टकसंयुक्तं मङ्गलाङ्कुरशोभितम् ॥
स्तम्भवेष्टनसंयुक्तं मण्टपं भूषयेत्ततः । पुण्याहं वाचयित्वा तु वेदिकोपरि शालिभिः ॥
अष्टद्रोणैस्तदर्धैर्वा स्थण्डिलं कुरु देशिक । तन्मध्ये पद्ममालिख्य सालपत्रं सकर्णिकम् ॥
तिलतण्डुलदर्भैश्च पुष्पैश्चैव परिस्तरेत् । शयनं कल्पयेत्पश्च चर्मजाद्यैरनुक्रमात् ॥
वास्तुहोमं ततः कुर्यात्पर्यग्निकरणं कुरु । शूलं संक्षालयित्वा तु गव्यैश्चैवाभिषेचयेत् ॥
गन्धाम्भसा तु संस्नाप्य शुद्धतोयेन सेचयेत् । सर्वातोद्यसमायुक्तं सर्वालंकारशोभितम् ॥
सद्यमन्त्रमनुस्मृत्य शूलं वस्त्रेण वेष्टयेत् । शयने शाययेच्छूलं वामदेवं समुच्चरन् ॥
गन्धादिभिः समभ्यर्च्य हृदयेन तु मन्त्रतः । कौतुकं बन्धयेद्धीमान्वक्षोदण्डस्य दक्षिणे ॥
गन्धाद्यैरर्चयित्वा तु पायसान्नं निवेदयेत् । एवं कृते विशेषेण पश्चाद्धोमं समारभेत् ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । समिदाज्यचरूँल्लाजांस्तिलशालींस्तथैव च ॥
हृदयाद्यस्त्रपर्यन्तं मन्त्रैश्चैव क्रमेण तु । शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥
द्रव्यान्ते व्याहृतिं हुत्वा मूलेनैव शतं हुनेत् । प्रतिद्रव्यं स्पृशेच्छूलं सद्यमन्त्रमनुस्मरन् ॥
नृत्तगेयकवाद्यैश्च रात्रिशेषं व्यपोह्य च । प्रभाते विमले धीमाञ्शूलस्थापनमारभेत् ॥
आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा यथाविधि । नववस्त्रधरोष्णीषः सर्वाभरणभूषितः ॥ . . .
जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् । पूर्णाहुतिं च शिरसा स्विष्टमग्नेति होमयेत् ॥

[2] A, F : यत्प्रतिमं रूपं

[3] C : स्थापिते ; E : स्थापितं

[4] A : शूलशिक्तमथापि वा ; C, E : शूलसिद्धमथादि वा ; F : शूलं क्लेशमथापि वा

[5] A : शोधितं ; C : क्षोधितं

[6] A : सर्वात्मना हृदयेन तु

[7] C : तु pour अथ

[8] C, F : तदर्धे

[9] E : सैकतैर् pour सैकतं

समिदाज्यचरूणां तु [1]प्रत्येकं तु दशाहुतिः[2] । तत्तद्गायत्रि[3]मन्त्रेण समिद्धोमं समाचरेत् ॥१९१
मूलेनाज्यं ततो हुत्वा [4]हृदा वै होमयेच्चरुम् । द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं [5]स्पृशेद्गुरुः ॥
तत्तन्मूलेन मन्त्रेण [6]पूर्णां हुत्वा [7]समापयेत् । एवं [8]कृत्वाधिवासं तु शूलमुद्धृत्य देशिकः ॥

[ शूलस्थापनम्[9] ]

सुमुहूर्ते सुलग्ने तु स्थापनं [10]शिल्पिना भवेत् । [11]स्थापनात्परमेवान्तः प्रविश्य भवनोदरम् ॥
[12]गर्भे कृत्वा नवपदं चत्वारिंशत्पदोत्तरम् । तेषां ब्रह्मपदं मध्ये [13]भवेदेकं तु बाह्यके ॥ १९५
दैविकादिपदान्यष्टौ[14] तद्बाह्ये [15]चापि मानुषम् । [16]पदषोडशकं[17] बाह्ये पैशाचं परितः [18]स्थितम् ॥ १९६ ॥

---

[1] A : प्रत्यहं

[2] A : दशाहुतिम्

[3] D : गायत्र pour गायत्रि

[4] A, C, D, F : हृदिना pour हृदा वै

[5] F : विशेद् pour स्पृशेद्

[6] C : पूर्णं हुत्वा ; E : पूर्णाहुतिं ; F : पूर्णाहुत्वा

[7] C, D, E : समाचरेत्

[8] F : हुत्वा pour कृत्वा

[9] Cf. *Kāraṇāgama*, I, 67, 81b-84a et 86b-94 :
मुहूर्ते समनुप्राप्ते स्थापनं तु समारभेत् । गर्भगेहं तथैकोनपञ्चाशत्पदकं कुरु ॥
मध्ये त्वेकपदं ब्राह्ममभितोऽष्टौ तु दैविकम् । पदमेकावृतं तस्य त्वभितो मानुषं पदम् ॥
चतुर्विंशत्पदं बाह्ये हितं पैशाचिकं भवेत् । मानुषे स्थापयेच्छूलं दैविकाभिमुखस्थितः ॥ . . . . .
मानुषं स्थापयित्वा तु रत्नानि विधिवन्न्यसेत् । वज्रमैन्द्रे तु विन्यस्य वैडूर्यं वह्निगोचरे ॥
इन्द्रनीलं तु याम्यायां मुक्ता निर्ऋतिगोचरे । वारुणे स्फटिकं न्यस्त्वा पुष्यरागं तथानिले ॥
पद्मरागं तु सौम्यायां नीलमीशानगोचरे । माणिक्यं मध्यमे स्थाप्य धातूंश्चैव तु विन्यसेत् ॥
हरितालाञ्जनं सीसं माक्षिकं गैरिकाभ्रकम् । सिन्दूरं गन्धकं चैव न्यसेदिन्द्रादिषु क्रमात् ॥
गोधूमयवनीवारतिलसर्षपमाषकान् । व्रीहिमुद्गं क्रमेणैव न्यस्त्वावटक्रमेण तु ॥
तन्मध्ये स्थापयेच्छूलमीशानेन तु मन्त्रतः । एकाक्षरं द्व्यक्षरं वा कारयेत् सुदृढं क्रमात् ॥
नालिकेरफलस्यैव पक्वस्याहृत्य तत्त्वचम् । रेणुभिश्च विना तत्र शोधयित्वा पुनः पुनः ॥
शुद्धसारं तु संग्राह्य रज्जुं तेनैव कारयेत् । त्रिवृत्वापि द्विवृत्वापि नाहं तस्य यवत्रयम् ॥
रज्जुना वेष्टयेच्छूलं युक्त्या सर्वत्र बुद्धिमान् ।

[10] A : शशिना pour शिल्पिना

[11] A, C, D : स्थापनं कर्पमेवान्तः ; F : स्थापनं कूर्पमेवं तं

[12] Tous les manuscrits omettent le premier pāda du *śloka* 195a et lisent गलचत्वारिंशच्छतोत्तरम् ; correction sur la base de *Kāraṇāgama*, I, 67, 82

[13] A : भवेद्देहं ; F : भवेदेवं

[14] A : अवान्यष्टौ pour पदान्यष्टौ ; C : भवानष्टौ ; E : पदानष्टौ

[15] C : चाप pour चापि

[16] V : पाद pour पद

[17] E : शेषांशकं pour षोडशकं

[18] A : स्थितः pour स्थितम्

[1]तत्रैव मानुषपदे शूलस्य स्थापनं हृदा । रत्नादीनि [2]च विन्यस्य रेणूस्तत्र च [3]लोपयेत् ॥१९७
नालिकेरभवैः कोशकुलैः[4] कृत्वा दृढं यथा । [5]रज्जुं तेनैव तच्छूलमापादतलमस्तकम् ॥१९८॥

[ शूले मृल्लेपनम्[6] ]

वेष्टयित्वा मृदा ह्यङ्गं कुर्यात्संस्कृतया[7] [8]ततः । [9]तत्संस्कारः पुरैवोक्तस्ततश्चार्चां[10] शनैः शनैः॥
[11]कल्पयेत् कल्पवर्यैस्तु सर्वकर्मसु [12]कोविदैः । [13]तस्य मृत्प्रतिमायाश्चाप्याभासं प्रतिदापयेत् ॥
लक्षणेन [14]समोपेता [15]सर्वा करतलाङ्गुलिः । बेरे [16]शिलामये तत्र [17]वर्णशोभा विधीयते ॥२०१
[18]तत्रैकं कलशं स्थाप्यं शेषं मृण्मयवद्भवेत् । प्रतिमा लोहजा या स्यात् [19]स्थाप्यामरपदे हि सा ॥

---

[1] Tous les manuscrits lisent तत्र मा . . . मूलस्य स्थापनं हृदा ; correction sur la base de *Kāraṇāgama*, I, 67, 34a

[2] Tous les manuscrits omettent च विन्यस्य रेणून्; correction sur la base de *Kāraṇāgama*, I, 67, 93

[3] A : लेपयेत्

[4] E : तृणैः pour कुलैः ; F : कूलैः

[5] A : रज्जात्तेनैतत्तलं ; C : रज्जुं तेनैव तत्तूलम् ; D : रज्जून् तेनैव तत्तूलम् ; F : रज्जुं तेनैव तत्तलम्

[6] Cf. *Kāraṇāgama*, I, 67, 95-102 :

पर्वताग्रे नदीतीरे पुण्यक्षेत्रे मनोरमे । बिम्बार्थं मृत्तिका शस्ता सर्वकामफलप्रदा ॥
सिता रक्ता च पीताभा कृष्णा च सुमनोरमा । चूर्णयित्वा मृदं पश्चाद्दधिक्षीरघृतैर्युताम् ॥
गोधूमयवमाषाणां चूर्णैरपि समन्विताम् । श्यामं श्रीवेष्टकं चैव हिङ्गुकं रजनीं तथा ।
कन्दुकं गुग्गुलुं लाक्षासर्जगन्धरसं तथा । कर्पूरं चन्दनं कुष्ठं कस्तूरीमगरुं गुलम् ॥
पञ्चनिर्याससंयुक्तं मरीच्या च समायुतम् । बिल्वोद्भवं रसं चैव एकीकृत्य विमर्दयेत् ॥
पाषाणे पेषयित्वा तु सुधया सह भागतः । शनैः शनैः प्रकर्तव्यं प्रतिमालक्षणान्वितम् ॥
ततस्तत्प्रतिमस्योक्तभूषणैश्च समन्वितम् । कपित्थोद्भूतनिर्याससरसेनैवो षितैर्जलैः ॥
पञ्चवर्णैस्ततस्तस्मिन् लेखयेच्चित्रवित्तमः । हैमेनाभरणं रत्नं लाक्षया बन्धयेद्दृढम् ॥

[7] C : सकृतया pour संस्कृतया ; D : संतृतया ; E : शक्तया

[8] A : अन्ततः pour ततः

[9] Cf. *Ajitāgama*, vol. I, 27, 141-147

[10] A : तश्चार्याया : pour ततश्चार्चां ; D : ततश्चर्यां ; F : ततश्चार्यां

[11] A : कल्प . . . . वैर्यस्तु ; C : . . . . कल्पपर्यैस्तु ; D : . . . . कल्पवर्यैस्तु ; E : कल्पयेत्

[12] C : केवलैः

[13] A : तस्य मृत्प्रतिमायाश्चो हासं ; C : तस्य मृति प्रतिमायाश्च भासं ; D : तस्य मृत्प्रतिमायश्चे भासं ; E : तस्य मृत्प्रतिमायाश्चे भासं ; F : तस्य यत्प्रतिमा यश्चो हासं

[14] A : समोपेताः ; F : समोपेतां

[15] C, E, F : सर्वाः pour सर्वा

[16] A : शीलमये

[17] C : वर्णशोभाद्द्वितीयते ; E : ववत्रशोभा द्वितीयके

[18] A : ततैनं कलशं ; E : तत्रैककलशं

[19] A : स्थाप्यामरवदेहया ; C, F : स्थाप्यामरपदेहया ; F : स्थाप्यामरवदेवता

[1]शैला योग्या तु साम्राज्ये स्थाप्या [2]दिव्यपदेऽपि वा । [3]रत्नलोहशिलाद्यैस्तु व्यक्तलिङ्गप्रकल्पने॥
स्त्रीपुं[4]विभागस्तत्रैव नेष्टस्तत्रैव संकरः । [5]अव्यक्तोभययोरिष्टौ लिङ्गयोर्वस्तुसंकरौ ॥ २०४ ॥
[6]लोहे तु प्रतिमारूपे [7]कुर्यात्सिक्थमयं पुरा । [8]यदुक्तः प्रतिमाभेदस्तद्विधानमथोच्यते[9] ॥

[ लिङ्गोद्भवरूपम्[10] ]

[11]लिङ्गमध्यस्थितं[12] देवं [13]त्रिनेत्रं [14]तु चतुर्भुजम् । रक्तवर्णं प्रसन्नास्यं[15] सर्वाभरणभूषितम् ॥
जटामकुटसंयुक्तं [16]दक्षिणोत्तरयोः क्रमात् । चन्द्रगङ्गासमायुक्तं व्याल[17]धुत्तूरसंयुतम्॥२०७॥
वामदक्षिणयोश्चापि लिङ्गमध्ये प्रकल्पयेत् । [18]अधोनपाद्यथा दृश्यं [19]मौलेरूर्ध्वं तथैव च ॥
[20]तत्त्रियंशं च दृश्यं स्यादग्रे मूले च कारयेत् । ब्रह्माणं [21]हंसरूपं तु[22] विष्णुं [23]पोत्रिमुखं तथा ॥

---

[1] A : शैलयोग्यं तु ; C : शैला यात्रा तु ; F : शैलयोग्या तु

[2] A : दीप्यवदेपि वा ; F : दीप्यपदेऽपि वा [3] C, F : रक्त pour रत्न

[4] C : विभाव pour विभाग

[5] A : तद्व्यक्तोभयोरिष्टौ ; C : तद्वन्तीभवयोरिष्टौ ; D, F : तद्व्यक्तोभययोरिष्टौ

[6] C : लोभे pour लोहे

[7] D : लोहे सिद्धमयं पुरा ; C, E, F : कुर्यात्सिद्धमयं पुरा

[8] A, D : यदुक्तं प्रतिमाहेन ; C : यदुक्तं प्रतिमान्हेन [9] C, D : इहोच्यते pour अथोच्यते

[10] Cf. *Kāmikāgama*, II, 50, 1b-7 :
गर्भमानवशाल्लिङ्गं प्राग्वत्सम्यक् प्रकल्पयेत् । लिङ्गोच्चे वेदपञ्चर्तुसप्तांशेंऽशमधस्त्यजेत् ॥
तत्समं वा तदर्धं वा त्यक्त्वा चोर्ध्वे तदन्तरे । पूर्ववत्कारयेत्सम्यक् चन्द्रशेखरमूर्तिनम् ॥
लिङ्गाधः शर्वजान्वन्तभागं नेन्द्रियगोचरम् । लिङ्गोर्ध्वाधःप्रदेशे तु हंससूकरमाचरेत् ॥
बिम्बस्याननमानेन कारयेद्धंसमादरात् । बिम्बद्विमुखमानेन भूकृष्टास्यं तु सूकरम् ॥
तल्लिङ्गरसभागैकद्वित्रिवेदशरैर्नयेत् । ब्रह्मविष्णू द्विपार्श्वस्थौ नतौ तस्यानुकूलकौ ॥
तिर्यग्गतसुपादौ तौ सर्वावयवसुन्दरौ । लिङ्गोद्भूतस्त्विति ख्यातो ब्रह्मविष्ण्वभिनन्दितः ॥
ब्रह्मविष्णुविहीनो वा हंससूकरसंयुतः ।

cf. *Suprabhedāgama*, I, 34, 111-113 :
" लिङ्गोत्पत्तिमतः परम् । लिङ्गं कृत्वोर्ध्वतो ब्रह्मा हंसरूपस्तथैव च ॥
विष्णुं वराहवक्त्रं तु लिङ्गस्याधः प्रकल्पयेत् । हृदयेऽञ्जलिसंयुक्तौ ब्रह्मविष्णू च पार्श्वयोः ॥
लिङ्गमध्ये तु कर्तव्यं पूर्ववच्चन्द्रशेखरम् । अदृश्यौ तस्य पादाब्जौ तथैव मकुटं यथा ॥

[11] E : लिङ्गमध्ये pour लिङ्गमध्य [12] C : स्मितं pour स्थितं

[13] C, D, E, F : त्रिणेत्रं [14] C, E : च pour तु

[15] C : आख्यं pour आस्यं [16] A : दक्षिणे गिरयोः ; D : दक्षिणेतरयोः

[17] A : धुरर्धू pour धुत्तूर ; C : धुद्धूर [18] A : अथोनुपाद्यथा दृश्यं ; F : अथोऽनुष्टाद्यथादृश्यं

[19] A : मूलैरूर्ध्वं ; D : मेलैरूर्ध्वं ; F : मलैरूर्ध्वं

[20] A : तत्त्रियंशमदृश्यं ; C : तत्तत्र्यंशमदृश्यं ; E : तत्र्यंशं च न दृश्यं

[21] F : हररूपं [22] E : च pour तु [23] A : पोत्रमुखं ; C, D, F : पोत्रीमुखं

ब्रह्मविष्णू च कर्तव्यौ कृताञ्जलिपुटौ[1] स्थितौ। [2]दक्षिणेतरयोश्चापि लिङ्गस्य: विमलं ततः ॥

[ सुखासीनम्[3] ]

[4]सुखासीनं च कर्तव्यमासनं[5] [6]पङ्कजासनम् । कुञ्चितं दक्षिणं [7]पादं वामपादं प्रलम्बितम् ॥
चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितम् । शेषं पूर्ववदुद्दिष्टम् ;

[ गौरीसहितम् - आसीनम्[8] ]

तस्य पार्श्वेऽथ[9] वामके ॥ २१२ ॥
करण्डमकुटोपेतां गौरीं कुर्याद्द्विबाहुकाम्। श्यामवर्णां [10]द्विनेत्रां च [11]किंचित् [प्रस्मितसं]युताम्॥

---

[1] C, E, F : पुट pour पुटौ

[2] E omet le *śloka* 210b ; C : दक्षिणोत्तरयोश्चापि

[3] Cf. *Kāraṇāgama*, I, 11, 370-372 :
चतुर्भुजं त्रिणेत्रं च जटामकुटसंयुतम् । अभयं दक्षिणे हस्ते वरदं वामहस्तके ॥
कृष्णापरशुसंयुक्तं वामदक्षिणहस्तयो: । शयनं दक्षिणं पादं वामपादं तु लम्बितम् ॥
उमया सहितवत्सर्वं स्कन्दगौरीविवर्जितम् । सुखासनमिति प्रोक्तम्"
cf. *ibid.*, *śl.* 386-387a :
भिक्षाटने च कङ्काले हर्यर्धे चार्धनारिके । सुखासने च कामारौ दक्षिणामूर्तिविग्रहे ॥
न योजयेदुमादेवीं शेषाणां तु सुयोजयेत् ।
cf. *Suprabhedāgama*, I, 34, 85-86 :
आसने तु सुखासीनं मृगीपरशुधारिणम् । अभयं दक्षिणे हस्ते वरदं वामहस्तके ॥
कटकं वा सुखासीनमुमास्कन्दौ च वर्जितम् [तौ] । एवं सुखासनं प्रोक्तम्"
cf. *Dīptāgama*, 16, 162b-164 :
आसने तु सुखासीनं पादाभय [वरदाभय?] हस्तकम् । अभयं दक्षिणे हस्ते वरदं वामहस्तके ॥
वामदक्षिणहस्ते तु कृष्णापरशुधारिणम् । शयनं दक्षिणं पादं वामपादं तु लम्बितम् ॥
एवं सुखासनं प्रोक्तम् "
cf. *Kāmikāgama*, II, 47, 18a :
स्कन्दोमारहितस्त्वेष एवं स्यात्तु सुखासन: ।

[4] E : सुखासनं [5] E : आसने pour आसनं [6] C, D : पङ्कजानने ; E : पङ्कजासने [7] F : पादौ

[8] Cf. *Kāraṇāgama*, II, 58, 2-7a :
उमया सहरूपं तु स्फटिकाभं त्रिणेत्रकम् । टङ्ककृष्णमृगं चैव अभयं वरदं तथा ॥
शयनं वामपादं तु सव्ये लम्बपदं तथा । द्विभुजां श्यामवर्णाभां वामपादं तु लम्बितम् ॥
सव्यपादं तु शयनमुत्पलं सव्यहस्तके । व [र] दं वामहस्ते च करण्डमकुटोज्ज्वलाम् ॥
चित्रवस्त्रधरां देवीं मणिमालाविभूषिताम् । शिरश्चक्रसमोपेतां व्याघ्रचर्मोत्तरीयकम् ॥
जटामकुटशोभाढ्यं नेत्रत्रयविराजितम् । प्रभामण्डलमध्यस्थं सुखासनमुमापतिम् ॥
उमया सह च"

[9] F : तु pour अथ [10] A, C, D : त्रिनेत्रां pour द्विनेत्रां

[11] Tous les mss lisent किंचित् ... युकीम् न ; correction sur la base des autres āgama.

[1]कुञ्चितालम्बितौ तस्याः पादौ दक्षिणवामकौ । वामहस्ततलं पीठे[2] न्यस्य [3]कुन्दं तु दक्षिणे ॥
कटकामुखमाबध्य [4]करमेकासनस्थिताम्[5] । [6]आसीनं प्रथमं प्रोक्तं द्वितीयमधुनोच्यते ॥२१५
पूर्ववत्कल्पितस्याङ्के[7] [8]वामे गौरीं प्रकल्पयेत् । देवस्य वामहस्तं तु [9]देव्याश्च मकुटे स्थितम् ॥
[10]कृत्वा देवस्य [11]चाप्यङ्के देव्याश्च दक्षिणं करम् । [12]देव्यावृतं कारयेदुक्तमासीनं च [13]द्वितीयकम्॥

[ गौरीसहितं संस्थितम् ]

संस्थितं च द्विधा कार्यमासीनोक्तप्रकारतः[14] । [15]अङ्कारोपणमध्यस्ये[16]देकासनगतं भवेत्[17] ॥
शेषं पूर्ववदुद्दिष्टम् ;

[ भिक्षाटनम्[18] ]

[19]उन्मनस्त्वधुनोच्यते । [20]रसश्वेतं प्रसन्नास्यं [21]कुञ्चिताकीर्णमूर्धजम् ॥
[22]पादुकोपरि विन्यस्तपादयुग्मसरोरुहम् । तयोर्वामेतरं[23] कुर्यात्क्षिप्यमाणसुपादुकम्[24] ॥२२०
सुस्थितं [25]वामपादेन समभङ्गसमन्वितम् । [26]दक्षिणं हरिणालीढमन्यड्डमरुकं दधत् ॥२२१॥
भिक्षापात्रं च पिञ्छं च वामभागे [27]बहत्करे । नागमेखलसंयुक्तं [28]गणनाथेन चैव हि ॥

---

1 A : किंचिदालम्बकौ ; C, D : किंचिदालम्बिते ; E : किंचिदालम्बितौ
2 A : पीठो
3 C, D, F : स्कन्दं pour कुन्दं
4 F : करमेकस्तनस्थिताम्
5 C, E : स्थितम् pour स्थिताम्
6 C, E : आसनं
7 A : आगे pour अङ्के ; C, D, E : अग्रे
8 C : वाम pour वामे
9 C, D, E, F : देव्या च pour देव्याश्च
10 A : मत्वा
11 A : चाभ्यङ्गे
12 A : देव्याश्रितं
13 C, E : तृतीयकम्
14 C, E : प्रकारकम् pour प्रकारत:
15 C, F : अङ्ग pour अङ्क
16 A : अध्यास: pour अध्यस्येद् ; E : अध्यासे
17 F : अध्यासे तएकारस्तं भवेत्
18 Cf. *Dīptāgama*, 16, 155-156 :
भिक्षाटनं प्रकर्तव्यं नग्नरूपं त्रिलोचनम् । चतुर्भुजसमायुक्तं कपालपिञ्छधारिणम् ॥
हरिणीमुखगं हस्तं परे डमरुकं भवेत् । पादे पादुकसंमुक्तं कुर्याद्वै गमनोन्मुखम् ॥

cf. *Suprabhedāgama*, I, 34, 106b-108 :
सृष्टिमूर्तेः कपालं तु स्थितिमूर्तेः कलेबरम् । डमरुकसमोपेतं भस्मसर्पैरलंकृतम् ॥
कण्ठे शूलसमायुक्तं छन्नवीरसमायुतम् । पादुकोपरि पादौ च सर्वभूतसमावृतम् ॥
एवं भिक्षाटनं वत्स"
19 A, F : उन्मनी त्वधुनोच्यते ; C : मनोमीननं त्वधुनोच्यते ; D : मनोन्मनी त्वधुनोच्यते
20 A : जशं श्वेतं ; D : नरश्वेतं ; C : नाशयेतं ; E : भिक्षाटनं
21 A : कुञ्चितादघूर्णनूषजम् ; F कुञ्चिताचूर्णमूर्ध्वजम्
22 A omet पादुकोपरि
23 D : इतरे pour इतरं
24 A : सपादुकम् pour सुपादुकम्
25 A : वामपादे तु
26 A : दक्षिगे हरिणालीढं कन्यस्तसमकन्दत: ; C : दक्षिणे हरिणालीढकन्यस्तथकुटादध: ; D : दक्षिणे हरिणालीढमन्यस्थमकुटन्दध: ; E : दक्षिणं हरिणालीढकरविन्यस्तदूर्वकम् ; F : प्रदक्षिणे हरिणालीढं कन्यस्तसमकुन्दत:
27 A : भवत् pour बहत्
28 F : नागकङ्कणसंयुतम् pour गणनाथेन चैव हि

[1]गायता वहता भिक्षापात्रं वामे तु धाविना । एवं भिक्षाटनं प्रोक्तं ; कङ्कालमधुनोच्यते ॥२२३

[ कङ्कालधरम्[2] ]

श्वेतवर्णं प्रसन्नास्यं जटामकुटसंयुतम् । [3]नागकङ्कणसंयुक्तं नागमेखलसंयुतम् ॥ २२४ ॥
दिव्याम्बरधरं देवं पूर्ववत्पादुकाङ्घ्रिकम् । [4]दक्षिणं हरिणालीढं वामे [5]कङ्कालकं तथा ॥
कराभ्यामितराभ्यां च [6]ढक्कावादनतत्परम् । [7]वहता शिरसा भिक्षापात्रमन्येन[8] [9]गायता ॥
छत्रं च वहतान्येन वृषमानयतापि च । गणेनानुगतं[10] देवमनेकेन [11]महौजसा ॥ २२७ ॥
स्त्रीगणैरनुयातं च बहुभिः काममोहितैः । कङ्कालरूपमुद्दिष्टम् ;

[ नृत्तरूपम् ; तत्र भुजङ्गत्रासनृत्तम्[12] ]

नृत्तरूपमथोच्यते ॥ २२८ ॥

---

[1] A : यागादावाहभिक्षा च पात्रं ; E : याधृता वाहिभिक्षार्थपात्रं ; F omet les *śloka* 223 et 224

[2] Cf. *Kāraṇāgama*, II, 78, 1-5a :

अथातः संप्रवक्ष्यामि कङ्कालस्थापनं शृणु । गर्वनिर्वापणार्थं हि महेशो मूर्तिभेदकः ॥
त्रिणेत्रं चतुर्भुजं भीमं रक्तवर्णं तथैव च । ब्रह्मकङ्कालवीणां तु सव्यहस्तेन धारयेत् ॥
वामांसोपरि विन्यस्य तिर्यक्कूर्परदेशके । डमरुं वामहस्ते तु टङ्कं कृष्णमृगं तथा ॥
समपादस्थितं पीठपद्मोपरिनिषण्णकम् । प्रभाया मध्यमे चैव जटामकुटमण्डितम् ॥
कङ्कालरूपमाख्यातम् ''

[3] D : नागमेखलसंमुक्तं नागकङ्कणसंयुतम् ; C et E omettent le demi-*śloka* 224b

[4] A : दक्षिणा ; C : दक्षिणे [5] A : कङ्कालरूपिणम् ; C, F : कङ्कालरूपधृक् ; D : कङ्कालरूपधृत

[6] A : कक्कापादनतत्परम् ; D : घर्कावादनतत्परम् ; E : घर्कापादनतत्परम् ; F : ढक्कापादं न तत्परम्

[7] D : शिरसा वहता [8] D : अन्योन्य pour अन्येन [9] C : गायतः pour गायता

[10] C, D : अनुगणं pour अनुगतं ; E : अनुगुणं [11] A : महौजसम् ; E : महोजसा

[12] Cf. *Kāraṇāgama*, I, 11, 325b-331a ; 348b-350 :

''नृत्तरूपमथ शृणु । चतुर्भुजं त्रिणेत्रं च सुविकीर्णजटान्वितम् ॥
कुररीवक्षसंयुक्तं बर्हिपिच्छसमन्वितम् । मौलेर्दक्षे तु धुत्तूरमर्धचन्द्रसमन्वितम् ॥
दक्षिणे तु जटाग्रे तु जाह्नवीमभिवन्दिताम् । पत्रं तु वामकर्णे तु दक्षिणे नक्रकुण्डलम् ॥
सर्वाभरणसंयुक्तमुपवीतसमन्वितम् । व्याघ्राजिनाम्बरोपेतं पादकिङ्किणिशोभितम् ॥
जगत्प्रसारितं वामे दक्षिणेऽभयहस्तकम् । डमरुं सव्यहस्ते तु वह्निं वामहस्तके ॥
वक्रं तु दक्षिणं पादमपस्मारोपरि स्थितम् । उद्धृतं वामपादं तु पादाग्रं दक्षिणामुखम् ॥ ...
वामबाहुद्वयोर्मध्ये शार्दूलाजिनकं न्यसेत् । त्रिवक्त्रायाममानेन अपस्मारं ततः कुरु ॥
चतुस्तालप्रमाणेन भूतरूपेण कारयेत् । तस्यैव वामपार्श्वे तु देवीं कुर्यात्सलक्षणाम् ॥
भुजङ्गत्रासमेवं तु''

voir *Saṃgītaratnākara*, *adhyāya* 7, *śloka* 613-614 pour la définition de भुजङ्गत्रासित ।

भुजङ्गत्रासितां चारीं कृत्वोत्क्षिप्य च कुञ्चितम् । अङ्घ्रिमूरुकटीजानुत्र्यश्रं यत्र विवर्तयेत् ॥
व्यावृत्तिपरिवृत्तिभ्यामेको डोलाकरोऽपरः । खटकाख्यस्तदन्वर्थं भुजङ्गत्रासितं मतम् ॥

श्वेतवर्णं प्रसन्नास्यं [1]द्विपचर्मकृताम्बरम् । किङ्किणीकृतनागेन्द्रं [2]बकपिच्छधरं तथा ॥ २२९ ॥
[3]विप्रकीर्णजटाभारमपस्मारोपरि स्थितम् । दक्षिणेन तु पादेन [4]कुञ्चितेनेतरेण तु ॥ २३० ॥
जान्वन्तमुद्धृतेनापि[5] पाण्यन्तं [6]लम्बितेन च । [7]विराजन्तं चतुर्हस्तमभयं दक्षिणे [8]दधत् ॥
दुन्दुभिं चान्यभागे तु वह्निमेकेन चापरम् । [9]प्रसारितकरं तिर्यग्गीतनृत्तं जनार्दन ॥२३२॥
[10]भुजङ्गत्रासमित्युक्तं वामे गौरीसमन्वितम् । [11]एकासनस्थया वापि ; [12]संध्यानृत्तमथोच्यते ॥

[ संध्यानृत्तम्[13] ]

[14]दक्षिणं [15]सुस्थितं पादं वामपादं तु कुञ्चितम् । [16]दक्षिणेऽभयटङ्कौ च [17]पाशनागौ च [18]वामके॥
[19]दधच्चतुर्भिर्हस्तैश्च जटामकुटसंयुतम् । [20]इदमन्यन्नृत्तरूपं ; तृतीयमधुनोच्यते ॥ २३५ ॥

[ दण्डपादनृत्तम्[21] ]

वामं तु कुञ्चितं किंचिदपस्मारोपरि स्थितम् ।
अन्यपादं शिरोदेशे [22]चोर्ध्वे दण्डवदुद्धृतम् ॥ २३६ ॥
विंशद्धस्तसमोपेतं शूलाद्यायुधसंयुतम् । वीणादिवाद्यसंयुक्तं दण्डपादमिति स्मृतम् ॥२३७॥
[23]नृत्तरूपं त्रिधा भिन्नं भवेदेवं जनार्दन ।

[ त्रिमूर्तिरूपम्[24] ]

[25]मूर्तिरूपमिदं वक्ष्ये [26]रक्तवर्णं [27]त्रिनेत्रकम् ॥ २३८ ॥
वरदाभयहस्तं च कृष्णापरशुसंयुतम् । जटामकुटसंयुक्तमेकपादं[28] सुसंस्थितम् ॥ २३९ ॥
दक्षिणेतरयोश्चापि पार्श्वयोरुभयोरपि । [29]कटिप्रदेशे चोर्ध्वे तु ब्रह्मविष्ण्वर्धकाययुक्[30]॥२४०॥

---

[1] C : द्वीप pour द्विप ; D, E : द्वीपि ; F : द्विपि
[2] D : चक्र pour बक
[3] A, F : विप्रकीर्णजटाभारं भस्मारोप्य परिस्थितम् ; E : विप्रकीर्णजटाहारमपसव्योपरि स्थितम्
[4] F: कुञ्चितेन करेण तु
[5] A : ऋद्धितेनापि pour उद्धृतेनापि
[6] A : बिम्बितेन pour लम्बितेन
[7] A : विराजतं ; D : विरजन्तं
[8] A : वहन् pour दधत्
[9] A : प्रसारितं करं तीर्यं गीतनृत्तं ; C : प्रसारितकरास्तीर्यं गीतनृत्तं ; D : प्रसारितकरस्तीर्य गीतनृत्तं
[10] A : न भुजांगात्रसमित्युक्तं ; F : न भुजङ्गत्राणमित्युक्तं
[11] E : एकासनस्थितायापि
[12] A : संध्यनृत्तम् pour संध्यानृत्तम् ; F : सद्यनृत्तम्
[13] Cf. *Śrītattvanidhi*, pp. 245-246 :

अथ संध्याताण्डवध्यानम्

चतुर्भुजं त्रिणेत्रं च जटामकुटिनं दधम् [ मकुटधारिणम् ] । अभयं डमरुं सव्ये वामे पिञ्छं सविस्मयम् ॥
अपस्मारं विना पीठे वामाङ्घ्र्याकुञ्चितं स्थितम् । ऊर्ध्वे तु दक्षिणं पादमपसव्यानुगं दधम् [ दधत् ] ॥
तत्पादं कुञ्चितं वाथ सर्पकङ्कणभूषितम् । संध्याताण्डवमेवं स्यात "

[14] A : सुस्थितं दक्षिणं पादं
[15] C, E : संस्थितं pour सुस्थितं
[16] A : दक्षिणात्रयटङ्कौ च
[17] E : पाशनागं च
[18] A : वामगे
[19] A : दधच्चतुर्भिस्तैस्तैश्च ; E : दधतं च चतुर्हस्तैः
[20] F : इदं च नृत्तरूपं स्यात्
[21] *Śrītattvanidhi*, pp. 248-249 :

अथ कालिकाताण्डवध्यानम्

एकवक्त्रं द्विनयनं जटासंकीर्णमस्तकम् । भुजाष्टकसमायुक्तं सव्यपादं समुद्धृतम् ॥
सवक्रं वामपादं तदपस्मारोपरि स्थितम् । अभयं शूलपाशं च डमरुं दक्षिणे करे ॥
कपालं चाग्निपात्रं च घण्टां वामकरे वरम् । गजहस्तोपमं हस्तं प्रसृतं दक्षिणानुगम् ॥
दधल्लक्षणसंयुक्तं शेषं प्रथमनृत्तवत् । कालिकाताण्डवं प्रोक्तम्"

cf. *Saṃgītaratnākara*, 7, 704-705a :

चारीनूपुरपादोऽथ दण्डपादाद् द्रुतः करः । दण्डवन्न्यस्यते यत्र दण्डपादं तदुच्यते ।
सूरयो विनियुञ्जन्ति तत्साटोपपरिक्रमे ।

[22] A : ऊर्ध्वदण्डवदुद्धृतम् ; C, D, F : वोर्ध्वदण्डवदुद्धृतम्
[23] A : नृत्तरूपक्रियाभिन्नं
[24] Cf. *Kāmikāgama*, II, 61, 1-9 :

त्रिमूर्तिस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् । रक्तवर्णस्त्रिणेत्रश्च वरदाभयहस्तकः ॥
कृष्णापरशुसंयुक्तो जटामकुटमण्डितः । ऋज्वागतस्तथैकेन पादेनापि समन्वितः ॥
दक्षिणोत्तरयोश्चैव पार्श्वयोरुभयोरपि । कटिप्रदेशादूर्ध्वे तु ब्रह्मविष्णूर्ध्वकाययुक् ॥
स्त्रीमानवत्तयोर्मानं ब्रह्मविष्ण्वोस्तु कल्पयेत् । कृताञ्जलिपुटावेकपादयुक्तौ च वा मतौ ॥
अथवा शिवलिङ्गस्य पार्श्वतोऽन्तर्गतौ कृतौ । अथवा तौ पृथक् स्थाप्यावेकविटरमास्थितौ ॥
अथवा मध्यमे लिङ्गं पृथगालयसंस्थितम् । तस्य सव्येऽपसव्ये च ब्रह्मविष्णू तथा मतौ ॥
पृथग्धामस्थिता वैकधामस्था वा त्रिमूर्तयः । संश्लिष्टधामयुक्ता वा ब्रह्मविष्णुशिवा मताः ॥
पूर्वास्याः पश्चिमास्या वा परिवारादिसंयुताः । भिन्नप्राकारगा वापि एकप्राकारसंस्थिताः ॥
नृत्तमूर्त्यादिदेवा वा स्थापनीयास्तु मध्यमे । एवं लक्षणमाख्यातम् "

[25] D : मूर्त pour मूर्ति
[26] C : रक्ष pour रक्त
[27] A : त्रिणेत्रकम्
[28] C, D : पाद pour पादं
[29] C : कटिप्रदेशे वोर्ध्वे तु ; E : कटिप्रदेशोर्ध्वे तु
[30] C : कायधुक् pour काययुक् ; F : कार्ययुक्

[1]स्त्रीमानवत्तयोर्मानं [2]ब्रह्मविष्ण्वोस्तु कल्पयेत् । [3]कृताञ्जलिपुटावेतौ सर्वलक्षणलक्षितौ[4] ॥
अथवा तौ पृथक्संस्थौ सर्वावयवसंयुतौ । देवस्य पार्श्वयोः [5]कुर्यादेतद्विष्टरमाश्रितौ ॥२४२॥
[6]मूर्तिरूपमिदं[7] प्रोक्तम् ; चक्रदानमथोच्यते ।

[ चक्रदानम्[8] ]

गौरीसमन्वितं [9]देवं कृत्वा तस्यैव दक्षिणे ॥ २४३ ॥
विष्णुरूपं च कृत्वाथ [10]कृताञ्जलिपुटं स्थितम् । तस्य हस्ते [11]ददच्चक्रं रूपं [12]तच्चक्रदं भवेत् ॥

[ चन्द्रशेखरम्[13] ]

चक्रप्रसादमुद्दिष्टम् ; चन्द्रशेखरमुच्यते । [14]त्रिनेत्रं चतुर्भुजं [15]चैव जटामकुटसंयुतम् ॥२४५॥
चन्द्रावयवलक्ष्माणं गौरीयुक्तमृजु[16] स्थितम् । कृष्णापरशुसंयुक्तं वरदाभयहस्तकम् ॥ २४६ ॥
चन्द्रशेखरमुद्दिष्टम् ;

---

[1] A, D : स्त्रीमानवर्त्तयोर्मानं ; F : स्त्रीमानं वर्त्तयोर्मानं    [2] C, F : ब्रह्मविष्णोस्तु
[3] C : कृत्वाञ्जलिपुटान्तं च ; D : कृत्वाञ्जलिपुटान्तौ च ; E : कृत्वाञ्जलिपुटौ तौ च
[4] C : लक्षितम् pour लक्षितौ    [5] E : कुर्यादेतौ pour कुर्यादेतद्
[6] C : मुक्ति pour मूर्ति    [7] A : इति pour इदं
[8] Cf. *Kāraṇāgama*, II, 81, 1-6a :
अथातः संप्रवक्ष्यामि सर्वभूतहिताय च । चक्रदानस्वरूपं तु शृणुष्व शरवणोद्भव ॥
त्रिणेत्रं चतुर्भुजं शान्तं जटामकुटमण्डितम् । वामपादं तु शयनं लम्बितं सव्यपादकम् ।
टङ्कं रथाङ्गं सव्ये च वरदं कृष्णमृगं तथा । वामे विष्णुसमायुक्तं कृताञ्जलिपुटान्वितम् ॥
वामे गौरीसमायुक्तमुत्तरे परमेष्ठिनम् । सर्वावयवसंयुक्तं सर्वलक्षणसंयुतम् ॥
पद्मपुष्पं समभ्यर्च्य हरिणा नेत्रपूजितम् । प्रभामण्डलमध्यस्थशिरश्चक्रसमायुतम् ॥
एवं कल्प्य विशेषेण ".
[9] C : दैवं pour देवं    [10] A : कृताञ्जलिपुटस्थितम्
[11] C : दधच्चक्रं ; E : तु तच्चक्रं    [12] A : तत्क्रन्दनं भवेत्
[13] Cf. *Santānasaṃhitā*, 16, 59b-60 :
ऋजुमार्गस्थितं देवं वरदाभयहस्तकम् । दक्षिणेऽदक्षिणे हस्ते टङ्ककृष्णमृगं तथा ॥
चन्द्रशेखरमेवोक्तम् "
cf. *Śrītattvanidhi*, pp. 260-261 :
तत्रादौ चन्द्रशेखरध्यानम्
अभयवरदहस्तं सौम्यशृङ्गारभावं विपुलवदननेत्रं चन्द्रबिम्बांशमौलिम् ।
ऋजुतनुसमपादस्थानकं विद्रुमाभं हरिणपरशुपाणिं पद्मपीठोपरिस्थम् ॥
अथैतत्पार्श्वस्थगौरीध्यानम्
श्यामां त्रिणेत्रां द्विभुजां त्रिभङ्गीं सव्यापसव्यस्थितकुञ्चिताङ्घ्रिम् ।
सव्ये तु नीलोत्पलचारुहस्तां देवस्य वामस्थितपद्मपीठाम् ॥
[14] C, F : त्रिणेत्रं    [15] A : चैवं    [16] A : मृदु pour ऋजु

[ देव्यर्धम्[1] ]

देव्यर्धमधुनोच्यते । [2]दक्षिणेतरयो रूपं शिवयोः परिकल्पयेत् ॥ २४७ ॥
दक्षिणे तु द्विहस्तं [3]स्याद्वामे [4]चैककरेण तु । अभयं परशुं दक्षे वामे स्यात्कटकामुखम्॥२४८॥
किंचिद्भङ्गसमायुक्तं ललाटे [5]चार्धनेत्रयुक् । करण्डमकुटोपेतं [6]देवीदेवेशयोर्भवेत् ॥ २४९ ॥
[7]दक्षिणे रक्तवर्णं तु वामे श्यामनिभं भवेत् । भूषणै रुचिरैर्युक्तमुभयोरपि पार्श्वयोः ॥ २५० ॥
उरोदेशे च देव्यंशे घनस्तनसुसंयुतम् । पृष्ठे [8]वृषेन्द्रसंयुक्तं [9]वृषहीनमथापि वा ॥ २५१ ॥

[ द्विविधं दक्षिणामूर्तिरूपम्[10] ]

एवं [11]देव्यर्धमुद्दिष्टम् ; दक्षिणामूर्तिरुच्यते । [12]त्रिनेत्रं चतुर्भुजं चैव किञ्चित्कुञ्चितमूर्धजम्[13]॥
[14]वामोरूपरिविन्यस्तदक्षिणाङ्घ्रिं सितद्युतिम् । [15]लम्बितं वामपादं[16] स्याद्दक्षिणेतरयोरपि ॥
[17]संदंशमक्षमालां च वरदं चानलं तथा । दधत्कराग्रै[18]र्मुनिभिर्नानागोत्रैः सुसंयुतम् ॥२५४॥
दक्षिणामूर्तिरूपं[19] तु प्रोच्यतेऽन्यज्जनार्दन । लम्बितं दक्षिणं [20]पादं वामपादं प्रकुञ्चितम् ॥

---

[1] Cf. *Dīptāgama*, 41, 2b-5 :
दक्षिणांशे हरं कुर्यादुमां वै वामके कुरु । कुञ्चितं दक्षिणं पादं वामपादं तु सुस्थितम् ॥
परशुं हरिणं सव्ये वामे वै दक्षिणोत्पलम् । कृत्तिवासधरः शर्वो दुकूलवसना उमा ॥
उमायाः सुस्तनं कुर्यात्सुस्तनं चालकाञ्चितम् । नयनार्धं ललाटे तु हरार्धे तु जटायुतम् ॥
एवं लक्षणतः कृत्वा ततः स्थापनमारभेत् ।
cf. *Suprabhedāgama*, I, 34, 100b-104a :
दक्षिणार्धे हरं चैव वामार्धे पार्वतीं तथा । दक्षिणं कुञ्चितं पादं वामपादमृजुस्थितम् ॥
मध्यकायानतौ वक्रमेवं कुर्यात्त्रिभागिकम् । हरस्य दक्षिणे हस्ते कूर्परं वृषके स्थितम् ॥
प्रकोष्ठे शुकसंयुक्तं हरं परशुसंयुतम् । वामे कटकहस्तं तु दक्षिणे त्वभयं स्मृतम् ॥
श्यामवर्णमुखां देवीं रक्तवर्णं हरं तथा । व्याघ्रचर्माम्बरं देवं पार्वतीं क्षौमधारिणीम् ॥

[2] F omet les demi-*śloka* 247b et 248a [3] E : च pour स्याद्

[4] Le *Kāraṇāgama* I, p. 92 et le *Kāmikāgama*, II, p. 194 donnent टङ्क au lieu de परशु; le *Dīpta* donne हरिण au lieu de अभय.

[5] E : चोर्ध्वनेत्रयुक् [6] E : देवीदेवेश्वरौ भवेत् [7] E : दक्षिणं pour दक्षिणे

[8] A : वृक्षेन्द्र pour वृषेन्द्र [9] A, F : विहीन pour वृषहीन

[10] Cf. *Dīptāgama*, 16, 152-154 :
संदंशं दक्षिणे हस्ते वामहस्ते तु पुस्तकम् । दक्षिणे चाक्षमाला स्याद्वामहस्ते तु चानलम् ॥
श्वेतरूपं त्रिणेत्रं स्याद्द्विपचर्मोत्तरीयकम् । आवृतालंकृताभङ्गि चन्द्रार्ककुसुमान्वितम् ॥
शयनं दक्षिणं पादं वामपादं तु कुञ्चितम् । ऋषिभिश्च समायुक्तं दक्षिणेशं प्रकल्पयेत् ॥
cf. *Kāraṇāgama*, II, 174b-178 ; 187-190a ; 193b-194a :
द्विविधं दक्षिणामूर्ति व्याख्यानमूर्तिकं तथा । गेयमूर्ति तयोश्चैव लक्षणं तु विधीयते ॥
चतुर्भुजं त्रिणेत्रं च द्वीपिचर्माम्बरान्वितम् । आवृतालंकृताभङ्गि शश्यर्ककुसुमान्वितम् ॥

संदंशं दक्षिणं हस्तं पुस्तकं वामहस्तके । सव्यके चाक्षमालां च व्यालं वै वामहस्तके ॥
पादाग्रे दृष्टिपातं तु किञ्चिद्भङ्गसमायुतम् । लम्बितं दक्षिणं पादं तस्योर्वग्रस्य चोपरि ॥
वामपादस्य नलकं संयुतं कारयेत्सुधीः । . . . . . .
" ऋषिसङ्घैः समावृतम् । अगस्त्यश्च पुलस्त्यश्च विश्वामित्रोऽङ्गिरास्तथा ॥
एवं व्याख्यानमूर्तिं तु गेयमूर्तिं शृणु त्वथ । कटकं दक्षिणं हस्तमधोमुखं तदुच्यते ॥
वामहस्तं तु कटकमूर्ध्ववक्त्रं तदुच्यते । तन्त्रीं निवेशयेदूरुकराग्रे दक्षिणपादके ॥
वामहस्तस्य कटके सव्यहस्तं तथोपरि । . . . . .
एतदेव विशेषं तु शेषं पूर्वोक्तवद्भवेत् । दक्षिणामूर्तिरेवं स्यात् "

cf. *Kāraṇāgama*, II, 68, 1b-6 :
दक्षिणामूर्तिरूपं तु वक्ष्येऽहं शृणु षण्मुख । त्रिणेत्रं चतुर्भुजं शान्तं शुद्धस्फटिकसंनिभम् ॥
जटामकुटकोपेतं नक्रकुण्डलमण्डितम् । पत्रं तु वामकर्णे तु सर्वावयवसुन्दरम् ॥
नाभिं वह्निसमायुक्तं ज्ञानमुद्रां तु दक्षिणे । दक्षिणे लम्बितं पादं वामाङ्घ्रौ कुञ्चितं पदम् ॥
योगपट्टिकयावेष्ट्य वामजानूपरि तथा । वामबाहुकरं चास्य पर्वतोपरि संस्थितम् ॥
अपस्मारोपरि देहे सव्यपादेन मण्डितम् । पृष्ठपार्श्वेऽथ न्यग्रोधं महोक्षं सव्यभागके ॥
ज्ञानदं तं मुनिगणैः सेव्यमानं महेश्वरम् ।

[11] E : देव्यशं pour देव्यर्ध [12] C, D, F : त्रिगेत्रं
[13] F : कुञ्चितमूर्ध्वजम् pour कुञ्चितमूर्धजम्
[14] C, F : वामोपरि तु सुन्यस्तदक्षिणाङ्घ्रि सितद्युतिम् ; D : वामोपरि तु सुन्यस्तं दक्षिणाङ्घ्रिं सितद्युतिम्
[15] A : बिम्बितं [16] Le mot पाद est mis ici au neutre au lieu du masculin.
[17] A, C : संदधेदक्षमालां च ; E : संदधत्त्वक्षमालां च [18] A : मणिभिः pour मुनिभिः
[19] F : लेपं pour रूपं [20] F : भागं pour पादं

[1]तस्य जानूपरिन्यस्तवामहस्तप्रकोष्ठकम् । शेषं पूर्ववदुद्दिष्टम्; कामारेरिदमेव हि ॥ २५६ ॥

[कामारिरूपम्[2] ]

रूपमग्रे स्थितं कामं [3]दहन्नेत्रोत्थवह्निना[4] । कामारिरूपमुद्दिष्टम्; कालनाशनमुच्यते ॥२५७॥

[ कालनाशनम्[5] ]

[6]त्रिनेत्रं चतुर्भुजं चैव जटामकुटसंयुतम् । दक्षिणे [7]शूलटङ्कौ च [8]सूच्यास्यं पाशमेव च॥२५८॥
वामे वहत्पुरः कालं [9]पातयच्च पदेन तु । देव्या च सहितं रौद्रं सर्वलक्षणलक्ष्यया ॥ २५९ ॥

[ वैवाह्यम्[10] ]

कालनाशनरूपं स्याद्; वैवाह्यमधुनोच्यते । [11]त्रिनेत्रं चतुर्भुजं रक्तं जटामकुटमण्डितम्॥२६०॥
कृष्णापरशुसंयुक्तं[12] वरदं वामपार्श्वके । दक्षिणेनाद्यहस्तेन दक्षिणस्यामुमां वधूम्[13] ॥ २६१ ॥
श्यामवर्णां द्विनेत्रां च करण्डमकुटान्विताम्[14] । कटकामुखहस्तां[15] तु वामतो दक्षिणे करे ॥
गृहीत्वा [16]क्रममाणं च कृत्वा तस्यैव वामतः । शङ्खचक्रधरं रूपं [17]कुर्याद्विष्णोश्चतुर्भुजम्॥२६३॥
[18]लाजपात्रकरं वापि [19]भृङ्गारकरमेव वा । ब्रह्माणमग्रतो देवं चतुर्वक्त्रं चतुर्भुजम् ॥ २६४ ॥
[20]अक्षमालां स्रुवं पार्श्वे दक्षिणे तु तथोत्तरे । [21]कमण्डलुं जलं चैव वहन्तं देववामके ॥२६५॥
आसीनं हेमवर्णाभं प्रसन्नं कारयेत्ततः । [22]लक्ष्मीमुमानुगां कुर्यात्तां पृष्ठे [23]श्लिष्य संस्थिताम् ॥
[24]अग्रे हविर्भुजं चापि [25]ज्वालारूपं प्रकल्पयेत् । एकासनगतान्सर्वानेवमेवं प्रकल्पयेत् ॥२६७॥
एवं [26]वैवाह्यरूपं स्यात्;

---

[1] A : तस्य जानूपरि स्तीर्थं ; E : तज्जानूपरिविन्यस्त० ; F : तस्य जानु परित्यक्त्वा

[2] Cf. *Dīptāgama*, 16, 148b-149 ; 44, 2-4a :
देवस्याभिमुखं कुर्यात्कामरूपं प्रपातितम् । उग्ररूपं विशालाक्षं चासीनं चासने हरम् ॥
कामहारि भवेदेवम् . . . . । . . . . .
आसने तु सुखासीनं कृष्णापरशुधारिणम् । किंचित्त्र्यक्षिगतं वक्त्रं रौद्रदृष्टिभयावहम् ॥
कामारिमेवं कुर्यात्तु सूचिहस्तपुरावृतम् । धनुश्शरधरं काममग्निज्वालाविभूषितम् ॥
अवनताननं कुर्यान्निश्वसन्तं विशेषतः ।

[3] A : देहे pour दहन्

[4] C : वारिणा pour वह्निना

[5] Cf. *Suprabhedāgama*, I, 34, 110-111a :
दक्षिणे तु करे शूलं वामे सूच्यङ्गुलि स्मृतम् । पादं कालस्य हृदये न्यस्त्वैवं पादसंस्थितम् ॥
कालनाशमिदं प्रोक्तम् ''

cf. *Dīptāgama*, 16, 149b-151 ; 45, 2 :
कालनाशनमुच्यते । उद्धृतं दक्षिणं पादं वामपादं तु कुञ्चितम् ॥
दक्षिणे तु करे शूलं परशुं वामहस्तके । दक्षिणे नागपाशं तु वामहस्ते तु सूचिकम् ॥
खड्गं वै दक्षिणे हस्ते वामहस्ते तु खेटकम् । . . .
प्रतिमां कारयेद्धीमान्पूर्वोक्तविधिना सह । देवस्य बाहुमात्रेण देवीं कुर्याद्द्विबाहुकाम् ॥

[6] C, E, F : त्रिणेत्रं

[7] C, E, F : शूलटङ्कं च

[8] A : सूच्यान्यत्पार्श्वमेव च; C : स्रुचास्य पाशमेव च; D : सूचास्या पाशमेव च; E : स्रुवं च पाशमेव च

[9] A : पादयच्च; E : पातयन्तं

[10] Cf. *Dīptāgama*, **16**, 122-128a :

"कल्याणमधुनोच्यते । किंचित्त्रिभङ्गिकं कार्यं वामपादं तु कुञ्चितम् ॥

देवस्य दक्षिणं हस्तं देव्या हस्तेन संयुतम् । वरदं वामहस्ते तु कृष्णापरशुसंयुतम् ॥

सर्वाभरणसंयुक्तं क्षौमाम्बरधरं हरम् । देवस्य बाहुमात्रेण देवीं कुर्याद्द्विबाहुकाम् ॥

द्विनेत्रां चारुवदनां मकरकुण्डलमण्डिताम् । कुर्यात्करण्डमकुटां मुक्ताहारसमन्विताम् ॥

दुकूलवसनां देवीं कुर्याद्देवं विशेषतः । लक्ष्मीं कनकरूपां तु द्विभुजां च सुलोचनाम् ॥

सर्वाभरणसंयुक्तामुमापार्श्वे व्यवस्थिताम् । जलदानोन्मुखं विष्णुं ब्रह्माणं होमसंमुखम् ॥

कल्याणं कारयेद्देवम्"

cf. *ibid.*, 35, **1b-2a**; **4b-7** :

प्रतिमालक्षणोक्तेन देवीं देवमजं कुरु । विष्णुं च लक्ष्मीमग्निं च ततः स्थापनमारभेत् ॥ . . .

स्थापयेन्मध्यमे देवं देवीं दक्षिणतो न्यसेत् । देव्याश्च दक्षिणं हस्तं गृह्णीयाद्दक्षिणेन तु ॥

सर्वशान्तिकरं ह्येतन्मुक्त्यर्थमधुनोच्यते । देवस्य वामभागे तु देवीं कुर्याद्विचक्षणः ॥

देव्यास्तु दक्षिणं हस्तं गृह्णीयाद्वामपाणिना । एतन्मुक्त्यर्थमाख्यातं ज्ञात्वा कर्म समाचरेत् ॥

वामभागे न्यसेद्विष्णुं ब्रह्माणं दक्षिणे न्यसेत् ।

[11] A : त्रिणेत्रं

[12] C : संयुक्त pour संयुक्तं

[13] E : उमावधूम् pour उमां नधूम्; F : उमां वसुम्

[14] F : अश्चिताम् pour अन्विताम्

[15] F : हस्तं pour हस्तां

[16] E : क्रममाणां pour क्रममाणं

[17] E : कुर्याद्विष्णुं चतुर्भुजम्

[18] F : जाल pour लाज

[19] C : श्रृङ्गार pour भृङ्गार; D : सृङ्गार; भृङ्गारः = सुवर्णघटितवारिपात्रम्

[20] A : अक्षमालास्रुवं

[21] A : कमण्डलुजलं

[22] C : लक्ष्मीं मानुषकां

[23] A : शिष्य . . . . . सिताम्; C : निष्ठसंस्थिताम्; D : शिष्यसंस्थिताम्; E : संव्यवस्थिताम्

[24] A : अग्रेषु द्विभुजां चापि; F : अग्रेऽष्टविभुजं चापि

[25] C : ज्वालरूपं

[26] C : वैरण्य pour वैवाह्य

[स्कन्दोमासहितम्[1]]

स्कन्दोमासहितं[2] शृणु । उमारुद्रात्मके रूपे [3]सुखासीने प्रकल्पयेत् ॥ २६८ ॥
कृष्णापरशुहस्तं च वरदाभयदं तथा । [4]कुञ्चितालम्बिते पादे वामदक्षिणयोः क्रमात् ॥२६९॥
देव्या रूपं च कर्तव्यं दक्षिणे कटकामुखम् । [5]वामं पीठोपरि [6]न्यस्तं हस्तयोः परिकल्पयेत् ॥
[7]पादयोर्लम्बितं वामं दक्षिणं स्यात्प्रकुञ्चितम् । तयोर्मध्ये गुहं [8]कुर्याद्देवोत्सेधाद्दभागिके ॥
एकभागं तदुत्सेधं सार्धेनैकेन वा भवेत् । द्विनेत्रं चतुर्भुजं रक्तं बालरूपमनिन्दितम् ॥२७२॥

[जलंधरवधम्[9]]

स्कन्दोमासहितं[10] प्रोक्तम्; जलंधरवधं[11] शृणु । [12]विकीर्णमूर्धजं शान्तं दक्षिणेतरयोः क्रमात्॥

---

[1] Cf. *Suprabhedāgama*, I, 34, 82-84; 86b-91a :

त्रिणेत्रं चतुर्भुजं सौम्यं बालेन्दुकृतशेखरम् । धुर्त्तूरभुजगोपेतं जटामकुटमण्डितम् ॥
व्याघ्रचर्माम्बरं चैव हारकेयूरसंयुतम् । यज्ञोपवीतसंयुक्तं कुण्डलाभ्यामलंकृतम ॥
मूर्तीनां द्वादशानां तु सामान्यमिदमीरितम् । अतः परं विशेषं तु क्रमशो वक्ष्यतेऽधुना ॥ ... ....
.... .... .... .... .... उमासहितमुच्यते । सहासने ह्युमादेवीं सुसौम्यवदनोज्ज्वलाम् ॥
द्विभुजां पद्महस्तां तु मकुटाभरणान्विताम् । कटकाख्यकरां वामे प्रसारितमथापि वा ॥
उमाबाहुस्तनान्तं वा मानं वै षण्मुखस्य तु । कण्ठे शूलसमायुक्तं छन्नवीरसमायुतम् ॥
उमाशङ्करयोर्मध्ये स्कन्दं वै बालरूपिणम् । आसनं [सीनं ?] स्थानकं वापि वरदं कटकान्वितम् ॥
कृत्वा सुखासनं यद्वा पूर्ववत्परमेश्वरम् । देवस्य मुखमन्वीक्ष्य किंचिद्गौरीं तु कारयेत् ॥

cf. *Santānasaṃhitā*, 16, 60b-63a :

उमासहितमुच्यते । पीठस्योर्ध्वे तु चास्थानं चतुर्भुजं त्रिणेत्रकम् ॥
देवस्य वामपार्श्वे तु देवीं कुर्याद्द्विबाहुकाम् । वामपादं तु शयनं लम्बितं दक्षिणं भवेत् ॥
दक्षिणं शयनं देव्या वामपादं प्रलम्बितम् । स्कन्दं मध्ये स्थितं देवं स्कन्दोमासहितं हि तम् ॥

[2] D : संहितं pour सहितं

[3] C : सुसीने तु pour सुखासीने

[4] A, C : कुञ्चितालम्बिताङ्घ्रि च

[5] A : वाम pour वामं

[6] A : न्यस्त pour न्यस्तं

[7] E : वामे प्रलम्बितं पादं

[8] C : कुर्यादेव pour कुर्याद्देव

[9] Cf. *Kāraṇāgama*, II, 80, 1-5a :

अथ वक्ष्ये विशेषेण जलंधरवधं शृणु । त्र्यक्षं च द्विभुजं रक्तं शिखायज्ञोपवीतिनम् ॥
चन्द्राभं छत्रधृग्वामे दण्डं वै सव्यहस्तके । दुकूलवसनोपेतं भस्मरुद्राक्षधारिणम् ॥
अभिमुखीकरणं यक्षः करालवदनान्वितः । शार्ङ्गबाणधरो घोरो देवस्य पुरतः स्थितः ॥
देवेन चक्रं संलिख्य पश्चाद्यक्षो महाभुजः । चक्रमुद्धृत्य बलिना छित्वा मूर्ध्नि महोज्ज्वलम् ॥
एवं संकल्प्य विधिना प्रतिष्ठां कारयेत्ततः ।

[10] D : संहितं pour सहितं

[11] A : वरं pour वधं

[12] F : विकीर्णमूर्ध्वजं

अनलमक्षसूत्रं च वहन्तमपरेण तु । दक्षिणेन तु तर्जन्या दर्शयन्तं जलंधरम् ॥ २७४ ॥
वामजानुनि वामं च [1]बाहुं न्यस्योत्कुटासनम् । [2]पर्यङ्कबन्धसंयुक्तं सोमं सोमविभूषणम् ॥
अग्रे जलंधरं [3]क्रुद्धं [4]चक्रेण विनिपातितम् । [5]कुर्यादेवमिदं रूपम् ; हर्यर्धमधुनोच्यते ॥२७६॥

[हर्यर्धम्[6] ]

दक्षिणेतरयोश्चापि [7]रुद्रनारायणात्मकम् । [8]रक्तं कृष्णं तथा रूपमेकशङ्खवहं तथा ॥ २७७ ॥
अभयं वरदं चैव ललाटे चोर्ध्वलोचनम् । दक्षिणे [9]मूर्ध्नि चन्द्रं च [10]वामोरसि च कौस्तुभम् ॥

[वृषारूढम्[11] ]

हर्यर्धमिति निर्दिष्टम् ; वृषारूढमिहोच्यते[12] । चतुर्भुजं [13]त्रिनेत्रं च जटामकुटसंयुतम् ॥२७९॥
कृष्णापरशुसंयुक्तं वरदाभयपाणिनम्[14] । सोमं वृषाश्रितं चापि कुर्याद्वै वृषवाहनम् ॥ २८० ॥
अथवा द्विभुजं कुर्याज्जटामकुटसंयुतम्[15] । [16]कूर्परं [17]दक्षिणं चैव [18]वृषमूर्ध्नि निवेशितम् ॥२८१
[19]अन्यं [20]कट्याश्रितं हस्तं [21]पादयोर्दक्षिणाङ्घ्रिकम् ।
[22]वामाङ्घ्रेरुपरि न्यस्तं किंचिद्भङ्गसमन्वितम् ॥२८२॥

---

[1] A : बाहुं न्यस्तोत्कटासनम् ; C : बाहुन्यस्तघटासनम् ; D : बाहुन्यस्तोत्कटासनम्

[2] C : पर्यङ्कबद्धसंयुद्धं ; E : पर्यङ्कबद्धसंयुक्तं

[3] F : क्रूरं pour क्रुद्धं

[4] C : चक्रेणैव निपातितम् ; D : चक्रे नैत्र निपातितम् ; F : चक्रेणैव निपादितम्

[5] A : कुर्याद्देवमिदं

[6] Cf. *Dīptāgama*, 42, 2-7a :
मानोन्मानप्रमाणेन प्रतिमां कारयेत्ततः । वामांशे तु हरिं कुर्याद्दक्षिणे शंकरं कुरु ॥
जटामकुटसंयुक्तमर्धचन्द्रविभूषितम् । नागकुण्डलसंयुक्तं ललाटनयनार्धकम् ॥
दिव्याम्बरधरं वामे मेखलैरुपशोभितम् । शिवरूपमिदं प्रोक्तं हरिरूपमतः शृणु ॥
मकरैः कुण्डलैर्युक्तं किरीटमकुटान्वितम् । पीताम्बरधरं रूपं हारकेयूरभूषितम् ॥
अभयं दक्षिणे हस्ते वरदं वामहस्तके । परशुं दक्षिणे हस्ते वामहस्ते सुदर्शनम् ॥
एवं कुर्याद्विशेषेण ततः स्थापनमारभेत् ।

cf. *Kāraṇāgama*, II, 62, 1b-6 :
हरनारायणं रूपं केशार्धं[शोर्ध्वे !] मस्तके जटा । वामे किरीटसंयुक्तं सव्ये कुण्डलधारिणम् ॥
वामे तु लम्बकर्णं स्याल्ललाटे शाय[चार्ध?] दृक्तथा । सव्ये टङ्काभयं चैव वामे चकुरवं[चक्रवरं?] तथा ॥
पीताम्बरधरं विष्णुं व्याघ्रचर्माम्बरं हरम् । दक्षिणे नीलकण्ठं स्यात्स्फटिकाभं तु वामतः ॥
सव्ये शङ्खनिभाकारं काचपुष्पाभं वामतः । पद्मपीठोपरिस्थं च मन्दस्मितसमायुतम् ॥
सर्वाभरणसंयुक्तं हरेरर्धमिहोच्यते । वामे गौरीसमायुक्तं रक्तवर्णं द्विनेत्रकम् ॥
कटकं लम्बहस्तं च त्रिभागेनैव संयुतम् ॥

[7] A : रुद्रं pour रुद्र

[8] F : वक्त्रं pour रक्तं

[9] A : मूर्ति pour मूर्ध्नि

[10] A : वामे शिरसि कौस्तुभम्

[11] cf. *Kāraṇāgama*, II, **59**, 211 :

एवं रूपकमं वक्ष्ये चतुर्भुजसमायुतम् । टङ्ककृष्णमृगं चैव जटामकुटशोभितम् ।
पद्मपीठे न्यसेत्पादं वामपादं समुद्धृतम् । सव्ये जङ्घोपरि न्यस्य वामजङ्घासमाश्रितम् ।
पादाङ्गुलीर्न्यसेद्भूमौ स्वस्तिकाकृति किंचित् । पृष्ठे चोक्षस्पर्शनं च ऊरुहस्तं तु वामके ॥
गोपतेर्मस्तके हस्तं विन्यसेदतिसुन्दरम् । धवलाभं महाशान्तं सर्वावयवसुन्दरम् ॥
एकासने महागौरीमथवा पृथगासने । कटकं लम्बहस्तं च सर्वावयवसुन्दरीम् ॥
सरत्नमकुटोपेतां वामे गौरीसमायुतम् । यद्वा च द्विभुजं शान्तं गोपतेर्मस्तके करम् ॥
ऊरुहस्तं विशेषेण वामे गौरीसमायुतम् । जटामकुटशोभाढ्यमन्दस्मितसमायुतम् ॥
यद्वा चोक्षसमारूढं वृषपृष्ठे सुखासनम् । पद्मपीठोपरिस्थं च शयनं वामपादकम् ॥
लम्बितं सव्यपादं च टङ्ककृष्णमृगं तथा । अभयं वरदं चैव सर्वाभरणभूषितम् ॥
श्यामाङ्गीं द्विभुजां देवीमुत्पलं वरदं तथा । शयनं लम्बितं पादं सर्वाभरणभूषितम् ॥

cf. *Dīptāgama*, **16**, 127-128 :

महेश्वरौ स्थितौ सम्यग्वृषभं पृष्ठत: स्थितम् । वृषस्य मध्यके देशे न्यसेद्वै वामत: करम् ॥
लम्बितं दक्षिणे हस्ते कृष्णापरशुधारिणम् । वृषारूढमिति प्रोक्तम् "

cf. *Suprabhedāgama*, I, **34**, 91b-92 :

वृषारूढमथो वक्ष्ये वृषभं पृष्ठत: स्थितम् । उमारुद्रौ स्थितौ कृत्वा कूर्परं वृषमस्तके ॥
मृगं परशुसंयुक्तं कर्तव्यं वृषवाहनम् ।

[12] E : अथोच्यते pour इहोच्यते

[13] C, F : त्रिणेत्रं

[14] A : पाणिना pour पाणिनम्

[15] C, E : मण्डितम् pour संयुतम्

[16] A : कोर्परं pour कूर्परं

[17] A : दक्षिणे pour दक्षिणं

[18] A : वृषमूर्ध्नि निवेशनम् ; C : वृषमूर्ध्वनिवेशनम्

[19] C, D : अन्यां pour अन्यं

[20] C : कव्यां श्रितं

[21] A : पादयोर्दक्षिणा वृषम्

[22] A : वामामां प्रत्युन्यस्तं ; C : वामाङ्घ्रिद्वयन्यस्तं ; D : वामाङ्घ्रियुतिन्यस्तं

[ त्रिपुरान्तकम्[1] ]

[2]वृषवाहं द्विधा प्रोक्तं ; त्रिपुरान्तकमुच्यते । जटामकुटसंयुक्तं कृष्णापरशुसंयुतम् ॥ २८३ ॥
[3]धनुर्बाणसमायुक्तं [4]किंचिद्भङ्गसमन्वितम् । पार्वत्या [5]च समोपेतं द्विभुजं वा प्रकल्पयेत् ॥
वामदक्षिणयोश्चापि [6]शरं चापधरं दधत् । रथस्य नाभ्यां कुर्वीत[7] [8]सगुहं सविनायकम् ॥

[ विषसंहरणम्[9] ]

त्रिपुरघ्नं समुद्दिष्टं ; [10]विषसंहरणं शृणु । पार्वत्या सहितं चैव सुखासीनं वरासने ॥ २८६ ॥
कृष्णापरशुसंयुक्तमभयं [11]च दधत्करैः । दक्षिणे[12] गरलं चान्ये[13] सर्वदेवनमस्कृतम् ॥२८७॥
कुर्याद्रूपमिदं सौम्यं विषसंहरणात्मकम् । [14]माहेश्वरं तथा [15]रौद्रं रूपाणां [16]विंशकं क्रमात् ॥

[ विष्णुः[17] ]

प्रोक्तमेवमथो वक्ष्ये रूपं [18]वै वैष्णवादिकम् । किरीटमकुटोपेतं श्यामवर्णं द्विनेत्रकम् ॥२८९॥
शङ्खचक्रधरं [19]चैव श्रीवत्साङ्कितवक्षसम् । दण्डाभयधरं[20] देवं [21]पीताम्बरसमन्वितम् ॥२९०॥

---

[1] Cf. *Dīptāgama*, 16, 129-130a :

सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् । धनुर्बाणसमायुक्तं कृष्णापरशुधारिणम् ॥
उमया सहितं देवं कुर्याद्वै त्रिपुरान्तकम् ।

cf. *Kāmikāgama*, II, 49, 1-3 ; 6a ; 9b-10a :

पुरारिस्थापनं वक्ष्ये तदादौ लक्षणं च वै । चतुर्भुजस्त्रिणेत्रश्च जटामकुटसंयुतः ॥
समभागयुतः सम्यक् स्थानकेन समन्वितः । सव्यकर्णस्थमकरकुण्डलेन समन्वितः ॥
कृष्णापरशुसंयुक्तपरहस्तद्वयान्वितः । धनुर्बाणायुधोपेतवामेतरकरान्वितः ॥......
परहस्तोज्झितो वाथ द्विहस्तस्त्रिपुरान्तकः । ....
कुर्यात्सलक्षणां वाथ वामभागे तु पार्वतीम् । एवं कृत्वा पुरारिं तु प्रतिष्ठां कारयेत्ततः ॥

cf. *Aṃśumatkāśyapa*, 70, 44-66

रथं तु मुकुलोपेतं मुकुलं रज्जुना वृतम् । मुकुलाभ्यन्तरे ब्रह्मा चतुर्वक्त्रश्चतुर्भुजः ॥
तस्य दक्षिणहस्तौ द्वौ वेणुदण्डकमण्डलू । कुण्डिकं पद्मपाशं च वामहस्तद्वये धृतम् ॥
रथस्य मुकुलाधस्थाद् वृषभं श्वेतवर्णकम् । रथं त्वापन्नमार्गेण कल्पयेत्कल्पवित्तमः ॥

[2] A : वृषवाहं च वा प्रोक्तं ; F : वृषवाहं त्रिधा प्रोक्तं

[3] A : धनुःशाला pour धनुर्बाण [4] F : किञ्चिदङ्ग pour किञ्चिद्भङ्ग

[5] C : च समेतं च pour च समोपेतं ; E : सहितं वापि

[6] A : शरं चापधरो दधत् ; C : शरं चापधनो दधत् ; E : शरचापधनुर्दधत्

[7] A : रथस्त्रीनस्यां कुर्वीत ; C : रथस्त्रीनभ्य कुर्वीत ; D : रथस्त्रीनाभ्य कुर्वीत ; E : रथस्त्रीनभ्या कुर्वीत

[8] A : संगुहं

[9] Cf. *Kāraṇāgama*, II, 65, 1-5 :

अथात: संप्रवक्ष्यामि विषापहरणेश्वरम् । चतुर्भुजं त्रिणेत्रं च किंचिद्दंष्ट्राकरालिनम् ॥
जटां रत्ननिभां विद्यात्पूर्णचन्द्रनिभाकृतिम् । त्रिशूलं खण्डिकां चैव गोकर्णाकृति दक्षिणे ॥
कपालं वामहस्ते च वामे गौरीसमायुतम् । वामपादं तु शयनं लम्बितं सव्यपादकम् ॥
महोक्षस्थं महाभीमं कालकूटविषाशनम् । कण्ठमध्ये महाकालमाबध्य गौरिपाणिना ॥
व्याघ्रचर्माम्बरधरं किङ्किणीमालया वृतम् । वृश्चिकाभरणोपेतं सर्वाभरणभूषितम् ॥

cf. *Śrītattvanidhi*, p. **286** :

एकवक्त्रं त्रिनयनं जटामकुटसंयुतम् । चतुर्बाहुं सुरक्तं समृगं परशुधारिणम् ॥
दक्षहस्ते गरं धृत्वा पानोन्मुखमदेक्षणम् । वरदं वामहस्ते तु सर्वालंकारसंयुतम् ॥
देवस्य वामपार्श्वे तु देवीं चैव तु कारयेत् ।
श्यामां द्विनेत्रां द्विभुजां त्रिभङ्गीं सव्यापसव्यस्थितकुञ्चिताङ्घ्रिम् ।
कण्ठे निपीड्य स्थितसव्यलम्बां चिन्ताकुलामीश्वरतुष्टिदात्रीम् ॥
पीतवस्त्रां द्विनयनां वाञ्छितार्थफलप्रदाम् ।

[10] F : वृषसंहरणं
[11] A, F : च दधत्करे ; E : दधतं करै:
[12] D : दक्षिणं pour दक्षिणे
[13] La forme grammaticale correcte est अन्यस्मिन्
[14] A : महेश्वरं
[15] F : रुद्रं
[16] A : विंशतिं pour विंशकं ; D : विंशं
[17] *Suprabhedāgama*, **I, 34, 118-119** :

" विष्णुरूपं ततः श्रृणु । शङ्खचक्रधरं देवं पीताम्बरधरं हरिम् ॥
श्रीभूमिसहितं देवं सर्वालङ्कारसंयुतम् । स्थितं वाथ समासीनं शयितं वापि कारयेत् ॥

cf. *Aṃśumatkāśyapa*, 48, 19-23a :

विष्णु: किरीटमकुटकटिसूत्रादिमण्डित: । पीताम्बरधर: सौम्यश्चतुर्भुजसमन्वित: ॥
अभयं दक्षिणे हस्ते कटकं वामहस्तके । गदां पद्मं च वामे तु शङ्खं चक्रं च दक्षिणे ॥
यद्वन्वै पद्मपीठस्थ: सस्यश्यामनिभाकृति: । आसीनो वा स्थितो वा स्याद्वामपार्श्वे श्रिया विना ॥
श्रिया युक्तां केवलां वा विष्णुमूर्तिं प्रकल्पयेत् । ईषद्विहसिते पद्मे वहन्ती श्री: करद्वये ॥
विष्णोर्लक्षणमेवं स्यात् "

[18] A omet वै
[19] E : देवं pour चैव
[20] A : परं pour धरं ; D : वरं
[21] A : पीताम्बरसमे स हि

[1]श्रीभूमिसहितं चैव [2]सुखासीनं स्थितं तु वा । [3]शयानं वापि तद्रूपं कल्पयेत्कल्पवित्तमः ॥
नृसिंहरूपं वा कुर्याच्छङ्खचक्रधरं तथा । [4]कुक्कुटासनमासीनमात्तपर्यङ्कबन्धनम्[5] ॥ २९२ ॥
[6]जानुद्वयोपरिन्यस्तकूर्परद्वयमुज्ज्वलम् । [7]सुसितं सगणं चैव कारयेत्पीठलोचनम् ॥ २९३ ॥

[ब्रह्मणो रूपम्[8]]

[9]ब्राह्मं [10]चतुर्भुजं रूपं जटामकुटसंयुतम् । चतुर्वक्त्रं प्रसन्नास्यं सर्वाभरणभूषितम् ॥ २९४ ॥

[शक्तिरूपद्वयम्[11]]

[12]बद्धचण्डातकं चैव प्रोद्भिन्नवयौवनम् । [13]पीनोन्नतकुचं चारु विशालजघनस्थलम्[14]॥२९५॥
[15]शूलं पाशं पताकं च कटकामुखमेव च । दक्षिणेतरयोश्चैव हस्तयोः[16] परिकल्पयेत्॥ २९६ ॥

---

[1] A : हितं चैव सुखासीनं तत्र रूपं प्रकल्पयेत् कल्पवित्तमः au lieu de *śloka* 291 ; D, F : विसहिं सहितं pour श्रीभूमिसहितं

[2] E : सुखासनस्थितं तु वा

[3] E : शयितं

[4] C : उत्कृष्ट pour कुक्कुट० ; D : उत्कुट्ट० ; F : उत्कट०

[5] A : बन्धकम् pour बन्धनम्

[6] A : जानूपर्योपरिन्यस्तकोर्पर०

[7] A : सुस्थितं pour सुसितं

[8] Cf. *Dīptāgama*, 16, 211-214a :
अधुना संप्रवक्ष्यामि ब्रह्मरूपं महानल । चतुर्वक्त्रं चतुर्बाहुं कमण्डल्वक्षधारिणम् ॥
रक्तवर्णजटायुक्तं यज्ञसूत्रोत्तरीयकम् । रक्तक्षौमधरं देवं वरदाभयहस्तकम् ॥
अक्षमालाधरं सव्ये वामहस्ते कमण्डलुम् । आसीनं वा स्थितं वाथ कुर्यात्पद्मासनस्थितम् ॥
सावित्री वाक्पतिश्चैव उभयोः पार्श्वयोः स्थिते ।

[9] F : ब्रह्माणं pour ब्राह्मं

[10] C, D, F : चतुर्मुखं pour चतुर्भुजं

[11] Cf. *Suprabhedāgama*, I, 34, 62b-66 :
" शक्तेस्तु लक्षणं श्रृणु । चतुर्भुजां त्रिणेत्रां च सर्वालंकारसंयुताम् ॥
नितम्बतटविस्तीर्णां मध्यक्षामां स्तनोन्नताम् । दक्षिणे चोत्पलोपेतां वामहस्ते स्रजं धरीम् ॥
वरदाभयहस्तां वै दुकूलवसनान्विताम् । करण्डमकुटोपेतामीश्वरस्य तु वामके ॥
पीठे चैकासने युक्तां तत्प्रभामण्डले स्थिताम् । चन्द्रार्काग्निप्रतीकाशां जगन्मङ्गलकारकाम् ॥
कारयेदीश्वरीमेवम् "

[12] A : चण्डचण्डात्मकं चैव ; D: बन्धचण्डातकं चैव

[13] C: पीनोन्नतं कुचं ; F: पीतोन्नतकुचं

[14] A : स्थितम् pour स्थलम्

[15] A, F : शूलपाशुपताकं च

[16] A, C et D omettent चैव हस्तयोः

आसीनं संस्थितं चापि पङ्कजासनमध्यमे । अथवान्यप्रकारेण [1]तदीयं रूपमुच्यते[2] ॥ २९७ ॥
एकवक्त्रं प्रसन्नास्यं [3]करण्डमकुटान्वितम् । द्विनेत्रं द्विभुजं चैव [4]श्यामपीतनिभं तथा॥२९८॥
तदीयं दक्षिणं [5]हस्तं [6]कटकामुखमुच्यते । वामपाणितलं चापि कारयेद्विष्टराश्रितम्[7] ॥ २९९ ॥
[8]कुञ्चितं वामपादं[9] तु दक्षिणं स्याद्विलम्बितम् । अथ [10]वामोरुविन्यस्तमस्य वामकरं स्थितम्[11] ॥
पूर्ववद्दक्षिणं हस्तं सर्वाभरणभूषितम् । [12]एवं [13]शक्तिद्विरूपं स्याद् [14]वैनायकमतः शृणु ॥३०१॥

[विनायकरूपम्[15]]

[16]त्रिनेत्रं गजवक्त्रं च करण्डमकुटान्वितम् । टङ्कपाशधरं [17]चापि [18]दन्तलड्डुकधारि च ॥
एकदन्तं प्रलम्बोष्ठं [19]नागयज्ञोपवीतधृक् । रक्ताम्बरं रक्तनिभमासीनं [20]संस्थितं तु वा॥३०३॥
[21]नृत्तं वापि प्रकर्तव्यम् ;

---

[1] A : तथा pour तदीयं

[2] L'ordre des *śloka* dans le ms. D est le suivant : 297, 299b, 298, 299a, 300 etc.

[3] C : करटा pour करण्ड

[4] D : वाम pour श्याम

[5] Le mot हस्त se trouve ici au neutre au lieu du masculin.

[6] C : कदा तु pour कटका

[7] A : विष्टराश्रकम् pour विष्टराश्रितम् ; C : विष्टनाश्रितम्

[8] D : आकुञ्चितं pour कुञ्चितं

[9] Le mot पाद se trouve ici au neutre au lieu du masculin.

[10] A, C, D : वा मूर्ध्नि विन्यस्तन्यस्त॰ pour वामोरुविन्यस्तमस्य

[11] E : स्मितम् pour स्थितम्

[12] A omet les *śloka* 301b et 302

[13] C : शान्तद्विरूपं ; E : शास्तुः स्वरूपं

[14] F: वैवाहिकम् pour वैनायकम्

[15] Cf. *Suprabhedāgama*, 1, 43, 8b-11a :
फलं दक्षिणहस्ते तु वामहस्ते स्वशृङ्गकम् । पाशाङ्कुशोर्ध्वहस्ते तु गजहस्ते तु लड्डुकम् ॥
करण्डमकुटं प्रोक्तं सर्पाभरणभूषितम् । शिरश्चक्रप्रभां कृत्वा पद्मपीठोपरि स्थितम् ॥
दाडिमीपुष्पसंकाशं सर्वाभरणभूषितम् । आसनं स्थानकं वापि कारयेद्विघ्ननायकम् ॥
cf. *Kāraṇāgama*, I, 57, 54-57:
गणेशं पुरुषाकारं गजकर्णं गजाननम् । महोदरं बृहत्कायमेकदंष्ट्रं त्रिलोचनम् ॥
रौद्रनेत्रं तु लम्बोष्ठं नागयज्ञोपवीतिनम् । करण्डमकुटोपेतं सर्वाभरणभूषितम् ॥
चतुर्दोर्दण्डसंयुक्तं दक्षिणेऽङ्कुशदन्तधृक् । पाशं च लड्डुकं चैव वामभागे तु धारितम् ॥
करस्थलड्डुकेनैव गजहस्ताग्रसंयुतम् । एतद्गणेशरूपं तु "

[16] C, F : त्रिणेत्रं

[17] E: वा pour च

[18] C: दन्तलस्सुकधारु च ; F: दन्तलस्सुखधारि च

[19] A: नागयज्ञोपवीतिनम्

[20] A: सुस्थितं

[21] C, E : रक्तं pour नृत्तं

[त्रिविधं स्कन्दरूपम्[1]]

स्कन्दरूपमतः[2] शृणु । षण्मुखं द्वादशकरं द्वादशाक्षं तथैव च ॥३०४॥
[3]मयूरवाहनं चैव दक्षिणे [4]त्वभयं तथा । शरं [5]खड्गं च शक्तिं च [6]वज्रं दण्डं वहत्करैः ॥
इतरैः [7]शरचापौ च [8]चर्म पाशं तथाङ्कुशम् । त्रिशूलं च [9]वहद्धस्तैरथवापि चतुर्भुजम् ॥३०६॥
वरदाभयहस्तं च वज्रशक्तिधरं तथा । एकवक्त्रं प्रसन्नास्यं रक्तवर्णं [10]त्रिनेत्रकम् ॥ ३०७ ॥
[11]आसीनं संस्थितं वापि करण्डमकुटान्वितम् । द्विभुजं वापि कर्तव्यं मुण्डं दण्डधरं[12] तथा ॥
[13]वामहस्तं [14]तु तस्यैव वामकट्याश्रितं भवेत् । स्कन्दरूपं त्रिधा प्रोक्तम् ;

---

[1] Cf. *Kāraṇāgama*, II, 93, 2,-13 :

षड्वक्त्रं द्वादशाक्षं च प्रतिवक्त्रं द्विलोचनम् । बालचन्द्रसमप्रख्यं द्वात्रिंशल्लक्षणान्वितम् ॥
शिख्यन्तं वा शिखिस्थं वा पादौ नूपुरमण्डितौ । शक्तिं शरं च खड्गं च अभयं ध्वजमेव च ॥
गदां चापं च कुलिशं खेटकं शूलमेव च । वरदं पङ्कजं धार्यं द्वादशं करमानतः ॥
शिखिस्थं लम्बपादं च दक्षिणे शयनं पदम् । समपादं पद्मपीठे शिख्यन्तं परिकीर्तितम् ॥
करद्वादशसंयुक्तमेकाननं विशेषतः । षड्वक्त्रं षड्भुजं वक्ष्ये नागवज्रवराभयम् ॥
शक्त्यायुधधरं वन्दे वज्रं वा वरबाहुकम् । घण्टाकपालसंयुक्तं शेषं पूर्ववदाचरेत् ॥
षडाननं द्विहस्तं स्याद्वज्रशक्तिधरं भवेत् । एकवक्त्रं चाष्टबाहुं पूर्ववच्छिखिकं भवेत् ॥
एकवक्त्रं द्विबाहुं च कटिबन्धाभयं तथा । शिरश्चक्रसमायुक्तं वस्त्रयज्ञोपवीतिनम् ॥
प्रभायां मकराख्यं च सर्वावयवसुन्दरम् । उत्तरे देवसेनां च द्विभुजां च द्विनेत्रकाम् ॥
किरीटमकुटोपेतामुत्पलं लम्बहस्तकम् । चित्रवस्त्रसमायुक्तां पीतवर्णसमन्विताम् ॥
वल्लीं च दक्षिणे पार्श्वे सरत्नमकुटोज्ज्वलाम् । स्तनौ कञ्चुकसंयुक्तौ पङ्कजं लम्बहस्तकम् ॥
रक्तवर्णधरां देवीं चित्रवस्त्रसमन्विताम् । एवं ध्यात्वा "

Cf. *Suprabhedāgama*, I, 44, 7b-13 :

शिलामृद्दारुलोहैर्वा नवतालेन मानयेत् । द्विहस्तो वा चतुर्बाहुरष्टबाहुरथापि वा ॥
द्विभुजं पद्महस्तं तु वज्रं शक्तिं तथापरे । अभयं वरदं पूर्वे चतुर्बाहुरिति स्मृतः ॥
खड्गखेटकमूर्ध्वे तु पाशं पद्मं तथाष्टकम् । आसनं स्थानकं वापि यानं वै त्रिविधं तथा ॥
आसनं द्विभुजं प्रोक्तं स्थानकं स्याच्चतुर्भुजम् । यानमष्टभुजे कुर्यात्स्थापनं परिवारके ॥
स्कन्दं पद्मगजारूढमुपवीतसमन्वितम् । दाडिमीपुष्पसंकाशं सर्वाभरणभूषितम् ॥
सर्वलक्षणसंयुक्तं पूर्वोक्तेन विधानतः । विद्या मेधा च सहिते शुक्लश्यामनिभे तथा ॥
सर्वालंकारसंयुक्ते द्विभुजे पद्मधारिके ॥

[2] C, E: अथ pour अतः [3] C, D, F : मायूर pour मयूर [4] A omet तु
[5] D: हस्तं च [6] C, D, E : वक्रदण्डं pour वज्रं दण्डं
[7] E: शरचापं च [8] A : शर्मपार्श्वं तथाङ्कुरम् [9] A, E, F: वहन् हस्तैः pour वहद्धस्तैः
[10] A: त्रिणेत्रकम् [11] E : आसीनं वा स्थितं वापि [12] C, D, F: वरं pour धरं
[13] A: वामहस्तकृतस्यैव
[14] Le mot हस्त se trouve ici au neutre au lieu du masculin.

[सूर्यरूपम्[1] ]

[2]सौररूपं सनातनम् ॥ ३०९ ॥

[3]प्रभामण्डलसंयुक्तं द्विनेत्रं च द्विबाहुकम् । रक्तरूपधरं रक्तवाससा च समन्वितम् ॥ ३१० ॥

[4]पद्मोपरि स्थितं [5]पद्महस्तमार्जवसंस्थितम् ।

[दुर्गारूपम्[6]]

[7]दौर्गं रूपं [8]त्रिनेत्रं च करण्डमकुटान्वितम् ॥ ३११ ॥

[9]अष्टहस्तं तथा श्यामं पीनोन्नतपयोधरम् । दक्षिणेऽभयवज्रं[10] च खड्गचक्रं [11]वहत्करैः ॥

शारिकाशङ्खचर्माणि धनुश्चापि [12]तथेतरैः । माहिषे शिरसि न्यस्तचरणारुणपङ्कजम् ॥ ३१२ ॥

[13]बद्धचण्डातकं चैव किंचिद्भङ्गसमन्वितम् । एवं दौर्गं समुद्दिष्टम् ;

[क्षेत्रपालरूपम्[14]]

क्षेत्रेशस्य त्रिलोचनम् ॥ ३१४ ॥

---

[1] Cf. *Suprabhedāgama*, I, 49, 7-10:

द्विभुजं पद्महस्तं तु रक्तवर्णस्वरूपकम् । करण्डमकुटोपेतं सर्वाभरणभूषितम् ॥
मकुटद्विगुणं तारं प्रभामण्डलमध्यगम् । उषा च प्रत्युषा देवी सव्यासव्ये तु संस्थिते ॥
अरुणं चाग्रतः कृत्वा पङ्कजं तत्स्वरूपकम् । सप्ताश्वरथमध्यस्थं भास्करं पापनाशनम् ॥
रक्तपद्मासनस्थं हि आसनं तत्र कल्पयेत् । पूर्वोक्तविधिना सर्वमादित्यं परिकल्पयेत् ॥

[2] A: सौन pour सौर

[3] C : प्रभामण्टपसंयुक्तं

[4] A omet les *śloka* 311 à 314 a

[5] F: पद्मं हस्तमाजपसंस्थितम्

[6] Cf. *Suprabhedāgama*, I, 46, 1-4a :

अथातः संप्रवक्ष्यामि दुर्गायाः स्थापनं परम् । आदिशक्तेः समुद्भूता विष्णुप्राणानुजा शुभा ॥
शङ्खचक्रधरा देवी धनुस्सायकधारिणी । खड्गखेटकसंयुक्ता शूलपाशसमायुता ॥
चतुर्भुजां वा कुर्वीत सर्वाभरणभूषिताम् । श्यामवर्णां सुवदनां महिषस्य शिरःस्थिताम् ॥
सिंहारूढां च वा कुर्यात्पद्मासनसमागताम् ।

[7] C, D : दौर्गारूपं ; E : दुर्गारूपं

[8] E : त्रिणेत्रं

[9] C : अष्टहस्तं तथायामं ; E : अष्टहस्तसमोपेतं

[10] C, D : वज्रौ pour वज्रं

[11] C, D, E : वहन् करैः

[12] D : तथोच्यते

[13] E : बद्धचूडान्तकं ; F : बद्धचण्डान्तकं

[14] Cf. *Suprabhedāgama*, I, 50, 4-10 a:

चतुर्भुजं त्रिणत्रं वा षड्भुजं चाष्टहस्तकम् । सुदंष्ट्रं भैरवाकारं कृष्णवर्णं दिगम्बरम् ॥
सर्पयज्ञोपवीतं च शिरोमालाकरोटिकम् । उर्ध्वकेशं सुवृत्ताक्षं नागाभरणभूषितम् ॥
त्रिशूलं दक्षिणे हस्ते वामहस्ते कपालकम् । खड्गं च दक्षिणे हस्ते वामहस्ते तु खेटकम् ॥
एवं चतुर्भुजं विद्धि षड्भुजं च ततः शृणु । नागं च दक्षिणे पाणौ तोमरं वामहस्तके ॥
प्रागुक्तायुधसंयुक्तं षड्भुजं त्विति कीर्तितम् । शूलं डमरु खट्वाङ्गं दक्षिणे वामहस्तके ॥
एवमष्टभुजं प्रोक्तं षड्भुजायुधसंनिभम् । चलस्थापनवत्कृत्वा रत्नन्यासादिपूर्वकम् ॥
क्षेत्रपालं स्वमन्त्रेण प्रतिष्ठां सम्यगाचरेत् ।

नग्नमष्टभुजं चैव किङ्किणीमालया युतम् । [1]उन्मुखं [2]पातकं चैव दधन्मूर्ध्नि[3] भयंकरम् ॥
दंष्ट्राकरालवदनमूर्ध्वकेशं घनद्युति[4] । दक्षिणे [5]शूलखड्गं च पाशं डमरुकं [6]वहत् ॥ ३१६ ॥
[7]वामे [8]कपालमस्त्रं तु घण्टां चापं च कार्मुकम् । ऋज्वायतं स्थितं रूपं नूपुरेण समन्वितम् ॥
चतुर्भुजं वा कुर्वीत शूलं डमरुकं [9]वहत् । [10]दक्षिणेऽन्ये कपालं च पाशं चापि सुरार्चितम् ॥

[चण्डेशरूपम्[11]]

चण्डेशस्याथ[12] रूपं तु चतुर्हस्तं [13]त्रिनेत्रकम् । [14]विकीर्णमूर्धजं शूलं पाशं चापि वहत्करैः ॥

---

cf. *Aṃśumatkāśyapa*, **50**, 66-74a :

त्रिविधं क्षेत्रपालं तु सात्त्विकं राजसं तमः । श्वेतं रक्तं तथा कृष्णं सात्विकादिगुणं भवेत् ॥
द्विभुजं चतुर्भुजं शान्तं राजसं षड्भुजान्वितम् । तामसं चाष्टदोर्दण्डं त्रिणेत्रं समपादकम् ॥
स्थानकं पद्मपीठे तु भद्रपीठे तु वा विदुः । शूलं दक्षिणहस्ते तु कपालं त्वितरे धृतम् ॥
एवं द्विभुजमाख्यातं चतुर्भुजमथोच्यते । परहस्ते तु सव्ये च खट्वाङ्गं खड्गमन्यके ॥
अथवा पूर्वहस्ते तु अभयं वरदान्वितम् । पूर्ववत्परहस्तौ द्वौ घण्टां (च) वामहस्तके ॥
सात्त्विकं ह्येवमाख्यातं राजसं तु ततः श्रृणु । शूलं खड्गं च घण्टां च दक्षिणे तु करत्रये ॥
खेटकं च कपालं च नागपाशं च वामके । तामसं तु धनुर्बाणं दक्षिणेऽदक्षिणे धृतम् ॥
शेषं राजसवत्ख्यातं रक्तकेशोर्ध्वमण्डलम् । उग्रदृष्टिसमायुक्तं नानानागविभूषितम् ॥
त्रिणेत्रं नग्नकं चैव क्षेत्रपालं प्रकल्पयेत् ।

[1] C : षण्मुखं pour उन्मुखं ; E omet le demi-*śloka* 315b.
[2] C, D, F : पतगं pour पातकं [3] C : मूर्ति pour मूर्ध्नि
[4] A : द्युतिम् pour द्युति ; C : द्युतिः [5] C : तूल pour शूल
[6] C, D, E, F : वहन् [7] C, D et E omettent les *śloka* 317 et 318a
[8] A : कपालहस्तं तु [9] A : वहन्
[10] C : दक्षिणेऽन्यकपोलं च ; D : दक्षिगेऽन्यकपालं च ; E: दक्षिणेन कपालं च
[11] Cf. *Dīptāgama*, **16**, **142-147** :

चण्डः प्रचण्डो विक्रान्तश्चण्डेश्वरश्चतुर्विधः । चण्डं कृतयुगे प्रोक्तं चाष्टभिर्दोर्भिरन्वितम् ।
त्रिणेत्रं श्वेतवर्णं तु पद्मपीठोपरिस्थितम् । परशुं वज्रशूलं च दक्षिणे तु करोद्धृतम् ॥
हरिणं शक्ति घण्टां च वामहस्ते तु धारयेत् । हृदयेऽञ्जलिसंयुक्तं चण्डं कुर्याद्विशेषतः ॥
प्रचण्डं षड्भुजैर्युक्तं त्रेतायां परिकल्पयेत् । शूलघण्टाविहीनं स्याच्छेषं पूर्ववदेव तु ॥
विक्रान्तं द्वापरे प्रोक्तं चतुर्बाहुं द्विनेत्रकम् । कृताञ्जलिसमायुक्तं वज्रशक्तिसमन्वितम् ॥
कलौ चण्डेश्वरः प्रोक्तो द्विबाहुश्च द्विलोचनः । टङ्कं तु दक्षिणे हस्ते वरदं वामहस्तके ॥

cf. *Kāraṇāgama*, I, 13, 94-97a :

"चण्डेशस्याकृतिं श्रृणु । चण्डश्चण्डेश्वरो रक्तश्वेतमिश्रश्च विस्तरः ॥
द्विबाहुः सजटाचूडशेखरः कर्णकुण्डलः । धृतयज्ञोपवीतश्च शुक्लाम्बरधरः शुचिः ॥
सर्वभूषणसंभूष्यष्टङ्कपाणिरथापि वा । अर्धचन्द्रासनासीनः पुष्पमालावलम्बितः ॥
चण्डेशस्याकृतिर्ह्येवम्"

[12] E : अपि pour अथ [13] A : त्रिणेत्रकम् [14] F : विकीर्णमूर्ध्वजं

[1]कृताञ्जलिपुटं कुर्यादासीनं संस्थितं तु वा । अथवा द्विभुजं कुर्याद्द्विनेत्रं च कृताञ्जलिम् ॥
[2]कूर्परे [3]कृतटङ्कं वा स्थितमासीनमेव वा । अथवा दक्षिणे हस्ते गृहीत्वा टङ्कमुद्यतम्[4] ॥ ३२१ ॥
[5]वामजानूपरिन्यस्तवामहस्तं वरासने । आसीनं चण्डरूपं तु कुर्याद्वापि [6]यथेच्छया ॥ ३२२ ॥
चण्डरूपमिति प्रोक्तम् ;

[मोटीरूपम्[7]]

मोट्या रूपं द्विलोचनम् । [8]बिम्बांशुकं प्रसन्नास्यं लम्बिताङ्घ्रिद्वयं भवेत् ॥
[9]दक्षिणे कटकाहस्तं [10]वाममप्यासनाश्रितम् ।

[ज्येष्ठारूपम्[11]]

ज्येष्ठारूपं [12]तथा कार्यं दक्षिणेतरपार्श्वयोः ॥ ३२४ ॥
[13]पुंस्त्रीरूपकमन्यत्स्यात्पुंरूपं [14]वृषवक्त्रधृक्[15] । काकध्वजसमोपेतम्[16] ;

---

[1] A, C, D : कृत्वा pour कृता०  [2] A, C : कोर्परे pour कूर्परे

[3] C : तु कृतं टङ्कं pour कृतटङ्कं वा ; E : च कृतं टङ्कं

[4] A : अन्तकम् pour उद्यतम् ; C, D : उत्तमम् ; F : अन्तरम्

[5] C, D : वामजानुनि विन्यस्य वामहस्तं ; E : वामजानुनि विन्यस्तवामहस्तं ; F : वामं जानुनि विन्यस्य वामहस्तं

[6] F : यथोच्छ्रितम्

[7] Cf. *Aṃśumatkāśyapa*, 50, 87-90 :
मोटी हस्तद्वयोपेता सौम्याननद्विनेत्रका । अत्यन्तसुन्दरा शान्ता सर्वाभरणभूषिता ॥
नानागन्धानुलिप्ताङ्गा नानापुष्पोपशोभिता । करण्डमकुटोपेता पद्मपीठोपरि स्थिता ॥
किंचिद्विशालकुक्षी च पीनोरुजघनस्तनी । दुकूलपट्टदेवाङ्गैर्नानावस्त्रधरा वरा ॥
सस्यश्यामनिभाकारा रक्तोत्पलधृतकरा । आजानु लम्ब्य वामे तु हस्तं च समभङ्गिका ॥

[8] C : बिम्बाहुकं ; E : द्विबाहुकं

[9] C : दक्षिणं कटकाहस्तं ; E : दक्षिणं कटकं हस्तं  [10] A : वाममन्यासनाश्रितम्

[11] Cf. *Kāraṇāgama*, I, 12, 114b-118a :
पीनोर्वी पीनगण्डा च पीनस्तनभरोदरी । नीलकालकसीमान्तासमधम्मिल्लशिरोरुहा ॥
स्निग्धाञ्जननिभा रक्ता बिम्बोष्ठी तुङ्गनासिका । द्विभुजा च द्विनेत्री च कुसुदं दक्षिणे करे ॥
कन्यापुत्रान्विता देवी दक्षिणेऽदक्षिणेऽपि च । देव्या बाहुसमं कुर्यात्कन्यकापुत्रकौ क्रमात् ॥
पुत्रो वृषभवक्त्रस्तु द्विभुजौ च द्विनेत्रकौ । ज्येष्ठाया आकृतिर्ह्येवम् "
cf. *ibid.*, II, 83, 1b-5a :
चतुर्भुजं द्विनेत्रं च बृहद्वक्त्रसमायुतम् । बृहत्कुक्षिसमोपेतं द्विपादं कुञ्चितं भवेत् ॥
महापीठोपरिस्थं च वज्राभं मकुटान्वितम् । जलोच्छिष्टलतामालापर्यङ्काः सव्यके करे ॥
द्विभुजा च द्विनेत्रा च वराहाननमात्मजम् । वामे च तनयं भागे द्विभुजं लम्बबाहु च ॥
वह्निं च पानपात्रं च धारयेत्तु विशेषतः । पार्श्वयोर्लम्बहस्ताभ्यां कुरूपीं भावयाम्यहम् ॥

[12] E : इदं pour तथा  [13] A : पुंस्त्रीरूपमन्यं स्यात्

[14] D : विष pour वृष  [15] E : युक् pour धृक्  [16] E : समायुक्तम् pour समोपेतम्

[शास्तृरूपम्[1] ]

[2]अथ शास्तुः सुयौवनम् ॥ ३२५ ॥

श्यामवर्णं[3] द्विनेत्रं च द्विबाहुं [4]कीर्णमूर्धजम् । दक्षिणे [5]दण्डभृद्धस्ते वामहस्तं प्रलम्बितम् ॥
[6]आसीनं संस्थितं वापि कारयेद् ;

[दिक्पतयः[7]]

अथ दिक्पतीन् । इन्द्रं श्यामं यमं कृष्णं वरुणं स्फटिकप्रभम् ॥ ३२७ ॥

---

[1] Cf. *Kāraṇāgama*, I, 13, 85-91a :
मोहिनीतनयः शान्तो द्विबाहुः श्यामसंनिभः । पीठालम्बितशयितौ वामदक्षिणपादकौ ॥
वामाङ्घ्रिजानुकोर्ध्वे तु वामहस्तस्थितिं कुरु । मण्डलीभूतदण्डाग्रो वज्रदण्डधरो युवा ॥
स्निग्धनीलाञ्जनाकीर्णः कुण्डलीभूतमूर्धजः । गजवाहनकेतुः स्याद्विलासी सविलासिनिः ॥
नीलश्वेतश्च वृषभवाहनो वा चतुर्भुजः । रक्तचूडध्वजो वापि सर्वत्र परिकीर्तितः ॥
ज्ञानी योगासनासीनो वेदाध्यायी पवित्रकः । सोभयांसोपवीतः स्यान्न्यूनो वीरासने स्थितः ॥
लीलाविगीतभावी स्यात्सुरभावी सुखासनः । वामोरूपरिविन्यस्तावामपादतलेक्षणः ॥
आर्यस्याकृतिरेवं तु ”

[2] C, D, E : अतः pour अथ [3] D : वक्त्रं pour वर्णं

[4] A : कर्णमूलजम् ; C : कीर्णमूर्ध्वजम् ; F : कर्णमूर्ध्वजम्

[5] A : दण्डमृद्धस्ते ; D : दण्डभृद्धस्तैर् ; F : दण्डमृडस्ते [6] E : आसीनान् संस्थितान्वापि

[7] Cf. *Kāraṇāgama*, I, 13, 91b-94a :
वज्रपाणिर्महावीरः सिंहस्कन्धोऽवलीलधृक् । ललाटोरःस्थलायामपीवरोरुर्महोदरः ॥
प्रसन्नवदनः श्यामवर्णो रक्ताम्बरः सुखी । किरीटकुण्डली हारकेयूरादिविभूषितः ॥
पृथुशीर्षो गजारूढो देवराजः शचीपतिः । शक्रस्याकृतिरेवं तु . . . . . . . . . ॥

cf. *ibid.*, I, 14, 8b-22a :
अर्धचन्द्रासनासीनो ब्रह्मरूपो हुताशनः । प्रज्वलत्काञ्चनज्योतिः पिङ्गलः पिङ्गलोचनः ॥
हेमकूर्चाग्रसदृशश्मश्रुरूपं च शिरोरुहः । तरुणादित्यसंकाशं तद्वस्त्रमुपवीतकम् ॥
अक्षमाला च शक्तिश्च दक्षिणेऽदक्षिणेऽपि च । ज्वालामालाकुलं तीव्रं पार्श्वस्थाग्न्यंशुमण्डलम् ॥
मेषारूढं च कुण्डस्थं योगपट्टेन वेष्टितम् । दक्षिणे तु स्थिता स्वाहा रक्तकुण्डलमण्डिता ॥
अग्नेराकृतिरेवं स्याच्छृणु वैवस्वताकृतिम् । दण्डपाणिर्महादीप्तः कालाञ्जनसमच्छविः ॥
महामहिषिकारूढो दीप्ताग्निसमलोचनः । यमस्याकृतिरेवं तु राक्षसेशाकृतिं शृणु ॥
राक्षसेशो विशालाक्षः पीतवस्त्रः शवासनः । निर्ऋतिः सुस्थितासीनः खड्गहस्तो महोज्ज्वलः ॥
निर्ऋतेराकृतिर्ह्येवं वरुणस्याकृतिं शृणु । शङ्खकुन्देन्दुधवलः पाशहस्तो महाबलः ॥
केयूरकुण्डली हारी पीतवासाः सुशोभनः । आसीनो वा स्थितो वापि मकरे वरुणः स्मृतः ॥
कुञ्चितभ्रूर्युवा वायुस्ताम्रदृग् धूम्रसंनिभः । अङ्कुशेन करे वीरः शम्बराम्बरसंयुतः ॥
मृगारूढो विधातव्यः सर्वाभरणभूषितः । एवं सदागतिः सर्वव्यापकोऽयं समीरणः ॥
मकुटी कुण्डली हारी केयूरी नरवाहनः । यक्षराजः कुबेरोऽयं तप्तकाञ्चनसंनिभः ॥
शङ्खपद्मनिधीयुक्तो गदाहस्तो निधीश्वरः । वृषारूढो महाराजो धवलः पिङ्गलेक्षणः ॥
त्रिशूलपाणिरीशानस्त्रिणेत्रो लोकशंकरः । दिक्पालाकृतिरेवं स्याद् ”

[1]हेमवर्णं कुबेरं च रक्तं धूम्रं च कृष्णकम् । श्वेतं च [2]क्रमशो वह्निं निर्ऋतिं वायुमीशकम् ॥
द्विनेत्रा द्विभुजाः सर्वे निजायुधसमन्विताः । इन्द्रः किरीटसंयुक्तो वह्निरूर्ध्वज्वलच्छिखः ॥
जटामकुटसंयुक्त ईशानः स्यात्त्रिलोचनः । [3]करण्डमकुटोपेता अन्ये [4]सर्वे प्रकीर्तिताः ॥
एवं दिक्पालरूपं स्याद् ;

[सगणानां मातॄणां रूपम् ; तत्र सप्त मातरः[5]]

[6]मातृरूपमतः शृणु । ब्राह्मी ब्रह्मवदुद्दिष्टा[7] माहेशी च महेशवत् ॥ ३३१ ॥
कौमारी [8]गुहवज्ज्ञेया[9] वैष्णवी विष्णुरूपिणी[10] । वाराही [11]पोत्रिवक्त्रा स्यादिन्द्राणी चेन्द्रवद्भवेत् ॥
सर्वाः प्रसन्नवदनाः पीनोन्नतपयोधराः । चामुण्डा तु प्रकर्तव्या [12]त्रिनेत्रा च चतुर्भुजा ॥

---

[1] A : हैम pour हेम
[2] D : क्रमतो
[3] C, D, F : करण्डमकुटोपेतास्त्वन्ये
[4] A, C, D : सर्वाः pour सर्वे
[5] Cf. *Kāraṇāgama*, I, 12, 87b-102a :
चतुर्भुजा विशालाक्षी तप्तकाञ्चनसंनिभा । वरदाभयहस्ता च कमण्डल्वक्षमालिका ॥
हंसध्वजा हंसरूढा जटामकुटधारिणी । रक्तपद्मासनासीना ब्रह्माणी ब्रह्मरूपिणी ॥
त्रिणेत्री शुक्लवर्णा च शूलपाणिर्वृषध्वजा । वरदाभयहस्ता च साक्षमालाकरान्विता ॥
जटामकुटिनी शम्भोर्भूषणी सा महेश्वरी । कुमारसदृशा कन्या वर्णवाहनकेतुभिः ॥
वासिका बद्धमकुटा शक्तिकाङ्कुशधारिणी । रक्तवस्त्रा महावीर्या हारकेयूरभूषणी ॥
वरदाभयहस्ता च कौमारी कुङ्कुमप्रभा । पद्मपत्रविशालाक्षी श्यामवर्णा महाबला ॥
शङ्खचक्रगदापद्मधरा बाहुचतुष्टयी । गरुडध्वजसंयुक्ता वैष्णवी विष्णुभूषणी ॥
कृष्णपीताम्बरा शार्ङ्गी सर्वसंपत्करी नृणाम् । पवित्रालंकृतोरस्का पादनूपुरसंयुता ॥
सव्येऽभयं हलं चैव मुसलं वरमन्यके । वराहवक्त्री वाराही यमभूषणभूषणी ॥
वज्रहस्ता गजारूढा लोचनद्वयसंयुता । वस्त्रालंकारसंपन्ना गजेन्द्रध्वजवाहना ॥
वरदाभयशक्त्यात्तबाहुकेन्द्रप्रकीर्तिता । दीर्घजिह्वोर्ध्वकेशा च कृष्णका कृष्णदंष्ट्रिका ॥
निर्मांसा व्यावृतमुखी चण्डी खण्डेन्दुमण्डिता । काली कपालमाला च शवारूढा कृशोदरी ॥
कौशिकारोहिणी वासौ चामुण्डा गृध्रकेतुका । मांसखण्डसुसंपूर्णं कपालं वामपाणिभाक् ॥
शूलाही दक्षिणे चैव वह्निर्वामिकरस्थकः । व्याघ्रचर्माम्बरा काली त्रिणेत्री शङ्खकुण्डली ॥
लोकानां मातरः सप्तमातरः कथिता इमाः । मातॄणामाकृतिः प्रोक्ता"
cf. *ibid.*, 30, 354-355 :
याम्ये तु वीरभद्रेण विघ्नेश्वरसमन्वितम् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा सप्तमातरः । दक्षिणेऽदक्षिणे चैव वीरभद्रविनायकौ ॥
[6] F : छात्र pour मातृ
[7] D : उद्दिष्टं pour उद्दिष्टा
[8] A, F : सह pour गुह
[9] A, C, D, F : ज्ञाता pour ज्ञेया
[10] C, D, F : रूपवत् pour रूपिणी ; E : रूपका
[11] A, F : पोत्ररूपस्य pour पोत्रिवक्त्रा स्याद्
[12] F : त्रिणेत्रा

[1]बद्धचण्डातका चैव भ्रुकुटीकुटिलानना । स्तनद्वयोपरिक्रान्त[2]फणीन्द्रफणभीषणा[3] ॥ ३३४ ॥
घण्टानूपुरसंयुक्ता विकीर्णोर्ध्वशिरोरुहा[4] । [5]पुंमुण्डं फणिराजं च ललाटोर्ध्वे तु[6] बिभ्रती[7] ॥
त्रिशूलं पदपार्श्वे तु [8]दक्षिणे च तथोत्तरे । कपाल[9]पाशसंयुक्तं दधती भीमविक्रमा ॥ ३३६ ॥
[10]अष्टहस्तापि वा सा स्याच्छूलखड्गौ च दुन्दुभिम् । क्षुरिकां [11]दधती सव्यैः करैरन्यैः कपालयुक् ॥
घण्टां च [12]सर्पपाशं च सर्वलोकभयंकरी ।

[वीरभद्रो गणेशश्च[13]]

वीरभद्रो [14]गणेशश्च [15]कीर्णकुञ्चितमूर्धजः[16] ॥ ३३८ ॥
चतुर्भुजस्त्रिनेत्रश्च[17] कृष्णापरशुसंयुतः । सुखासीनस्तु कर्तव्यो वीरासनयुतस्तु वा ॥ ३३९ ॥

[मातॄणां साधारणं रूपम्[18]]

मातरस्तु सुखासीनाः सर्वास्ताः परिकीर्तिताः । [19]तासां तु कुञ्चितं पादं वामं सव्यं तु लम्बितम् ॥
सगणानां [20]तु मातॄणां रूपमेवमुदाहृतम् ।

---

[1] A : बन्धशश्चातका चैव ; E : बद्धचूडान्तका चैव ; F : बन्धकश्चातका चैव
[2] A : परिक्रान्त॰ pour उपरिक्रान्त॰ ; C, E : उपरिक्रान्तां
[3] A : भूषणा pour भीषणा ; D : भीषणाः
[4] C : अर्धशिरोरुहा pour ऊर्ध्वशिरोरुहा
[5] A : पुंमण्डं
[6] A, F : अनु pour तु
[7] A : बिभ्रति ; E : बिभ्रतीम्
[8] E : दक्षिणेन pour दक्षिणे च
[9] C, E : पाल pour पाश
[10] A : अष्टहस्ताधिवासा pour अष्टहस्तापि वा सा
[11] A : दधतीरन्यैः pour दधती सव्यैः ; F : दधती रव्यै
[12] C, D : चर्म pour सर्प ; F : शङ्ख pour सर्प
[13] Cf. *Aṃśumatkāśyapa*, 47, 7b-10a :
दक्षिणे वीरभद्रं तु पश्चिमे तु विनायकम् । चतुर्भुजं त्रिणेत्रं च जटामकुटसंयुतम् ॥
सर्वाभरणसंयुक्तं श्वेतवर्णं वृषध्वजम् । शूलं चाभयहस्तं च दक्षिणे तु करद्वये ॥
गदां वरदहस्तं च वामपार्श्वे करद्वये । श्वेतपद्मासनासीनं वटवृक्षसमाश्रितम् ॥
[14] C : गणेशा च
[15] D : कर्णं pour कीर्ण
[16] F : कुञ्चितमूर्ध्वजः pour कुञ्चितमूर्धजः
[17] A : त्रिणेत्र pour त्रिनेत्र
[18] Cf. *Aṃśumatkāśyapa*, 47, 25 :
वामपादशयाः सर्वा दक्षिणाङ्घ्रिप्रलम्बिताः । एवं वै सप्तमातॄणां कारयेद् द्विजसत्तम ॥
[19] A : तासामकुञ्चितं पादं ; E : तासां च कुञ्चितं पादं
[20] E : च pour तु

[रुद्राः[1]]

[2]त्रिनेत्राश्चतुर्भुजाः सर्वे [3]रुद्राः परशुना मृगम् ॥ ३४१ ॥
सारवन्तश्च कर्तव्या जटामकुटसंयुताः ।

[आदित्याः[4]]

आदित्याश्च प्रकर्तव्याः [5]सर्वे [6]मार्ताण्डरूपिणः ॥ ३४२ ॥

[वसवः[7]]

[8]द्विभुजा वसवः सर्वे खड्गचर्मधरास्तथा[9] । करण्डमकुटोपेता नेत्रद्वयसमन्विताः ॥ ३४३ ॥

---

[1] Cf. *Aṃśumatkāśyapa*, 50, 59a-63a :

चतुर्भुजास्त्रिणेत्राश्च जटामकुटमण्डिताः । शुक्लवस्त्रधराः सर्वे शुक्लवर्णाः प्रकीर्तिताः ॥
समपादाः स्थानकाश्च सर्वे पद्मोपरि स्थिताः । सर्वाभरणसंयुक्ताः सर्वपुष्पैरलंकृताः ॥
अभयं परशुं सव्ये वरदं कृष्णवामके । महादेवः शिवो रुद्रः शंकरो नीललोहितः ॥
ईशानो विजयो भीमो देवदेवो भवोद्भवः । कपालीशस्त्विमे विप्र रुद्रा एकादश स्मृताः ॥

[2] A, E : त्रिणेत्राः pour त्रिनेत्राः ; C : त्रिणेत्रं

[3] E omet le passage qui va de रुद्राः परशुना मृगम् à शूलपाशधराः सर्वे (345b) et lit त्रिणेत्राश्चतुर्भुजाः सर्वे वरदाभयपाणयः

[4] Cf. *Aṃśumatkāśyapa*, 50, 77-80 :

द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः । रक्तमण्डलसंसक्ताः करण्डमकुटान्विताः ॥
रक्तपद्मधराः सर्वे सर्वाभरणभूषिताः । छत्रवीरसमायुक्ता भास्करा द्वादशैव तु ॥
वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः । लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ॥
आदित्यश्च महासूर्यस्त्वंशुमाली दिवाकरः । एते वै द्वादशादित्या उत्तरादिक्रमात्स्थिताः ॥

cf. *Kāraṇāgama*, I, 13, 71b-74 :

वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः । लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ॥
आदित्यश्च तथा सूर्य अंशुमांश्च दिवाकरः । एते वै द्वादशादित्या एषामाकृतिरुच्यते ॥
द्विभुजाश्च द्विनेत्राश्च पद्मस्थाः पद्महस्तकाः । रक्ताम्बरसुवर्णाश्च प्रभामण्डलमण्डिताः ॥
उपवीतसमायुक्ताः सर्वाभरणभूषिताः ।

[5] D : सव्ये pour सर्वे

[6] C : मार्तण्डरूपिणः

[7] Cf. *Kāraṇāgama*, I, 14, 26-28 :

" वसूनामाकृतिं शृणु । धरो धूम्रश्च सोमश्च आपश्चैवानिलोऽनलः ॥
प्रत्यूषश्च प्रभासश्च वसवश्चाष्ट एव च । द्विभुजाश्च द्विनेत्राश्च असिखेटकसंयुताः ॥
रक्तवर्णा इमे सर्वे पीतवस्त्रसमन्विताः । सर्वाभरणसंयुक्ताः स्निग्धकुन्तलमूर्धजाः ॥

[8] A : नाभुजावयवाः सर्वे ; F : न भुजा सववस्सर्वे

[9] A : सदा pour तथा

[विद्येशाः[1] ]

[2]त्रिनेत्राश्चतुर्भुजाश्चैव वरदाभयपाणयः । [3]शूलाक्षमालाहस्ताश्च विद्येशाश्च प्रकीर्तिताः ॥

[भवाद्यष्टमूर्तीश्वराः[4] ]

भवादिदेवताश्चाष्टौ [5]त्रिनेत्राश्च चतुर्भुजाः । शूलपाशधराः[6] सर्वे वरदाभयपाणयः ॥ ३४५ ॥

[नन्दि-महाकालौ[7]]

द्वारे [8]नन्दिमहाकालौ [9]द्विभुजौ वा[10] चतुष्करौ । कर्तव्यौ [11]दण्डहस्तौ च प्रत्यालीढेन [12]संस्थितौ॥
दंष्ट्राकरालवदनौ [13]भ्रुकुटीकुटिलाननौ । [14]तर्जयन्तौ द्विषः क्रुद्धौ त्रिनेत्रौ लोकभीतिदौ[15] ॥

---

[1] Cf. *Kāraṇāgama*, I, 14, 3b-7a :
अनन्तेशस्तथा सूक्ष्मः शिवोत्तमश्चैकनेत्रकः । एकरुद्रस्त्रिमूर्तिश्च श्रीखण्डश्च शिखण्डिकः ॥
अष्टविद्येश्वरा ह्येते त्रिणेत्राश्च चतुर्भुजाः । अभयवरदोपेताष्टङ्कशूलधरास्तथा ॥
रक्तं कुन्दं तथा नीलं पीतं कृष्णं च कुङ्कुमम् । अरुणं भिन्नाञ्जनप्रख्यं क्रमाद्विद्येशवर्णकम् ॥
जटामकुटसंयुक्ता उपवीतसमन्विताः । विद्येशाकृतिरेवं स्याद् "

[2] A : त्रिणेत्राः pour त्रिनेत्राः

[3] C omet les *śloka* 344b et 345

[4] Cf. *Kāraṇāgama*, I, 14, 22b-26a :
भवः शर्वस्तथेशानः पशुपत्युग्रकौ तथा । रुद्रो भीमो महादेवः कीर्तितास्त्वष्टमूर्तयः ॥
चतुर्भुजास्त्रिणेत्राश्च जटामकुटधारिणः । अभयवरदोपेताष्टङ्ककृष्णधराः स्मृताः ॥
सर्वाभरणसंयुक्ता रक्तक्षौमधरा इमे । शुक्लं श्यामं च रक्तं च कृष्णं गोक्षीरसंनिभम् ॥
काश्मीरं विद्रुमं नीलं भवादीनां तु वर्णकम् । अष्टमूर्त्याकृतिर्ह्येवम् "

[5] A : त्रिणेत्राश्च

[6] D, F : कराः pour धराः

[7] Cf. *Kāraṇāgama*, I, 30, 167b-168 ; 171-173a :
नन्दिनं रक्तवर्णकम् । त्र्यक्षं चतुर्भुजोपेतमभयं वरदान्वितम् ॥
उग्रतोमरशूलं चाप्यक्षमालासमन्वितम् । . . . .
द्वारस्य दक्षिणे गङ्गां नन्दिनं पूजयेद्बुधः । भुवङ्गं वामपार्श्वे तु महाकालं घनद्युतिम् ॥
चतुर्भुजं त्रिणेत्रं च कपालं शूलमेव च । दक्षिणेऽभयटङ्कं च वामे पाशसमावहम् ॥
जटामकुटसंयुक्तं नागयज्ञोपवीतकम् ।
*ibid.*, śl. 322b-323 :
नन्दिनं पावके पूज्य द्विनेत्रं द्विभुजं तथा । श्यामवर्णसमायुक्तमुग्रतोमरशूलकम् ॥
जटामकुटसंयुक्तं पूजयेत्तु विशेषतः ।

[8] C : नदी pour नन्दि

[9] C, E : द्विभुजैर्वा चतुष्करैः

[10] A : च pour वा

[11] F : दण्डहस्तश्च

[12] A : संस्थिते ; C : संस्थितैः

[13] A : सुभ्रू च pour भ्रुकुटी

[14] A : तर्जन्तौ द्विषमकुटौ ; F : तर्जन्तौ द्विषमः कूडौ

[15] E : भीकरौ pour भीतिदौ

[शैलादि:[1] ]

[2]शैलादिस्तु प्रकर्तव्यस्त्रिनेत्रश्च[3] चतुर्भुजः । जटामकुटसंयुक्तः शूलाभयकरान्वितः ॥३४८॥
[4]वामे दण्डाक्षमालाभ्यामलंकृतकरस्तथा[5] । दंष्ट्राकरालवदनो हरिवक्त्रोऽथवा भवेत् ॥ ३४९ ॥

[श्री-रूपम्[6]]

श्रीरूपं तु प्रकर्तव्यं पङ्कजासनसंस्थितम् । करण्डमकुटोपेतं पद्मोद्भासिकरद्वयम् ॥ ३५० ॥
पीतवर्णं[7] विशालाक्षं पीनोन्नतपयोधरम् ।

[सरस्वती-रूपम्[8]]

सारस्वतमतो रूपं [9]चतुर्हस्तं त्रिलोचनम् ॥ ३५१ ॥
[10]व्याख्यानमक्षमालां च पुस्तकं [11]च कमण्डलुम् । दक्षिणेतरयोश्चापि दधच्छ्वेताब्जमध्यगम् ॥
[12]सुस्थितं द्विभुजं वापि द्विनेत्रं तत्प्रकल्पयेत् ।

---

[1] Cf. *Devatāmūrtidhyānaślokāḥ*, Ms. T. No. 105, p. 66 :
त्रिनेत्रं चतुर्भुजं चैवाभयवरदान्वितम् । उग्रतोमरशूलं चाक्षमालासमन्वितम् ॥
रक्तवस्त्रसमायुक्तं नन्दिनं संप्रपूजयेत् ।

[2] E : शैलादिस्त्वथ कर्तव्यः

[3] A : त्रिणेत्रश्च pour त्रिनेत्रश्च

[4] A : वाम pour वामे

[5] A : अलंकृतकरस्थिता ; D : अलंकरकृतस्तथा

[6] Cf. *Aṃśumatkāśyapa*, 50, 115-118 :
लक्ष्मीः पद्मासनासीना द्विभुजा काञ्चनप्रभा । हेमरत्नोज्ज्वलन्नक्रकुण्डलाभ्यां सुमण्डिता ॥
सुयौवना सुरम्याङ्गा कुञ्चितभ्रूसविभ्रमा । रक्ताक्षी पीनगन्धा च कञ्चुकाच्छादनस्तनी ॥
शिरसो मण्डलं शङ्खचक्रसीमान्तपङ्कजम् । अम्बुजं दक्षिणे हस्ते वामे श्रीफलमुच्यते ॥
मध्ये विपुलसुश्रोणी शोभनाम्बरवेष्टिता । मेखलाकटिसूत्रा च सर्वाभरणभूषिता ॥
cf. *Kāraṇāgama*, I, 12, 118-123a :
पद्मजाकृतिरुच्यते ॥
पद्मपत्रासनासीना पद्माभा पद्महस्तिनी । हैमरत्नोज्ज्वलन्नक्रकुण्डलं कर्णमण्डलम् ॥
कमण्डलामलमुखी कर्णपूर्णायतेक्षणी । सुयौवना सुरम्याङ्गा कुञ्चितभ्रूः सविभ्रमा ॥
रक्तोष्ठी पीतगन्धा च कञ्चुकाच्छादितस्तनी । शिरसो मण्डनं शङ्खचक्रसीमान्तपङ्कजम् ॥
नागहस्तसमौ बाहू केयूरकटकोज्ज्वला । पङ्कजं श्रीफलं चैव वामके दक्षिणेऽपि च ॥
शोभनाम्बरसंपन्ना श्रोणी च विपुला मता । मेखलाकटिसूत्राङ्गलक्ष्मीर्लक्ष्मीविवर्धनी ॥

[7] D : वक्त्रं pour वर्णं

[8] Cf. *Kāraṇāgama*, I, 12, 78-81a :
वागीश्याकृतिरुच्यते । श्वेतपद्मासनासीनां शुक्लवर्णां चतुर्भुजाम् ॥
जटामकुटसंयुक्तां मुक्ताकुण्डलमण्डिताम् । यज्ञोपवीतिनीं हारमुक्ताभरणभूषिताम् ॥
दुकूलवसनां देवीं नेत्रत्रयसमन्विताम् । संदंशं दक्षिणे हस्ते वामहस्ते तु पुस्तकम् ॥
दक्षिणे चाक्षमाला च करकं वामके करे ।

[9] F : चारुहस्तं

[10] F : व्याख्यातमक्षमालां च

[11] D : चक्रमण्डलम्

[12] A, C : सुसितं pour सुस्थितं

[कुम्भयोनिः[1]]

[2]यज्ञोपवीतसंयुक्तं [3]कुम्भयोनिं च कारयेत् ॥ ३५३ ॥
जटामकुटसंयुक्तं [4]लम्बश्मश्रुद्विबाहुकम् । [5]संदंशकुण्डिकाहस्तं [6]बृहत्कुक्षिं च वामनम् ॥ ३५४ ॥

[नारदः[7]]

वीणाहस्तं च कुर्वीत नारदं मुनिसत्तमम् ।

[गणाः]

अष्टादशगणांश्चैव[8] द्विभुजांश्च द्विनेत्रकान् ॥ ३५५ ॥
सर्वेषां मकुटं कुर्याद् द्वादशाङ्गुलमायतम् ।

[भृङ्गी[9]]

भृङ्गीशं तु त्रिहस्तं च[10] त्रिपादं च त्रिलोचनम् ॥ ३५६ ॥
त्वगस्थिशेषदेहं[11] च नृत्यन्तं संप्रकल्पयेत् ।

---

[1] Cf. *Kāraṇāgama*, I, 13, 61b-64a :
अगस्त्यश्च पुलस्त्यश्च विश्वामित्रः पराशरः । जमदग्निश्च वाल्मीकी सनत्कुमारश्च सप्त ते ॥
शुक्लवस्त्रधराः सर्वे शुक्लयज्ञोपवीतकाः । शुक्लवर्णोत्तरीयाश्च जटावल्कलसंयुताः ॥
कमण्डल्वक्षहस्ताश्च दीर्घश्मश्रुसमन्विताः । ऋषीणामाकृतिः प्रोक्ता"

[2] A : वज्र pour यज्ञ

[3] A : कर्म pour कुम्भ

[4] A : लम्बमश्रु pour लम्बश्मश्रु

[5] A : सदंश pour संदंश

[6] A, F : ब्रह्म pour बृहत्

[7] Cf. *Śrītattvanidhi*, (Brahmanidhi), p. 119 (éd. Bombay)
नारदो देवगन्धर्वः साक्षसूत्रकमण्डलुः । सख्येव वीणया वामभुजमूलोपगूढया ॥

[8] A : गुणांश्चैव pour गणांश्चैव

[9] Cf. *Dhyānaśloka*, Ms. T. No. 102, p. 36 :
चतुर्बाहुस्त्रिणेत्रश्च भृङ्गीशः पिङ्गलप्रभः । दक्षिणेऽभयटङ्कौ च वामे वरदशूलभृक् ॥
cf. *Kāmikāgama*, I, 4, 475a :
निर्मांसविग्रहो भृङ्गी श्वेतो वरुणदिग्गतः ॥
cf. *Kāraṇāgama*, I, 30, 325b-326 :
वायुदेशे समभ्यर्च्य भृङ्गिणं च द्विनेत्रकम् । द्विपादं रक्तवस्त्रं च द्विभुजं टङ्कविस्मयम् ॥
सर्वाभरणसंयुक्तं जटामकुटमण्डितम् ।

[10] F : भृङ्गीशपत्रिहस्तं च

[11] D : हस्तं pour देहं

[गणेश्वराः[1]]

[2]अन्यान्गणेश्वरांश्चापि वामनाञ्जटिलान्बहून् ॥ ३५७ ॥
[3]भीषणान्सुप्रसन्नांश्च ह्रस्वग्रीवान्महोदरान् । महाकायान्महानासान्महाकर्णांस्तथापरान् ॥
[4]सिंहास्यान्द्विपवक्त्रांश्च [5]नानावर्णाकृतींस्तथा । कारयेत्प्रतिमारूपं[6] [7]सर्वं स्यादुपवीतधृत्[8] ॥
[9]शिवाख्ये परशुं कुर्यादङ्गव्यक्तिं तु[10] सर्वतः । पुरोभागगतामेव परभागे तु वर्जिताम् ॥ ३६० ॥

---

[1] Cf. *Vāmanapurāṇa*, 67, 1-19a :

हरोऽपि शम्बरे याते समाहूयाशु नन्दिनम् । प्राहामन्त्रय शैलादे ये स्थितास्तव शासने ॥
ततो महेशवचनान्नन्दी सर्वगणाधिपः । उपस्पृश्य जलं श्रीमान्सस्मार गणनायकान् ॥
नन्दिना संस्मृताः सर्वे गणनाथाः सहस्रशः । समुत्पत्य त्वरायुक्ताः प्रणतास्त्रिदशेश्वरम् ॥
आगतांश्च गणान्नन्दी कृताञ्जलिपुटोऽव्ययः । सर्वान्निवेदयामास शंकराय महात्मने ॥

नन्द्युवाच—

यानेनान्पश्यसि शम्भो त्रिनेत्राञ्जटिलाञ्शुचीन् । एते रुद्रा इति ख्याताः कोट्य एकादशैव च ॥
वानरास्यान्पश्यसि याञ्शार्दूलसमविक्रमान् । एते वै द्वारपालास्ते मन्नामानो यशोधनाः ॥
षण्मुखान्पश्यसि यांश्च शक्तिपाणीञ्शिखिध्वजान् । षट् च षष्टिस्तथा कोट्यः स्कन्दनाम्नः कुमारकान् ॥
एतावत्यस्तथा कोट्यः शाखा नाम षडाननाः । विशाखास्तावदेवोक्ता नैगमेयाश्च शंकर ॥
सप्तकोटिशताः शम्भो अमी वै प्रमथोत्तमाः । एकैकं प्रति देवेश तावत्यो ह्यपि मातरः ॥
भस्मारुणितदेहाश्च त्रिनेत्राः शूलपाणयः । एते शैवा इति प्रोक्तास्तव भक्ता गणेश्वराः ॥
तथा पाशुपताश्चान्ये भस्मप्रहरणा विभो । एते गणास्त्वसंख्याताः साहाय्यार्थं समागताः ॥
पिनाकधारिणो रौद्रा गणाः कालमुखाः परे । तव भक्ताः समायाता जटामण्डलिनोऽद्भुताः ॥
खट्वाङ्गयोधिनो वीरा रक्तचर्मसमावृताः । इमे प्राप्ता गणा योद्धुं महाव्रतिन उत्तमाः ॥
दिग्वाससो यौनिनश्च घण्टाप्रहरणास्तथा । निरामया नाम गणाः समायाता जगद्गुरो ॥
सार्धद्विनेत्राः पद्माक्षाः श्रीवत्साङ्कितवक्षसः । समायाताः खगारूढा वृषभध्वजिनोऽव्ययाः ॥
महापाशुपता नाम चक्रशूलधरास्तथा । भैरवो विष्णुना सार्धमभेदेनार्चितो हि यैः ॥
एते मृगेन्द्रवदनाः शूलबाणधनुर्धराः । गणास्त्वद्रोमसंभूता वीरभद्रपुरोगमाः ॥
एते चान्ये च बहवः शतशोऽथ सहस्रशः । साहाय्यार्थे तवायाता यथाप्रीत्यादिशस्व तान् ॥
ततोऽभ्येत्य गणाः सर्वे प्रणेमुर्वृषकेतनम् ।

[2] F : अन्यो गणेश्वराश्चापि

[3] A omet le demi-*śloka* 358a

[4] C : सिंहास्यद्विप॰ pour सिंहास्यान् द्विप॰ ; E : सिंहास्यान् द्वीपि॰ ; F : सिंहास्याद्यपि

[5] F : नानावर्णाकृतिं तथा

[6] A : रूपाः pour रूपं

[7] A : सर्वः स्याद् pour सर्वं स्याद् ; E : सर्वांश्चैव

[8] D, E : धृक् pour धृत्

[9] A : शिवापे परशु वा कुर्याद् ; C : शिवा परशु वा कुर्याद् ; E : शिवापे परशुं कुर्याद्

[10] A : व्यक्तस्तु pour व्यक्तिं तु ; C, D, E : व्यक्तं तु

[रुद्रकिंकराः[1]]

[2]ये सारूप्यं नराः प्राप्तास्ते प्रोक्ता रुद्रकिंकराः । [3]तेषां तु रूपं कर्तव्यं [4]मदीयं [5]चिह्नमाश्रितम् ॥

[भक्तानां रूपम्[6]]

ये भक्तास्तु नरा लोके विशिष्टगुणसंयुताः । तेषां रूपं प्रकर्तव्यं नृत्यद्वायच्च वा पुनः ॥३६२॥
[7]प्रणमद्वा यथाकामं लोकेऽस्मिन्सुरपुङ्गव ।

[वृषलक्षणम्[8]]

वृषस्य लक्षणं चापि समासाच्छृणु सांप्रतम् ॥ ३६३ ॥

---

[1] Cf. *Kālikāpurāṇa*, *adhyāya* 29 :
रुद्रकिंकरनामानो जटाचन्द्रार्धमण्डिताः । देवेन्द्रस्य नियोगेन वर्तन्ते त्रिदिवे सदा ॥
तेषां संख्या चैककोटिस्ते सर्वे बलवत्तराः । कुर्वन्ति हि सदा सेवां हरस्य सततं गणाः ॥
विस्मयन्ति च पापिष्ठान्धर्मिष्ठान्पालयन्ति च । अनुगृह्णन्ति सततं धृतपाशुपतव्रतान् ॥
विघ्नांश्च सततं हन्ति योगिनां प्रयतात्मनाम् । षट्त्रिंशत्कोटयश्चैव हरस्य सकला गणाः ॥
वराहगणनाशार्थं हिताय जगतां तथा । शंकरस्याथ सेवायै समुत्पन्ना इमे गणाः ॥

[2] A : येनारूप्यं pour ये सारूप्यं ; D : येन रूप्यं
[3] D : तेषां रूपं प्रकर्तव्यं
[4] D : मदीय pour मदीयं
[5] A : नाह pour चिह्न

[6] Cf. *Kāmikāgama*, II, 66, 1-3a :
वक्ष्यामि शिवभक्तानां प्रतिष्ठां भोगमोक्षदाम् । ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा ह्यन्तरालजाः ॥
स्त्रियो वा गुरवश्चैषामभिषिक्तो नृपोऽथवा । शिवभक्तिसमोपेता जीवन्तो वा मृतास्तु वा ॥
तेषां प्रतिकृतिं कृत्वा प्रतिष्ठाप्य समर्चयेत् ।
cf. *ibid.*, 25b-28a :
शिखी वा बद्धकेशी वा मुण्डितो जटिलोऽथ वा । अभिषिक्तो नृपश्चेत्तु किरीटमकुटान्वितः ॥
यथेष्टायुधयुक्तो वा नमस्कारयुतोऽथवा । सर्वलक्षणसंपन्नः सर्वाभरणभूषितः ॥
गायका नृत्तयुक्ता वा पूजका वा यथेष्टकाः । स्त्रियस्तदनुरूपेण भूषणैरुपभूषिताः ॥

[7] A : प्रणमेद्वा ; C : प्रणवाद्वा ; D : प्रणमंश्च ; E : प्रणवं च

[8] Cf. *Kāraṇāgama*, I, 60, 71b-83 :
उत्तमं लोहजं प्रोक्तं शैलजं मध्यमं भवेत् । मृण्मयं चाधमं प्रोक्तं त्रिविधं परिकीर्तितम् ॥
प्राकारे तु द्वितीये तु अल्पोक्षं परिकल्पयेत् । अन्ययोः स्थानयोश्चैव महोक्षं कारयेत्सुधीः ॥
पूजाभागसमायाममल्पोक्षायाममुत्तमम् । तदर्धं मध्यमं ज्ञेयं तदर्धं कन्यसं भवेत् ॥
तत्समं तु त्रयं मानं कल्पयेद्देशिकोत्तमः । शुद्धद्वारं तु नवधा कृत्वाब्ध्यंशेन दैर्घ्यकम् ॥
एतन्मध्यवृषस्योक्तं द्विगुणं बाह्यके वृषे । लोहेनोक्षं प्रकर्तव्यं स्थितं वा शयनं तु वा ॥
शैलेन मृण्मयेनैव शयनं चैव कारयेत् । वक्त्रं तु युगभागं तु गुणभागं तु नासिका ॥
भागं स्याच्छृङ्गमूलं तु द्विभागेनान्तरं द्वयोः । नेत्रं पक्षाङ्गुलं ज्ञेयं विस्तारं त्वम्बराङ्गुलम् ॥
श्रोत्रनेत्रान्तरं भागं शृङ्गमानं युगाङ्गुलम् । मुखं वस्वङ्गुलं ज्ञेयं विस्तारं तु चतुर्दश ॥

द्वारमानेन वा कुर्याद्द्वारोत्सेधनवांशके[1] । एकांशेनाधमाद्यन्तं [2]सर्वैश्चाप्युत्तमोत्तमम् ॥३६४॥
मध्ये सप्त प्रमाणानि कल्पयेत्कल्पवित्तमः । [3]द्वारात्पादाधिकं[4] [5]मानमर्धाधिकमथापि वा ॥
पादोनद्विगुणं वाथ द्विगुणं वा प्रकल्पयेत् । [6]लाङ्गूलमूलात्तन्मानं मस्तकान्तं प्रकल्पयेत् ॥
तिरश्चां [7]तिर्यङ्मानं [8]स्यादश्वादीनां च कल्पयेत् । [9]खुरादि [10]मूर्धपर्यन्तमुच्छ्रायं च तथा भवेत् ॥
द्व्यङ्गुलं लोचनं प्रोक्तं विस्तारं [11]तु तदर्धकम् । [12]तदर्धादुदयं कार्यं मुखं स्यात्षोडशाङ्गुलम् ॥
[13]पादहीना तु नासा [14]स्याच्छृङ्गयोश्चतुरङ्गुलम् । [15][मूलं]स्याच्च[त]योर्मध्यमष्टाङ्गुलमुदीरितम् ॥
[16]शृङ्गोच्छ्रयो द्विनेत्रं [17]स्यादक्षिकर्णान्तरं तथा । [18]त्र्यङ्गुलं तु खुरं तस्य[19] जङ्घास्य तु शरास्तथा ॥
[20]कपालचक्रमानं [21]स्यादधोरू [22]षट्कला भवेत् । [23]तस्याथ पुरजङ्घोरुमभि मानं तथैव च ॥
वालं [24]स्यादङ्घ्रिमूलान्तं तद्विस्तारं युगाङ्गुलम् । एकाङ्गुलप्रविस्तारं तस्याग्रे तु प्रकल्पयेत् ॥

---

कर्णमूलं कला प्रोक्ता धर्माङ्गुलं तु दैर्ध्यकम् । ग्रीवा वस्वङ्गुला प्रोक्ता कलाङ्गुलं ककुद्भवेत् ॥
धर्माङ्गुलं तु जङ्घा च तदूर्ध्वे च चतुष्कला । गुल्फं रसाङ्गुलं ज्ञेयं त्र्यङ्गुलं खुरमुच्यते ॥
जङ्घा तु पश्चिमा पञ्चकलोर्ध्वं तु कलाधिकम् । वालं स्यात्पादमूलान्तं चतुरङ्गुलविस्तृतम् ॥
मूलं पक्षाङ्गुलं तारमग्रं व्योमाङ्गुलं भवेत् । वृषणौ द्व्यङ्गुलायामौ विस्तारं तु द्विभागकम् ॥
शेषं युक्त्या प्रकर्तव्यं प्रोच्यते वृषलक्षणम् ।

1 A : द्वारोत्सेधे नवांशके
2 A : सर्वैश्चाप्यान्तमोत्तमम्
3 C, F : द्वारान् pour द्वारात्
4 F : अधिक pour अधिकं
5 F : मानं मध्याधिकमयापि वा
6 A : लाङ्गूलमूलं तन्मानं ; C : लाङ्गूलमूलतन्मूलं ; D, E : लाङ्गूलमूलतन्मानं
7 C, E : तिथ्यमानं
8 A : स्याद्विश्वादीनान्वकल्पितम्; F : स्यादश्वादीनां विकल्पितम्
9 A : करादि pour खुरादि ; C, D, F : करादि
10 A, E : मूर्ध्नि pour मूर्ध
11 A : तुंगदर्धकम् ; D, E : तु तदर्धतः
12 A : तदर्धं तौ हृदया कार्यौं ; C : तदर्धा हृदया कार्यौं ; D : F : तदर्धौं हृदयाकार्यौं
13 A : पादहीनानुनासौ
14 C, E : स्याज्जङ्घयोः pour स्याच्छृङ्गयोः
15 Tous les manuscrits omettent le mot मूल et le syllabe त dans तयोः
16 C : श्रृणु श्रेयाद्द्विनेत्रं ; E : श्रृणु च्छ्रेयां द्विनेत्रं ; F : श्रृणु गोच्छ्रायाद्विनेत्रं
17 A : स्याद्दक्षिणं कर्णान्तरं तथा
18 A : त्रयाङ्गुलान्तरं तस्य ; F: त्र्यङ्गुलं तु करं तस्य
19 A : जङ्घास्य तु चरा तु या ; D : जङ्घास्य चमरा तु या
20 A : कपालं चक्रमानं
21 A : स्यादथोरू
22 A : षट्कलो
23 A : तस्याथ प्यूरुजङ्घोरूमहिमानं तथैव च ; C : तस्याथ पूरजंघोरमभिमानं
24 C : स्याज्जङ्घमूलान्तं

तन्मूलं नेत्रविस्तारं[1] शेषं युक्त्या प्रकल्पयेत् । [2]लोहे स्थितं शयानं वा [3]वृषेन्द्रं परिकल्पयेत् ॥
शैलं च [4]मार्तिकं रूपं [5]शयानं परिकल्पयेत् । गले घण्टासमायुक्तं [6]सकुशं वा [7]प्रकल्पयेत् ॥
वृषस्य लक्षणं प्रोक्तम्[8] ;

[आयादिविधिः[9] ]

आयादिविधिरुच्यते । [10]आयो व्ययस्तथा योनिर्नक्षत्रं वारमंशकः ॥३७५

---

[1] E : विस्तार pour विस्तारं

[2] Cf. *Suprabhedāgama*, I, 40, 3-5 :
त्रिविधं स्थापने प्रोक्तं शैलं लोहं सुधामयम् । लोहजं स्थानके कार्यं शयने वा विशेषत: ॥
शिला सुधा प्रकर्तव्यं शयने तु विचक्षण: । त्रिविधं तत्र कर्तव्यं सर्वसंपत्करं नृणाम् ॥
लोहजेन तु विघ्नेश कृतं चेदुत्तमं स्मृतम् । शैलं च मध्यमं प्रोक्तं सुधया चाधमं भवेत् ॥

[3] A : वृषेशमापरिकल्पयेत्    [4] C : माक्षिकं

[5] A : शयनं    [6] C, E : संकुद्धं    [7] A : प्रकीर्तित:

[8] Cf. *Kāraṇāgama*, II, 87, 1-5a :
अथ वक्ष्ये विशेषेण अनड्वाहप्रतिष्ठितम् । शृङ्गौ श्रोत्रौ द्विनासीं च ऊर्ध्वोष्ठे जिह्विकां तथा ॥
चतुष्पादं वेदरूपमेकपादं तु कुञ्चितम् । एकपादान्तर्गतं चैव पुच्छाग्रं बीजसंयुतम् ॥
मणिना वलयं कण्ठे देवस्याभिमुखं तत: । साक्षाद्धर्मस्वरूपं च शुद्धस्फटिकसंनिभम् ॥
शृङ्गं कृष्णनिभं चैव मणि: स्वर्णप्रभा तथा । खुरं रक्तप्रभं विद्यात्पुच्छाग्रं कृष्णसंनिभम् ॥
जिह्वां नीलनिभां विद्यादोष्ठं रक्तनिभं तथा ।

[9] Cf. *Kāraṇāgama*, I, 11, 23-38 :
आयव्ययर्क्षवाराष्टयोन्यंशकानि लक्षयेत् । शतात् त्रिंशदंशादि बेरमानं भजेत्क्रमात् ॥
व्योमांशं तु समायोज्य यावत्तत् सुशुभोदयम् । वसुभिर्गुणिते त्वेकं हृते त्वायं विनिर्दिशेत् ॥
रसैस्तु गुणिते दिग्भिर्भाजिते व्ययमादिशेत् । वसुभिर्गुणिते सप्तविंशद्भक्ते तु संभवेत् ॥
शिष्टमाश्वयुगाद्यन्तु नक्षत्रं गणयेत्क्रमात् । रन्ध्रै: सुगुणिते सप्तहृते सूर्यादिवासर: ॥
गुणैस्संगुण्य वसुभिर्हृते योनिरुदाहृतम् । शिष्टं तु गणयेन्मन्त्री अष्टयोनिध्वजादिकम् ॥
वेदैर्गुणहृते रन्ध्रैस्तस्कराद्यंशकं क्रमात् । आयाधिक्ये धनादि स्याद्व्ययाधिक्ये धनक्षयम् ॥
आयाधिक्यं व्ययं हीनं तन्मानं शुभदं स्मृतम् । गणयेत्तु त्रिधा कर्तृनृपवास्तुदिनान्तकम् ॥
शुभानि जन्मसंपत्तिक्षेमं साधकमैत्रके । तथा परममैत्रं च वर्जितान्यशुभानि वै ॥
वारेषु सितसोमज्ञगुरवश्शुभदा: स्मृता: । अशुभा रविसौरारा: शुभयोगे शुभप्रदा: ॥
योनिषु ध्वजसिंह्माख्यौ वृषो हस्ती शुभा: स्मृता: । धूमश्वखरकाकांश्च वर्जयेत्तु प्रयत्नत: ॥
ध्वजश्चेदर्थसिद्धिस्स्यात् धूमश्चेदग्निना भयम् । सिंहोऽपि विजय: प्रोक्त: कुक्कुर: कलहो भवेत् ॥
वृषभ: पुत्रवृद्धिस्स्यात् स्थानभ्रंशस्तु गर्दभ: । गजस्तु राष्ट्रवृद्धिस्स्यात् काको दुर्भिक्षसंभव: ॥
अंशकेषु च भुक्तिश्च शक्तिश्चैव विशेषत: । तथा वित्तावनीनाथौ निर्भीतं तु समृद्धिकम् ॥
शुभान्येतानि चान्यानि वर्जयेत्तु प्रयत्नत: । तस्करो नाशनं भुक्तिर्भोगदं शक्तिरिष्टदम् ॥
जयं वित्तावनीनाथौ रोगवृद्धिर्नपुंसकम् । निर्भीतं श्रीप्रदं ज्ञेयं दरिद्रो धननाशनम् ॥
समृद्धिस्सर्वसिद्धिस्स्यात् पापं राष्ट्रविनाशनम् । एवं परीक्ष्य बहुधा कारयेल्लक्षणान्वितम् ॥

[10] A : आयव्यय तथा योनि ; E : आयव्ययं तथा योनिं ; D : आयं व्ययं तथा योनि

षडेते [1]कल्पनीयास्तु सर्ववस्तुषु [2]देशिकैः । [3]आयो द्रव्यायतिः प्रोक्तो [4]व्ययो द्रव्यव्ययो भवेत् ॥
[5]योनिर्ध्वजश्च धूमश्च सिंहकुकुरकास्तथा । वृषभः खरनागौ च काकश्चाथ[6] प्रकीर्तितः[7] ॥ ३७७
अश्विन्यादि च नक्षत्रं [8]वारः सूर्यादिरुच्यते । अंशकोऽयं[9] भवेच्चोरो [10]भुक्तिशक्तिधनं[11] नृपः[12] ॥
[13]क्लीबोऽभयं [14]विपच्चान्ते [15]ऋद्धिरित्यभिधीयते । त्रिविधं यत्तु लिङ्गं तु [16]मेयं मानाङ्गुलेन तु ॥
शिबिकारथखट्वादि सर्वं[17] [18]तालेन मीयते । [19]प्रासादमण्टपादीनि हस्तमानेन चैव हि ॥ ३८०
[20]गृहीतवस्तुनो माने त्वङ्गुल्यादिविभाजिते । [21]वर्धिते वसुभिस्तस्मिन् [22]गृहीतमिष्टमायतम् ॥
नवभिर्वर्धिते[23] तस्मिन् [24]हृते दिग्भिर्व्ययं भवेत् । गुणेन [25]वर्धिते [26]भूयो वसुभिर्विहृते[27] सति ॥

---

[1] A : कल्पनीयत्वात् pour कल्पनीयास्तु [2] A : देशिक:

[3] C, D, E : आयं द्रव्यायति: प्रोक्तं [4] C : व्ययं द्रव्यस्य संभवेत् ; D, E : व्ययं द्रव्यव्ययं भवेत्

[5] Cf. *Kāmikāgama*, I, 22, 2b-3a :
ध्वजो धूम: शिव: सिंहो वृष: खरगजोत्तमौ । ध्वाङ्क्षेण योनयश्चाष्टौ "

[6] D : अध: pour अथ [7] C, E : प्रकीर्तिता [8] A : वारं pour वार:

[9] D, E : अथ pour अयं [10] C : मुक्ति pour भुक्ति [11] C : धरं pour धनं

[12] E : नृप pour नृप: [13] A : क्षीबो pour क्लीबो [14] A : विभुश्चान्ते

[15] A : रिडि pour ऋद्धि [16] A : मेधमानाङ्गुलेन तु [17] E : खट्वादीन् सर्वान् pour खट्वादि सर्वं

[18] F : नालेन pour तालेन [19] C : प्रसादमब्जपादीनि

[20] Cf. *Kāmikāgama*, I, 22, 1-2a :
अत: परं प्रवक्ष्यामि आयादीनां तु लक्षणम् । विस्तारेणाभ्यसेद्दैर्घ्यं त्रिगुणं चाष्टभिर्हृतम् ॥
शेषं ध्वजादिकं शास्त्रे योन्यष्टकमुदाहृतम् ।

cf. *ibid*, I, 22, 4 :
तमेवाष्टगुणं कृत्वा सप्तविंशतिभिर्भजेत् । शिष्टमश्वयुजाद्यं तु नक्षत्रमिह कीर्तितम् ॥

cf. *ibid*, I, 22, 10b-16a :
सकलं चाष्टभिर्हन्यादाय: सोऽप्यन्यथोच्यते । सकलं चाष्टभिर्भक्त्वा भजेद्द्वादशभिर्गुरु: ॥
शिष्टस्त्वाय: समाख्यातो व्ययस्तत्र प्रकीर्त्यते । संस्थाप्य लब्धनक्षत्रमष्टभिर्विभजेद्बुध: ॥
व्यय: शिष्ट इह प्रोक्तस्त्वन्यथापि च कथ्यते । सकलं त्रिगुणीकृत्य मानसूत्रैर्भजेद् व्ययम् ॥
आयाधिक्यं तु शुभदं समं हीनं च वर्जयेत् । विस्तारायामराशिं तु वसुभिर्गुणयेद्बुध: ॥
त्रिंशद्भिर्विभजेच्छिष्टं तिथिनागावटैस्तु वा । त्रिगुणं सकलं कृत्वा मुनिना वार उच्यते ॥
पर्यन्तावटकेनाथ वारं संकल्पयेद्बुध: । राशयश्चांशका ये तु नक्षत्रवशगा मता: ॥

cf. *ibid*, I, 22, 17b-20a :
विस्तारेणाभ्यसेद्दैर्घ्यं तादृशीमथवा पुन: । विस्तारायामसंयुक्तं राशिं वाथ निरीक्षयेत् ॥
चतुरश्रायताश्राणां सकलेनैव योजयेत् । अन्यासामाकृतीनां तु नाहायामविशालकै: ॥
कुम्भकस्य विशालार्धं नाहार्धेन न्यसेद्बुध: । सकलं कुम्भकं प्रोक्तं तेन चायादिकं न्यसेत् ॥

[21] A : वर्धते [22] A : गृहीतैकैकमायत: [23] A : वर्धते pour वर्धिते

[24] A : हृते दिक्निर्व्ययं भवेत् [25] A : वर्धते pour वर्धिते [26] A : भूमे pour भूयो ; F : देवि

[27] A : वा हृते pour विहृते ; D : विहिते

[1]योनिः शिष्ट इति प्रोक्तो वसुभिर्वर्धिते[2] पुनः । भगणेन हृते [3]तस्मिञ्शिष्टमश्वादिभं भवेत् ॥
नवभिर्गुणिते चाथ [4]मुनिभिर्विहृते सति । शिष्टं वारमिति प्रोक्तं [5]भूयो वेदैश्च [6]वर्धिते ॥३८४
नवभिर्विहृते[7] शिष्टमंशकं तस्करादिकम् । [8]आयाधिकं भवेद्ग्राह्यमग्राह्यं[9] स्याद्व्ययाधिकम्[10]॥
[11]योनिषु ध्वजसिंहेभवृषाः प्रोक्ताः[12] शुभावहाः । नक्षत्रेष्वथ चैतांस्तु[13] विपत्प्रत्यरनैधनान्[14]॥
तथा [15]चन्द्राष्टमर्क्षं च वैनाशिकमतः परम् । नृपग्रामादि[16]नक्षत्राद्वर्जयेत्तान्प्रयत्नतः ॥३८७॥
वारेषु गुरुशुक्रज्ञचन्द्राः शुभकराः [17]स्मृताः । अंशकेष्वथ भुक्तिश्च नृपशक्तिधनं तथा ॥३८८॥
अभयं च तथा [18]ऋद्धिः षडेते शोभनाः स्मृताः । अर्धोत्तरं शुभं ग्राह्यमग्राह्यमशुभोत्तरम् ॥
एवं परीक्ष्य लिङ्गादीन्कल्पयेत्कल्पवित्तमः ।

[19]इत्यजिताख्ये [20]महातन्त्रे [क्रियापादे] [21]प्रतिमालक्षणविधिः
षट्त्रिंशः पटलः ॥

---

[1] A : योनिष्ट इति ; D : योनिशिष्ट इति [2] A : विद्यते pour वर्धिते ; D : वर्धते

[3] A : तस्मिन् गृहीतेकैकमायतम् ; E : तस्मिन् शिष्टमश्वायुतो भवेत् ; F : तस्मिन् अष्टं श्वादिभं भवेत्

[4] A : मुद्रैर्विहिते सति [5] C, E : भूयो वै वेदैश्च [6] A : वर्धते

[7] A, F : विहिते pour विहृते [8] A : आयादिकं ; C : आवाहकं

[9] A, F : ग्राह्यं pour अग्राह्यं [10] F : स्याद्वियवाधिकम्

[11] Cf. *Kāmikāgama*, I, 22, 3 :

ध्वजः सिंहो वृषो गजः । शस्ताः स्युर्निन्दिताश्चान्ये धूमाद्या योनयस्त्विह ॥

cf. *ibid*, I, 22, 5-9a :

कर्तुर्जन्मर्क्षमारभ्य त्रिदिनं पञ्च सप्तकम् । त्रयोदशदिनं त्याज्यं तथा पञ्चदशोडुकम् ॥
दिनं सप्तदशं चाष्टादश द्वाविंशकं दिनम् । सप्तविंशतिनक्षत्रं त्याज्यमन्यच्छुभं स्मृतम् ॥
राज्ञां ग्रामस्य कर्तुश्च जन्मर्क्षेणाविरोधि यत् । तदेव चात्र संग्राह्यं विपरीतं परित्यजेत् ॥
जन्मर्क्षेण युतं वापि कारयेद्वास्तु शास्त्रवित् । नामजन्मर्क्षयोरानुकूल्यं चोत्तममुच्यते ॥
एकोनं मध्यमं प्रोक्तं विपरीतं परित्यजेत् ।

cf. *ibid*, I, 22, 16-17a :

राशयश्चांशका ये तु नक्षत्रवशगा मताः । अष्टद्वादशकौ वर्ज्यौ शेषाः श्रेष्ठाश्च राशयः ॥
शुभग्रहांशकाः शस्तास्त्वितरास्त्विह निन्दिताः ।

[12] E : वृषाश्चैव pour वृषाः प्रोक्ताः [13] C : चैत्यस्तु pour चैतांस्तु

[14] E : नैधनाः pour नैधनान् [15] A : चन्द्राष्टमार्थं च ; F : चन्द्राष्टमार्थश्च

[16] A, E : नक्षत्रान् pour नक्षत्राद् [17] A : शुभाः

[18] A : ऋषिः pour ऋद्धिः [19] E : इत्यजिते pour इत्यजिताख्ये

[20] E omet महातन्त्रे

[21] A : सकललक्षणस्थापनविधिः एकोनपञ्चाशः पटलः ; C : सकललक्षणस्थापनविधिपटलः समाप्तः ; E : प्रतिमालक्षणविधिपटलः ; F : सकललक्षणस्थापनचतुर्विंशतपटलः

## [ सप्तत्रिंशः पटलः ]

[ मण्टपलक्षणविधिः[1]]

[ मण्टपमानम्[2]]

लक्षणं [3]मण्टपानां तु वक्ष्ये तच्छृणु सांप्रतम् । हस्तत्रितयमारभ्य [4]करैरोजोयुतैः क्रमात् ॥१॥
भवन्ति मण्टपास्त्वेकत्रिंशद्धस्तमितास्तु ते[5] । एकोनत्रिंशत्संख्यातास्तेषां[6] लक्षणमुच्यते ॥ २ ॥
[7]चतुरश्राः समाः सर्वे मण्टपाः परिकीर्तिताः । स्तम्भोत्सेधमथो वक्ष्ये [8]हस्तेन प्रमितं क्रमात् ॥

[ स्तम्भमानम्[9] ]

सार्धद्विहस्तमारभ्य [10]त्रित्र्यङ्गुलविवर्धनात् । नवहस्तान्तकं यावत्तावत्स्तम्भाः प्रमाणतः ॥ ४ ॥
[11]त्रयःपश्चाशदित्युक्ता मण्टपानां विशेषतः । [12]स्तम्भोत्सेधे[13] तु वस्वंशे नन्दांशे वा दशांशके ॥

---

[1] Pour मण्डपलक्षणविधि voir *Aṃśumatkāśyapa*, 43, *Kāmika* I, 70, *Kāraṇa* II, 6, *Kiraṇa* III, 25, *Dīpta* 10, *Vīra* 46, *Santānasaṃhitā* 12, *Suprabheda* I, 31 et *Sūkṣma* 35.

[2] Cf. *Aṃśumatkāśyapa*, 43, 29-34 :
" श्रृणु मण्टपमानकम् । त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ॥
यावदेकोनविंशं तु नवधा मण्टपस्ततम् । आभाससदनानां तु आभासमण्टपास्त्विमे ॥
एकविंशतिहस्तादि द्विद्विहस्तविवर्धनात् । सप्तत्रिंशतिहस्तान्तं विकल्पो नवधा भवेत् ॥
आभासानां तु तद्योग्यं स्वस्वयोग्यमथापि वा । नवत्रिंशत्करारभ्य द्विद्विहस्तविवर्धनात् ॥
पश्चाधिकं तु पश्चाशत्करान्तं छन्दमुच्यते । सप्तपश्चाशदारभ्य द्विद्विहस्तविवर्धनात् ॥
साग्निसप्ततिहस्तान्तं विस्तृतं जातिरुच्यते । तद्विस्तारसमं दीर्घं समाश्रं मण्टपं भवेत् ॥

[3] E : मण्टपादीनां तच्छृणुष्व जनार्दन

[4] A : करैर्योजयुतैः क्रमात् ; C : करैरोजोर्मयुग्मकैः ; D : करैरोणैश्च युग्मकैः ; E : करैरोजोसयुग्मकैः

[5] C : मिति स्तुते pour मितास्तु ते

[6] A, C, E, F : संख्यान्तास्तेषां

[7] C : चतुरश्रसमाः ; F : चतुरश्रः समाः

[8] A : स्तम्भेन pour हस्तेन

[9] Cf. *Dīptāgama*, 10, 8 :
द्विहस्तार्धं समारभ्य चतुर्हस्तान्तमेव च । षडङ्गुलविवृद्धया तु स्तम्भाः सप्तविधोच्छ्रयाः ॥
cf. *Aṃśumatkāśyapa*, 43, 37-38 :
सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् । अष्टहस्तावधि यावत्त्रयोविंशाङ्घ्रिभेदकम् ॥
डपानादुत्तरान्तं स्वे गुणाङ्गुलविवर्धनात् । स्तम्भानामुदयं ह्येवम् "

[10] F : त्रित्र्यङ्गुलि pour त्रित्र्यङ्गुल

[11] A : त्रयः पश्चाशदित्यन्तां ; C : आयपश्चाश इत्युक्ता

[12] Cf. *Dīptāgama*, 1C, 9-12a :
सर्वपादस्य चोत्सेधं षट्सप्ताष्टांशभाजितम् । तत्पादविस्तरं ज्ञेयं तदा भागवशेन तु ॥
दारुस्तम्भविशालार्धं त्रिभागं द्वयमेव वा । चतुर्भागेन एवं स्याद्भित्तिपादस्य विस्तरम् ॥
अथवा पादविष्कम्भं वक्ष्यते विधिनाधुना । स्तम्भविष्कम्भमानं यत्षट्सप्ताष्टाङ्गुलं भवेत् ॥
एकैकं त्रित्रिभेदं स्यादङ्गुलाङ्गुलवर्धनात् ॥

[13] C : स्तम्भोत्सेधं

व्योमांशं[1] तस्य विष्कम्भं मण्टपेषु प्रकल्पयेत् । [2]भित्तिपादगतं तारं तदर्धं वा त्रिपादतः ॥६॥
स्तम्भानामाकृतिः प्रोक्ता [3]पूर्वं प्रासादलक्षणे[4] । [5]स्तम्भायाममिति प्रोक्तं पङ्क्तिमानमथ[6] शृणु॥

[ पङ्क्तिमानम्[7] ]

सपादहस्तमारभ्य षट्षडङ्गुलवर्धनात् । शरहस्तान्तमुक्तानि पङ्क्तिमानानि षोडश ॥ ८ ॥
अथवा स्तम्भमानेन कर्तव्यं [8]पङ्क्तिविस्तृतम्[9] । पङ्क्तिपादसमायोगं[10] [11]यथायुक्त्या प्रकल्पयेत्॥

[ मण्टपभेदाः[12] ]

एकपङ्क्त्या चतुष्पादः [13]श्रीकराख्यश्च [14]मण्टपः । [15]पङ्क्तित्रयाद्विकाराङ्घ्रिः [16]श्रीभद्र इति कीर्तितः ॥ १० ॥

---

[1] A : व्योमांशे [2] A : भक्ति pour भित्ति

[3] A : एवमुक्ताः प्रशादशः ; F : पूर्वमुक्ताः प्रसादशः

[4] Voir *Ajitāgama* vol. I paṭala 14, *śloka* 1-13, pp. 93-94 (पादादिलक्षण)

[5] A et F omettent les *śloka* 7b et 8 [6] C : इति pour अथ ; D : अतः

[7] Cf. *Dīptāgama*, 10, 12b-13a :
द्विहस्तं च द्विहस्तार्धं त्रिहस्तं चार्धहस्तकम् । चतुर्हस्तं च सार्धं च भक्त्यायामं च षड्विधम् ॥
cf. *Aṃśumatkāśyapa*, 43, 35-36 :
अध्यर्धहस्तमारभ्य षट्षडङ्गुलवर्धनात् । पञ्चहस्तावधिर्याविद्भक्तिव्यासं त्रिपञ्चधा ॥
अर्धहस्तं समारभ्य यावत्पञ्चकरावधि । गुणाङ्गुलविवृद्ध्या तु भक्तिव्यासं प्रकल्पयेत् ॥

[8] F : पत्ति pour पङ्क्ति [9] C : विस्मृतम् pour विस्तृतम्

[10] A, F : समोपेतं pour समायोगं [11] A, F : योगं pour यथा

[12] Cf. *Dīptāgama*, 10, 18-25a :
श्रीभद्रं तु चतुष्पादं श्रीविशालं नवाङ्घ्रिकम् । षोडशस्तम्भसंयुक्तं श्रीभोगमिति कीर्तितम् ॥
पञ्चविंशतिभिः पादैरन्वितं श्रीकरं परम् । षट्त्रिंशत्पादसंयुक्तं श्रीकूटमिति चोच्यते ॥
पादैनैकोनपञ्चाशयुक्तं श्रीकण्ठमिष्यते । पादैरष्टाष्टभिर्युक्तं पुष्कलं तत्प्रकीर्तितम् ॥
एकाशीतिपदैर्युक्तं विजयं तत्प्रकीर्तितम् । शतपादसमायुक्तं जयभद्रमिति स्मृतम् ॥
एकविंशच्छताङ्घ्रीभिरन्वितं भद्रशोभितम् । चत्वारिंशच्चतुर्युक्तशतपादैरलंकृतम् ॥
एतत्कैलासमित्युक्तं केसरं च ततः शृणु । एकोनसप्ततियुक्तशतपादं विशेषतः ॥
शतषण्णवति प्रोक्तं पर्वतं पादसंख्यया । द्विशतं पञ्चविंशद्भिर्नियुक्तं प[स?]र्वतोमुखम् ॥
चतुरश्रमिदं प्रोक्तम् "
cf. *Suprabhedāgama*, I, 31, 101b-104a :
नन्दवृत्तं चतुष्पादं षोडशं श्रीप्रतिष्ठितम् । विंशतिस्तम्भसंयुक्तं वीरासनमिति स्मृतम् ॥
द्वात्रिंशद्गात्रसंयुक्तं जयभद्रेति कथ्यते । षट्त्रिंशद्गात्रसंयुक्तं नन्द्यावर्तमिति स्मृतम् ॥
चतुष्षष्टिसमायुक्तं स्तम्भानां माणिभद्रकम् । स्तम्भानां तु शतैर्युक्तं विशालमिति संज्ञितम् ॥

[13] A, C, D, E : श्रीकराख्यस्य [14] C, D, E : मण्टपम्

[15] C : पङ्क्तित्रयद्विकराङ्घ्रिः ; E : पङ्क्तिद्वयाद्विकाराङ्घ्रिः ; F : पत्तित्रयाद्विकाराङ्घ्रिः

[16] E : श्रीभद्रमिति

आयामं तु [1]भवेद्धीमन् स्व[स्व]स्तम्भचतुष्टयात् । श्रीविशाल इति प्रोक्तः [2]पञ्चपङ्क्तियुतस्ततः ॥
[3]षट्त्रिंशत्पादसंयुक्तः ; पूर्ववल्लब्ध[4]पादकः । तद्बहिश्चार्कपादैस्तु [5]संयुक्तस्तद्बहिः पुनः ॥१२॥
विंशत्पादपरीतश्च श्रीभोग इति कीर्तितः । सप्तपङ्क्तिसमायुक्तश्चतुष्षष्टयङ्घ्रिसंयुतः ॥ १३ ॥
पूर्ववद्धीनपादश्च[6] [7]श्रीकूट इति कीर्तितः । नवपङ्क्तिसमायुक्तः[8] शतपादसमन्वितः[9] ॥ १४ ॥
पूर्ववत्कूलप्त[10]पादश्च[11] [12]तद्बाह्येऽर्कपदान्वितः । [13]चत्वारिंशत्पदैर्बाह्ये [14]साष्टभिश्च [15]विसर्जितः ॥
तद्बाह्येऽथ च षट्त्रिंशद्गात्रैर्युक्तः[16] समन्ततः । अथवा मध्यमे त्यक्त्वा [17]वेदपादांस्तु तद्बहिः॥
रविपादयुतो [18]बाह्ये हीनविंशत्पदोऽपि[19] यः । [20]सर्वतोमुख इत्युक्तो मण्टपोऽयं जनार्दन ॥

[मण्टपानां मुखायामः[21]]

[21]मुखायाममथो वक्ष्ये मण्टपानां [23]क्रमोदितम् । विस्तारद्विगुणायामो[24] यावद्भवति मण्टपः ॥
[25]पङ्क्त्यावृतिस्तु [26]तावत्स्याद्वृद्धिरेकैकधा[27] क्रमात् । मुखायामे पदानां तु लोपं युक्त्या [28]प्रकल्पयेत् ॥ १९ ॥

---

[1] A : भवेद्धीमान् स्तम्भस्थाभचतुष्टयात् ; C, E : भवेद्धीमानस्वस्तम्भचतुष्टयात् ; D : भवेद्धीमानस्वस्तम्भ-चतुष्टयम् ; F : भवेद्धीमन् स्वं स्तम्भचतुष्टयात्

[2] F : पञ्चपत्तियुतस्तत्र

[3] C : षट्त्रिपाद pour षट्त्रिंशत्पाद

[4] C : लुप्त pour लब्ध

[5] A : संयुक्तस्तम्भकं पुन: ; F : संयुतस्तत्पुन:पुन:

[6] A : पादं च pour पादश्च

[7] A : श्रीकूटमिति कीर्तितम् ; C : श्रीकृष्णमिति कीर्तितम् : D : श्रीकरोमिति कीर्तितम्

[8] A, E : समायुक्तं pour समायुक्त:

[9] A, C, D : समन्वितम् pour समन्वित:

[10] A : लुप्त pour कूल्प्त

[11] D पादं च pour पादश्च

[12] A : तद्बाह्येक pour तद्बाह्येऽर्क

[13] A : चत्वारिंशत्पदे बाह्ये

[14] C, D : साष्टाभिश्च

[15] C, D, E : विवर्जित:

[16] F : युक्त pour युक्त:

[17] A : वेदपादस्तु ; E : वेदपङ्क्तिस्तु

[18] A : बाह्ये हीनं pour बाह्ये हीन ; C : बाह्यहीनं

[19] F : त्रिंशपदोऽपि pour विंशत्पदोऽपि

[20] A : सर्वतोमुखमित्युक्तं ; D, F : सर्वतोमुखमित्युक्तो

[21] Cf. *Dīptāgama*, 10, 25-31a :

"एषामाया[मं च] तत: शृणु । मध्यस्तम्भं त्यजेत्तत्र सदालंकारकामिना ॥
श्रीविशालस्य तन्मध्ये पादैकं तु परित्यजेत् । एकपादविहीनं स्याच्छ्रीकरस्य च मध्यमे ॥
वेदाङ्घ्री मध्यमे त्याज्यं श्रीकूटे तु विशेषत: । चतुरङ्घ्रिविहीनं स्याज्जयभद्रस्य मध्यमे ॥
भद्रशोभितमध्ये तु पादमेकं विहीनकम् । तन्मध्ये तु चतुष्पादं त्यजेत्कैलासमण्डपे ॥
केसरस्य तु तन्मध्ये ह्रासयेदेकमङ्घ्रिकम् । पर्वतस्य तु तन्मध्ये चतुष्पादं परित्यजेत् ॥
प[स?]र्वतोमुखमध्ये तु पादमेकं परित्यजेत् । तत्तत्पूर्वं द्विभित्तिश्च त्रिभित्तिश्चैकभित्तिकम् ॥
आयतार्धविवृद्धि: स्यादङ्घ्रिकैरधिकं भवेत् ।

[22] A : मुखाधर्म pour मुखायाम ; C : मुखाधम

[23] A : क्रमादिदम्

[24] F : आयामं pour आयामो

[25] A : भक्त्या प्रतिस्तु ; F : पत्या वृतस्तु

[26] A, C, D : पाद pour तावत्

[27] C, F : एकैकया pour एकैकधा

[28] D : प्रतापवेत्

स्तम्भविष्कम्भमानस्य त्रिगुणं भित्तिविस्तरम्[1]। सार्धं च [2]द्विगुणं वापि सार्ध[3]त्रिगुणमेव वा॥
भित्तिस्तम्भस्य निष्क्रान्तिश्चतुरश्रस्य तत्ततः। चतुर्भागैकभागं [4]स्याद्वृत्ततारेऽर्धतो[5] भवेत्॥

[मण्टपेषु वारः, निर्गमः, सोपानं[6] च]

मण्टपस्याभितो[7] वारं पङ्क्तया [8]वा संप्रकल्पयेत्। वारपादोच्छ्रयं [9]मूलपादार्धं संप्रकल्पयेत्॥
[10]त्रिपादतो [11]वा कुर्वीत स्तम्भाकारं तु मूलवत्। मण्टपस्य चतुर्दिक्षु निर्गमं संप्रकल्पयेत्॥
अथवा त्रिषु देशेषु द्वयोर्वैकत्र वा भवेत्। एकपङ्क्तिविनिष्क्रान्तमायामेन त्रिपङ्क्तिकम्॥
अथवा [12]तद्भवेत्तत्र [13]विस्तारायामतः समम्। हस्तिहस्तद्वयोपेतं सोपानं तत्र कल्पयेत्॥ २५
पार्श्वयोरग्रतो वापि तेजःसंख्यासमायुतम्। सोपानं निर्गमाद्बाह्ये[14] कर्तव्यं वा सलक्षणम्॥

[अधिष्ठानम्[15]]

मण्टपानां तु सर्वेषामधिष्ठानमथोच्यते। पादोत्सेधार्धमानं तत्पञ्चांशं [16]द्व्यंशकं तु वा॥२७॥
[17]तत्त्र्यंशैकभागं वाप्यधिष्ठानोच्छ्रयं भवेत्। सोपपीठं तु वा कुर्यात्केवलं [18]वोपपीठकम्॥

[बोधिका[19]]

सपादबोधिकां[20] कुर्यात्तस्या[21] लक्षणमुच्यते। पादमूलसमं तस्या[22] विस्तारं परिकीर्तितम्॥

---

[1] A : विस्तरः pour विस्तरम्
[2] C, D, E : त्रिगुणं
[3] E, F : द्विगुण pour त्रिगुण
[4] C, E : स्याद्वृद्ध pour स्याद्वृत्त
[5] D : तारोर्ध्वतो pour तारेऽर्धतो
[6] Cf. *Aṃśumatkāśyapa*, 43, 128-129a :
पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम्। पञ्चषट्सप्तनन्दाष्टदण्डं वा तस्य विस्तृतम्॥
सपादं सार्धदण्डं वा हस्तिहस्तोदयं तथा।
[7] A : आहितो pour अभितो
[8] A : वासः प्रकल्पयेत्
[9] A : मूलं पदार्धं
[10] A omet le *śloka* **23**
[11] F : वापि pour वा
[12] E : तद्भवे तत्र
[13] A : विस्तारायामतत्समम्
[14] A omet बाह्ये
[15] Cf. *Aṃśumatkāśyapa*, 43, 42-43 :
अङ्घ्रितुङ्गाब्धिवेदैकभागं वापि मसूरकम्। सोपपीठमधिष्ठानं केवलं वा मसूरकम्॥
धरातलसमोच्चं वा द्विगुणं त्रिगुणं तु वा। उपपीठोदयं ख्यातमुपपीठोच्छ्रयं तु वा॥
[16] E : त्र्यंशकं pour द्व्यंशकं
[17] A : तत्त्रयांशैकभागं
[18] A : सोपपीठकम्
[19] Cf. *Aṃśumatkāśyapa*, **9, 1-4** :
अथ वक्ष्ये विशेषेण बोधिकालक्षणं परम्। मूलपादसमव्यासं श्रेष्ठं मध्येन मध्यमम्॥
अग्रपादविशालेन समं कन्यसबोधिका। विस्तारसदृशोत्सेधं पञ्चदण्डायतान्वितम्॥
उत्तमा बोधिका ख्याता तारद्वित्र्यंशमुन्नतम्। चतुर्दण्डायतोपेता मध्यमा सा प्रकीर्तिता॥
विस्तारस्यार्धतुङ्गं तु तत्त्रिदण्डायतान्विता। कन्यसा बोधिका ख्याता त्वङ्घ्रयो बोधिकान्विताः॥
[20] E : पोधिकां pour बोधिकां
[21] A : तस्य pour तस्याः
[22] A : तस्य pour तस्याः

पञ्चदण्डं चतुर्दण्डं त्रिदण्डं वापि [1]दैर्घ्यकम् । विस्तारार्धं [2]समांशं वा भवेत्तस्याः[3] समुच्छ्रयम् ॥

[प्रस्तरम्]

बोधिकालक्षणं प्रोक्तम्; अथ प्रस्तरमुच्यते । पादार्धं तत्त्रिभागं वा प्रस्तरस्योच्छ्रयं[4] भवेत् ॥ ३१
प्रस्तरस्यांशक्लृप्तिं च [5]पूर्ववत्परिकल्पयेत् । एवं [6]प्रस्तरमानं स्यादन्तर्मानं ततः शृणु ॥ ३२ ॥

[अन्तर्मानम्[7]]

उत्तरोत्सेधमुद्दिष्टं दण्डं वा [8]पादहीनकम् । दण्डार्धं वाथ कर्तव्यं [9]तत्तुर्यांशं तु वाजनम् ॥
[10]वाजनाद्द्विगुणं [11]वाथ त्रिगुणं वा चतुर्गुणम् । [12]तुलाविस्तारमुद्दिष्टं तुल्यं तद्घनमुच्यते ॥ ३४
[13]पादहीनं घनं [14]प्रोक्तमर्धहीनमथापि वा । तस्मादर्धत्रिपादं वा [15]जयन्त्यास्तारमुच्यते ॥ ३५ ॥
[16]तदर्धमनुमार्गं स्यात्तदूर्ध्वे चेष्टकादिभिः । छादयित्वा तदूर्ध्वे तु [17]छत्राकारं घनं ततः ॥ ३६

[अन्तरालम्[18]]

देवाग्रे मण्टपं सर्वं सान्तरालं प्रकल्पयेत् । एकद्वित्रिचतुः [19]पङ्क्तिमानेष्वपि च कारयेत् ॥ ३७ ॥

---

1 D : दैर्घिकम्
2 A : वामांशं
3 A : तस्य pour तस्याः
4 A : उच्छ्रितं pour उच्छ्रयं
5 F : सर्व pour पूर्व
6 A : प्रस्तार pour प्रस्तर
7 Cf. *Suprabhedāgama*, I, 31, 107b-113a :
स्तम्भाच्च बोधिकाधिक्यं बोधेरप्युत्तराधिका । उत्तराद्वाजनाधिक्यं तस्योर्ध्वे मुद्रिकां न्यसेत् ॥
मुद्रिकाच्च तुलाधिक्यं जयन्ती तु ततोपरि । छादयेदिष्टकाभिस्तु तस्योर्ध्वे कलकान्क्षिपेत् ॥
वालुकैस्तु समं चूर्णं कुल्माषं योजयेत्क्रमात् । मुसलेन तु संपीड्य शर्करादिसमन्वितम ॥
कषायपिच्छलैर्युक्तं त्रिफलोदकसंयुतम् । हरीतक्यास्तु भागकं द्विगुणं च विभीतकम् ॥
धात्रीत्रिगुणमित्युक्तं प्रक्षुण्णाज्जलसंयुतम् । षण्मासं वा त्रिमासं वा मासं वाप्युषितं तथा ॥
दधि माषोदकं चैव नालिकेरस्य तोयकम् । क्षीरं च दधिसंमिश्रं सम्यक्कर्म समाचरेत् ॥
8 A : दण्ड pour पाद
9 A : तत्तुर्यांशकवर्धनम्
10 C . वाजिनाद् pour वाजनाद्
11 C : च pour वा
12 A : तूल pour तुला
13 A : पादहीनासनं ; F : पादहीनं समं
14 A, F : प्रोक्तमथ pour प्रोक्तमर्ध
15 A जयन्या: pour जयन्त्या:
16 C : तदर्धमनुमार्गस्य तदूर्ध्वे
17 A छत्राकारां घनान्तरे
18 Cf. *Aṃśumatkāśyapa*, 43, 21b-29a :
मण्टपान्मण्टपान्तं तु सालाद्वा मण्टपान्तकम् । अन्तरालमिति ख्यातमादौ तल्लक्षणं शृणु ॥
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा । नवधर्मकरं वापि रुद्रहस्तमथापि वा ॥
अन्तरालविशालं तु रुद्रसंख्या: प्रकीर्तिता: । यत्र यन्मण्टपं कुर्यात्तस्मिन्भक्त्या विशेषत: ॥
एकद्वित्रिचतुष्पञ्चभक्त्या वाभ्यन्तरालकम् । सावकाशान्तरालं वा भित्तिबन्धमथापि वा ॥
भित्तिबन्धान्तरालं चेत्पार्श्वयोर्वेशसंयुतम् । एकद्वित्रियपादं वा वेशं भक्त्यैकमेव वा ॥
पार्श्वयोर्मध्यमे द्वारं जालकं वा प्रकल्पयेत् । उत्तरे जलधारां च स्नानार्थं परिकल्पयेत् ॥
अयुग्मका वा भित्तिर्वाभ्यन्तरालं द्विजोत्तम । अधिष्ठानादिसर्वाङ्गं मण्टपस्य समं भवेत् ॥
अथवा वेशहीनं तु मण्टपस्य समं भवेत् । अन्तरालं समाख्यातम् ”
19 A : पञ्च pour पङ्क्ति

मण्टपेन समं तारं पङ्क्तिहीनमथापि वा । [1]द्वित्रिदण्डाधिकं वापि चतुर्दण्डाधिकं तु वा ॥
अन्तरालस्य मानं स्यात्प्रवेशं वा [2]द्विदण्डकम् ।

[मुखमण्टपः[3]]

देवाग्रे मण्टपं सर्वं [4]मसूरेणाङ्घ्रिभिस्तथा[5]॥ ३९ ॥
प्रस्तरेण च तुल्यं तु प्रासादेन प्रकल्पयेत् । अन्यत्र मण्टपानां तु चतसृष्वपि चेष्यते ॥ ४० ॥
[6]मुखं दिक्षु यथायुक्त्या निर्गमेण समन्वितम् । [7]सर्वशोभासमायुक्तं सर्वलक्षणलक्षितम् ॥ ४१ ॥
कारयेन्मण्टपं सर्वं शिलादार्विष्टकामयम् ।

[8]इत्यजिताख्ये [9]महातन्त्रे [क्रियापादे] [10]मण्टपलक्षणविधिः
सप्तत्रिंशः पटलः ॥

---

[1] C, D : त्रिद्वि pour द्वित्रि    [2] E : त्रि pour द्वि

[3] Cf. *Aṃśumatkāśyapa*, **43**, 15b-18 :
प्रासादे त्वेकभूमौ तु प्रोच्यते मुखमण्टपम् । जातिच्छन्दविकल्पं च आभासानां तथैव च ॥
प्रासादाभिमुखे चैव दिशासु विदिशासु च । ग्रामादीनां तु मध्ये वा दिशासु विदिशासु च ॥
उद्याने वा नदीतीरे तटाकतीर एव वा । देवार्थं मण्टपं कुर्याद्यथेष्टं मुखसंयुतम् ॥
प्रासादस्याग्रके कुर्यान्मण्टपं चतुरश्रकम् ।

[4] C, D, E : मसुरेण pour मसूरेण ; F : असुरेण

[5] A : अङ्घ्रितस्सदा pour अङ्घ्रिभिस्तथा

[6] A : मुखादिषु pour मुखं दिक्षु    [7] A : सर्वशोभनसंयुक्तं

[8] E : इत्यजिते pour इत्यजिताख्ये    [9] E omet महातन्त्रे

[10] A : मण्टपलक्षणविधिः पञ्चाशः पटलः ; C : मण्टपलक्षणविधिपटलः समाप्तः ; D : मण्टपलक्षणविधिः षट्त्रिंशत्पटलः ; ग्रन्थं ४२ ; E : मण्टपलक्षणविधिपटलः ; F : मण्टपलक्षणः पटलः

## [अष्टत्रिंशः पटलः]

### [प्राकारलक्षणविधिः[1]]

#### [प्राकारपञ्चके दण्डमानम्[2]]

प्राकारलक्षणं वक्ष्ये [3]तच्छृणु त्वं समाहितः । प्रासादस्य तु [4]विस्तारं मानं दण्डं प्रकल्पयेत् ॥
त्रैविध्यं तस्य दण्डस्य वक्ष्यते क्रमशोऽधुना । उपानान्मानतः श्रेष्ठं कैरवान्मध्यमं स्मृतम् ॥
[5]पादान्तादधमं [6]चैव तेषु चेष्टं प्रगृह्य च । तन्मानेनैव [7]सालांस्तु [8]कल्पयेत्कल्पवित्तमः ॥३॥
अन्तर्मण्डलकं [9]पूर्वमन्तर्हारं द्वितीयकम् । मध्यहारं तृतीयं तु तुर्यं [10]मर्यादिभित्तिकम् ॥ ४ ॥
[11]महामर्यादिभित्तिं च पञ्चमं परिकल्पयेत् । अन्तर्मण्डलकं यत्तद्भवेद्दण्डार्धसंमितम् ॥ ५ ॥
अन्तर्हारं तु दण्डेन द्विदण्डेन तृतीयकम् । चतुर्दण्डप्रमाणेन कुर्यान्मर्यादि[12]भित्तिकम् ॥ ६ ॥
[13]महामर्यादि[14]भित्तिं च[15] सप्तदण्डप्रमाणतः । कल्पयेदथवा हस्तैर्देशिकः सालपञ्चकम् ॥७॥

#### [प्राकारपञ्चके हस्तमानम्[16]]

[17]हस्तसप्तमितं कुर्यादन्तर्मण्डलसंज्ञितम्[18] । [19]वसुहस्तमितं बाह्येऽप्यन्तर्हारं तु कल्पयेत् ॥८॥

---

[1] Pour प्राकारलक्षणविधि voir *Aṃśumatkāśyapa* 42, *Kāmika* I, 71, *Kāraṇa* I, 8, *Dīpta* 12, *Santānasaṃhitā* 11 et *Suprabheda* I, 31.

[2] Cf. *Kāraṇāgama*, I, 8, 1-5 :
अथातः संप्रवक्ष्यामि प्राकाराणां तु लक्षणम् । अन्तर्मण्टपमाद्यं स्यादन्तर्हारं द्वितीयकम् ॥
मध्यहारं तृतीयं तु पश्चान्मर्यादिभित्तिकम् । महामर्यादिभित्तिस्तु पञ्चमः परिकीर्तितः ॥
प्रासादस्य तु विस्तारं यत्तद्दण्डमिहोच्यते । अर्धदण्डप्रमाणेन अन्तर्मण्टपकं कुरु ॥
अन्तर्हारं तु दण्डेन मध्यहारं द्विदण्डतः । मर्यादिभित्तिकं कुर्याच्चतुर्दण्डेन बुद्धिमान् ॥
महामर्यादिभित्तिं च सप्तदण्डेन कल्पयेत् । दण्डमानमिति प्रोक्तम् "

[3] E : श्रृणु त्वं तत्समाहितः

[4] A : विस्तारं मानदण्डं ; D : विस्तारमानं दण्डं

[5] A : पादार्धाद् pour पादान्ताद्

[6] F : चैतत्

[7] C : बालांस्तु

[8] F : कल्पितं pour कल्पयेत्

[9] C : पूर्वमन्तं तारद्वितीयकम्

[10] E : मर्याद pour मर्यादि ; F : मध्यादि

[11] E : महामर्यादभित्ति च

[12] E : मर्याद pour मर्यादि

[13] A omet le demi-*śloka* 7a

[14] E : मर्याद pour मर्यादि

[15] C : भित्तिश्च pour भित्ति च

[16] Cf. *Kāraṇāgama*, I, 8, 5b-8a :
" हस्तमानं ततः श्रृणु । चतुर्हस्तप्रविस्तारमन्तर्मण्टपमादिशेत् ॥
अन्तर्हाराष्टहस्तेन भवेद्द्वादशहस्तकैः । मध्यहारं तु कर्तव्यं ततः षोडशभिः करैः ॥
मर्यादिभित्तिकं कुर्याद्विंशद्धस्तविशालकम् । महामर्यादिभित्तिः स्यात्प्राकारं पञ्चधा विदुः ॥

[17] C, F : हस्तसप्तमिदं

[18] A : संज्ञिके ; F : संज्ञकम्

[19] C, F : वसुहस्तमिदं

दश[1]त्रिमध्यहारं तु ततो [2]मर्यादिभित्तिकम् । विकारहस्तैः कुर्वीत विंशद्धस्तैरतः परम् ॥ ९ ॥
[3]महामर्यादिभित्तिं तु[4] प्रोक्तं प्राकारपञ्चकम् ।

[5]आद्यं[6] सालाङ्कणान्तं ततिगतमथवा [7]वह्निबाणाब्धिनन्दै
रुद्रैर्हस्तैः [8]क्रमोच्चैः परिमितमधमाद्याद्यमानं विधेयम् ।
प्रत्येकं हस्तवृद्ध्या नवकमिह [9]भवेदुत्तमाद्युक्तमानं
[10]चत्वारिंशत्प्रमाणं भवति तदितरेष्वेषु [11]पञ्चाधिकं च ॥ १० ॥

अन्तर्मण्डलगं[12] मानमुपानात्परिकल्पयेत् । तद्बहिश्चापि सर्वत्र मानसूत्राद्बहिर्बहिः ॥ ११ ॥
[13]कल्पयेदुक्तमानानि चतुः पञ्च यथाक्रमम् । [14]एवमाधिक्यसालं तु [15]न्यूनं वक्ष्ये यथाक्रमम् ॥

---

[1] A : त्रिर्मध्य pour त्रिमध्य
[2] E : मर्याद pour मर्यादि
[3] E : महामर्याद pour महामर्यादि
[4] A, E : भित्तिस्तु pour भित्तिं तु
[5] Cf. *Aṃśumatkāśyapa*, 42, 8-19 :
प्रथमं प्रकृतेस्तुल्यं तलं तस्माद्गुणाङ्गुलम् । नतं द्वितीयकं पश्चात्तद्वदेव नतं क्रमात् ॥
कल्प्यैवं हर्म्यमानेन हस्तमानमथोच्यते । त्रिपञ्चसप्तहस्तेन प्रथमं त्रिविधं भवेत् ॥
नवैकादशहस्तं च त्रयोदशद्वितीयकम् । त्रिपञ्चसप्तदशकहस्तमेकोनविंशतिः ॥
मध्यहारा त्रिधा प्रोक्ता मर्यादीनि ततः शृणु । एकविंशत्त्रयोविंशत्पञ्चविंशत्करं भवेत् ॥
सप्तविंशन्नवविंशदेकत्रिंशत्करेण तु । महामर्यादिविस्तारमेवं त्रिविधमुच्यते ॥
एवमाभासहर्म्याणां विकल्पानां च कल्पयेत् । सप्तहस्तं समारभ्य पञ्चत्रिंशावसानकम् ॥
प्रत्येकं प्रथमादीनां सालानां त्रित्रिमानकम् । त्रिपञ्चसंख्यया प्रोक्तं हर्म्याणां चैव संज्ञकम् ॥
नवहस्तं समारभ्य सप्तत्रिंशावसानकम् । प्राग्वदेव सालसंख्याः स्युर्हर्म्याणां जातिसंज्ञिताः ॥
प्रागुक्तहर्म्यमानैश्च सालां जात्यन्तसंमताम् । पञ्चप्राकारमेवं हि त्रिप्राकारमथोच्यते ॥
द्वितीयतृतीयसाला च चतुर्थी च प्रगृह्यताम् । शेषं चाभ्यन्तरे बाह्ये वर्जितं तत्त्रिसालकम् ॥
अन्यदभ्यन्तरे बाह्ये वर्जितं तत्त्रिसालकम् । द्वितीयं वा तृतीयं वा ग्राह्यं शेषास्तु वर्जिताः ॥
एकसालान्वितं हर्म्यमेवमेवं द्विजोत्तम । तस्यानुकूलसंयुक्तं द्विसालं संप्रकीर्तितम् ॥
[6] A : अन्यं pour आद्यं
[7] C : पञ्च pour वह्नि ; E : अप्यग्नि pour वह्नि
[8] C : क्रमशपरिमितमाद्यमानं ; D, E : क्रमशपरिमितिं माद्यमानं
[9] A : भवेदुत्तमादुक्तमानं
[10] C : चत्वारिंश pour चत्वारिंशत्
[11] A : पञ्चाविकन्यम्
[12] C, E : कं pour गं
[13] Cf. *Kāraṇāgama*, I, 8, 17b-21a :
पञ्चप्राकारयुक्तं वा त्रिप्राकारयुतं तु वा । एकप्राकारसंयुक्तं कल्पयेत्कल्पवित्तमः ॥
मर्यादिभित्तिकं त्यक्त्वा अन्तर्मण्टपकं तथा । शेषप्राकारकैर्युक्तं त्रिप्राकारमिति स्मृतम् ॥
अथ चैवं प्रकारेण त्रिप्राकारमिहोच्यते । अन्तर्मण्डलकं चैव मर्यादिं मध्यहारकम् ॥
त्यक्त्वैवान्यच्च शेषं तु त्रिप्राकारमिति स्मृतम् । एकप्राकारकं चेत्तु अन्तर्हारयुतं कुरु ॥
[14] A, F : एवमाधिक्यपानानि
[15] C et E omettent le passage qui va de न्यूनं वक्ष्ये यथाक्रमम् à तन्न्यूनमग्निसालं तु et lisent एवमाधिक्यसालं तु तस्मान्न्यूनं द्विसालकम् ; D : नूनं pour न्यूनं

तन्न्यूनमग्निसालं तु तस्मान्न्यूनं [1]द्विसालकम् । एक [2]सालान्वितं हर्म्यमाभासं तु विधीयते ॥

[प्राकाराणां विशालता[3]]

प्रासादस्य तु रक्षार्थं शोभार्थं च प्रकल्पयेत् । [4]अन्तर्मण्डलमानं वा त्रिपादं वा तदर्धकम् ॥

प्राकाराणां तु सर्वेषामुत्तरे वा [5]विशालता । अग्निनेत्राम्बरैस्तत्र हस्तैर्वा स्याद्विशालता ॥ १५ ॥

[मुखायामः[6]]

मुखायामं ततः प्रोक्तं पादाधिकसमन्वितम् । अर्धाधिकं [7]वा कुर्वीत त्रिपादेनाधिकं तु वा ॥

द्विगुणं त्रिगुणं वापि चतुर्गुणमथापि वा । मुखायाममिति प्रोक्तं [8] ।काराणां जनार्दन ॥१७॥

[प्राकारभित्तिः[9]]

मानसूत्राद्बहिर्भित्तिरन्तर्वापि प्रकल्पयेत् । [10]भित्तिमध्यगतं वाथ [11]मानसूत्रं प्रकल्पयेत् ॥१८॥

---

[1] A : त्रि pour द्वि

[2] A : ताल pour साल

[3] Cf. *Aṃśumatkāśyapa*, 42, 1b-4 :
रक्षार्थं शोभनार्थं च शाला यस्योदयस्य तु । प्रासादस्य विशालार्धे गुणभागविभाजिते ॥
चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम् । अन्तर्हारविशालं तु तद्बाह्ये द्विगुणं हि तत् ॥
मध्यहारविशालं तु बाह्ये तन्मण्डलत्रयम् । मर्यादिस्तु विशालं तु बाह्ये त्वादिचतुर्गुणम् ॥
महामर्यादिविस्तारमादेः पञ्चगुणं भवेत् ।

[4] E omet le demi-*śloka* 14b ; F : अन्तर्मालेन pour अन्तर्मण्डल

[5] C : विशालताम्

[6] Cf. *Kāraṇāgama*, I, 8, 9-10 :
प्रासादाग्रे विशेषेण वक्त्रायामं प्रकल्पयेत् । पादं वार्धत्रिपादं वा अधिकं द्विगुणं तु वा ॥
द्विगुणादधिकार्धं तु त्रिगुणं वा चतुर्गुणम् । मुखायाममिति ख्यातम् "
cf. *Aṃśumatkāśyapa*, 42, 21-22a :
बीजात्पादं तु वार्धं वा त्रिपादं तत्समं तु वा । द्विगुणं त्रिगुणं वाथ चतुःपञ्चगुणं तु वा ॥
कल्पयेत्तु मुखायामं बीजाम् [द् ?]र्ध्वं द्विजोत्तम ।

[7] F : तु pour वा

[8] A : प्राकारस्य

[9] Cf. *Kāraṇāgama*, I, 8, 13-15a :
मानसूत्रस्य बाह्ये तु भित्तिरभ्यन्तरेऽपि वा । मानसूत्रं तु यद्भित्ति[त्ते ?]र्मध्यमं वापि कारयेत् ॥
महामर्यादिभित्तेस्तु तारं षट्त्रिंशदङ्गुलम् । अग्न्यङ्गुलक्षयेणैव गायत्र्यङ्गुलान्तकम् ॥
प्राकारभित्तिविस्तारं चतुर्णां परिकीर्तितम् ।
cf. *Aṃśumatkāśyapa*, 42, 22b-24a :
अन्तर्मण्डलभित्तेस्तु विस्तारं व्योमहस्तकम् । तस्मात्त्रिमात्रवृद्ध्या वा षण्मात्रं वाथ वर्धयेत् ॥
सार्धद्विहस्तहस्तान्तं महामर्यावसानकम् । भित्तिव्यासं समाख्यातम् "

[10] E : भक्तिर् pour भित्ति

[11] A : मानसूत्रान्

भित्तिविस्तारमन्त्ये[1] तु गायत्र्यङ्गुलमुच्यते । [2]द्वित्र्यङ्गुलविवृद्ध्याथ [3]बाह्यसालान्यथाक्रमम् ॥

[प्राकारोत्सेधः[4]]

[5]कारयेच्चतुरश्चापि ; तेषामुत्सेधमुच्यते । प्रासादसमतुङ्गं स्यात्पादाधिकमथापि वा ॥ २० ॥
[6]अर्धाधिकं वा कुर्वीत क्षुद्रधामसु सालकम्[7] । अन्येष्वपि च पादान्तं [8]प्रस्तरान्तमथापि वा ॥
ग्रीवान्तं वापि कुर्वीत [9]शिखरोच्छ्रायकं तु वा । षट्सप्ताष्टकरोत्तुङ्गमथवा सालमुच्यते ॥ २२ ॥

[प्राकारविधिः[10]]

कूटपञ्जरशालाभिर्युक्तं तोरणसंयुतम् । सर्वाङ्गाङ्घ्रिसमायुक्तं सर्वशोभासमन्वितम् ॥ २३ ॥
ऊर्ध्वे [11]वृषेन्द्रसंयुक्तं नानाचित्रसमायुतम् । कारयेत्केवलं वाथ [12]मालिकाकारमेव वा ॥ २४ ॥

---

[1] A : अन्ये pour अन्त्ये ; E : माने [2] A : त्रि pour द्वि [3] A : बाह्यशालान् ; E : बाह्यशाल

[4] Cf. *Aṃśumatkāśyapa*, 42, 24-25 ; 29-33 :
" उत्सेधं शृणु सुव्रत । तद्व्यासत्रिचतुष्पञ्चगुणं वा सालतुङ्गकम् ॥
अथवोत्तरसीमान्तं निद्रान्तं वाजनान्तकम् । प्रस्तरान्तं गलान्तं वा सालातुङ्गमुदाहृतम् ॥...
अथवा हस्तमानेन सालोत्सेधं विधीयते । त्रिपञ्चसप्तहस्तादि नन्दरुद्रकरादि वा ॥
द्विद्विहस्तविवृद्ध्या वा प्रत्येकं तु त्रिभेदकम् । प्रथमादिपञ्चशालानामुच्चं ह्येकोनभेदकम् ॥
अथवान्यप्रकारेण सालोत्सेधं विधीयते । द्विद्विहस्तविवृद्ध्या तु प्रत्येकं तु त्रिभेदकम् ॥
प्रथमं कलशान्तं तु द्वितीयं फलकान्तकम् । बोधिकान्तं तृतीयं तु चतुर्थं चोत्तरान्तकम् ॥
पञ्चमं तु कपोतान्तं पञ्चसालोदयं क्रमात् । एकत्रिपञ्चसालेषु तासामुक्तोदयं विदुः ॥

[5] A : कारयेच्च चतुश्चापि [6] A : अधिकं वा कुर्वीत

[7] A : क्षुद्रसामस्तु सालयः ; D : क्षुद्रधामस्तु सालयम् ; F : क्षुद्रधामस्तुसालयम्

[8] A : प्रस्तारान्त pour प्रस्तरान्त

[9] A : दुःखरादुच्छ्रयं तु वा ; C, D : शिखरादुच्छ्रयं तु वा ; F : दुःखिरादुच्छ्रयं तु वा

[10] Cf. *Kāraṇāgama*, I, 8, 21b-23 :
भित्त्यूर्ध्वे सुदृढं कुर्याच्छित्राकारं शिरस्तथा । अथवा बद्धहर्म्ये तु कूटशालायुतं तु वा ॥
प्राकारे तु द्वितीये वा मौलिकाकृतिरेव वा । सभाकृतिर्वा कर्तव्या त्रितलं वा द्विभूमिकम् ॥
कारयेत्तु विशेषेण प्राकारं प्रति गोपुरम् ।

cf. *Dīptāgama*, 12, 27-31a :
ऋजुभित्ति शिराकाराच्छत्रं चाशीर्षमेव वा । अथवा खण्डहर्म्यं स्यात्कूटशालायुतं भवेत् ॥
प्रासादकूटशालान्तप्राकारे कूटकोष्ठकम् । अन्तर्हारायुतं वापि मध्यहारायुतं भवेत् ॥
आभूतमालिका या स्यात्सहाया तु त्रिरेव च । मण्डपाकृतिकं वापि त्रिविधा वाकृतिर्भवेत् ॥
एकभूमिर्द्विभूमिर्वा चतुर्भूः पञ्चभूमिकम् । भित्तेरुपरि भित्तिः स्यात्पादस्योपरि पादकम् ॥
तलं प्रति प्रस्तरं कुर्यान्नासिकाभिरन्वितम् ।

[11] F : वृषे नृसंयुक्तं [12] D : मौलिकाकार pour मालिकाकार

[1]भित्त्यन्तं मालिकायास्तु [2]पङ्क्तिकात्रयमुत्तमम्[3] । [4]द्वितयं मध्यमं प्रोक्तमेकं कन्यसमुच्यते ॥
[5]पङ्क्तिपादमसूराणां कल्पनं पूर्ववद्भवेत् । द्वितलैकतलं वापि मालिकान्तं प्रकल्पयेत् ॥ २६ ॥
जलमार्गविहीनं वा शालाकारं प्रकल्पयेत् । एकसालविधौ [6]हित्वा प्रथमं पञ्चमं तथा ॥ २७ ॥
[7]अन्येषु त्रिषु कुर्वीत सालस्थानोपपत्तितः । [8]वेदिकाद्यं तु सालानां कल्पयेत्तु [9]यथेच्छया ॥
सालकल्पनमुद्दिष्टं प्रासादानां समन्ततः ।

[ द्वारकल्पनम्[10] ]

अन्तर्मण्डलके द्वारमेकं मुखगतं भवेत् ॥ २९ ॥
सालेष्वन्येषु सर्वेषु चतुर्द्वारं विधीयते । उभयोर्वाथ कुर्वीत द्वारं तु मुखपृष्ठयोः ॥ ३० ॥

[ गोपुरम्[11] ]

गोपुरं स्यात्प्रतिद्वारं [12]केवलं द्वारमेव वा । [13]गोपुरं तेषु कर्तव्यमुक्तलक्षणसंयुतम् ॥ ३१ ॥
[14]महामर्यादिभित्तौ तु महागोपुरमिष्यते । तस्य विस्तारमानं स्यात्तिथिहस्तेन चोत्तमम् ॥३२॥
त्रयोदशकरैर्मध्यमधमं रुद्रहस्तकैः । [15]मर्यादिभित्तिविस्तारमधमं नवहस्तकम् ॥ ३३ ॥

---

[1] D : भित्त्यन्त pour भित्त्यन्तं [2] C : पङ्क्तिना pour पङ्क्तिका
[3] L'ordre des *śloka* dans le ms. A est le suivant : 25a, 38a à 50a, 25b à 37, 50b, 51 etc. [4] A : द्वितीयं [5] A : पङ्क्तिपादसमूराणां ; F : पत्तिपादमसुराणां
[6] F : हुत्वा [7] E : अन्येष्वपि च कुर्वीत [8] C, E : वेदिकानां तु [9] A : यदृच्छया
[10] Cf. *Aṃśumatkāśyapa*, 42, 83-84 :
प्राकारेषु चतुर्दिक्षु द्वारशोभादि कल्पयेत् । प्राकारततिमध्ये च दीर्घमध्ये च वेशनम् ॥
अथवा मूलहर्म्यस्य मध्ये तद्वेशनांशकम् । प्रधानद्वारमेकं वा अन्ये वा जालकं द्विज ॥
cf. *Dīptāgama* 12, 9-13 :
द्वारशोभान्तर्मण्डल्ये विस्तारं तु त्रिहस्तकम् । पञ्चसप्तकरं वापि त्रिविधं चोच्यतेऽधुना ॥
द्वादशान्तं च हारायां पञ्चहस्तप्रमाणकम् । सप्तहस्तप्रमाणं वा नवहस्तमथापि वा ॥
प्रासादमध्यहारायां द्वारप्रासादमिष्यते । विस्तारं सप्तहस्तं वा नवहस्तमथापि वा ॥
एकादशकरं वापि त्रिविधं तत्प्रकीर्तितम् । मर्यादिभित्तिके कुर्याद्द्वारहर्म्यं विशेषतः ॥
विस्तारं नवहस्तं स्याद्धस्तैकादश एव च । हस्तत्रयोदशं वापि द्वारहर्म्यस्य विस्तृतम् ॥
[11] Cf. *Dīptāgama*, 12, 14-15 :
महामर्यादिभित्तौ तु महागोपुरमिष्यते । द्वारगोपुरविस्तारमेकादशकरं भवेत् ॥
हस्तत्रयोदशं वापि पञ्चादशकरं तु वा । पादाधिकमथाध्यर्धं पादोनद्विगुणायतम् ॥
cf. *Kāraṇāgama*, I, 8, 24-25a :
शरादिनवहस्तं वा एकादशकरं तु वा । त्रयोदशकरं वापि गोपुराणां तु विस्तरम् ॥
पादादिकमथाध्यर्धं पादोनद्विगुणायतम् ॥
[12] C, D, E, F: केवलद्वारमेव वा [13] A : गोपुरान्तेषु
[14] E : महामर्यादि pour महामर्यादि [15] D : मर्यादभित्तौ विस्तारम् ; E : महामर्यादिविस्तारम्

मध्यमं [1]रुद्रहस्तं तु श्रेष्ठं तत्र त्रयोदशैः[2] । [3]गोपुरं [4]मध्यहारे च रुद्रहस्तेन चोत्तमम् ॥३४॥
मध्यमं [5]नवहस्तं स्यादधमं सप्तहस्तकम् । [6]अन्तर्हारेऽपि तच्छ्रेष्ठं[7] नवहस्तैस्तु [8]विस्तृतम् ॥
मध्यमं सप्तहस्तैः[9] स्यादधमं पञ्चहस्तकैः । अन्तर्मण्डलके वापि द्वारगोपुरविस्तरम् ॥ ३६ ॥
[10]मुनिहस्तकृतं श्रेष्ठं पञ्चहस्तं तु [11]मध्यमम् । अधमं गुणहस्तं [12]स्यात्तेषामुत्सेधमुच्यते ॥३७॥

[ गोपुराणामुत्सेधः[13] ]

प्रासादस्य समं वापि [14]शिखरान्तमथापि वा । [15]अथवा तस्य [16]विस्तारादध्यर्धं तुङ्गमुच्यते ॥३८
पादोनद्विगुणं वापि [17]द्विगुणं वा विशेषतः । तेषु पञ्चममाद्यं च गोपुराकारमुच्यते ॥ ३९ ॥
[18]शेषेषु हर्म्यवद्वापि कुर्याच्छोभासमन्वितम् । द्वारोत्सेधमथो वक्ष्ये गोपुराणां विशेषतः ॥४०॥
[19]उपानादुत्तरान्तं तु तदर्धं तस्य विस्तरम् । अथवा नवतालं स्यात्कन्यसं द्वारमुच्यते ॥ ४१ ॥
मध्यमं दशतालं [20]स्याद्रुद्रतालमथोत्तमम् । उत्सेधात्पादहीनं तु द्वारविस्तारमुच्यते ॥ ४२ ॥
एवं प्राकारमुद्दिष्टं ;

---

[1] D : नव pour रुद्र ; F : भद्र

[2] La forme grammaticale correcte est त्रयोदशभिः

[3] A, C, D : गोपुरे

[4] A : मध्यहाराय ; C, D : मध्यहारायां ; F : मध्यहाराया

[5] A, D : दश pour नव

[6] E omet les demi-*śloka* **35**b et **36**a

[7] A : अन्तस्तालेऽपि तस्यैषु

[8] C, F : विस्मृतम्

[9] C : सप्तहस्तं

[10] A : मुनिहस्तं कृतं

[11] A : मध्यकम्

[12] A : स्यात्तेषां स्थानं विधीयते

[13] Cf. *Dīptāgama*, 12, 16-18 :
गोपुराणां समुत्सेधं प्रवक्ष्याम्यानुपूर्वशः । मूलवास्तौ शिखान्तं वा स्थूप्यन्तं वा विशेषतः ॥
अथवान्यप्रकारेण वक्ष्यते गोपुरोच्छ्रयम् । विस्ताराध्यर्धमुत्सेधं पादोनद्विगुणं तु वा ॥
द्विगुणं वापि कर्तव्यं गोपुरोत्सेधमुत्तमम् । द्वारशोभादि कर्तव्यं गोपुरान्तं विशेषतः ॥

cf. *Kāraṇāgama*, I, 8, 25b-27:
प्रासादशिखरान्तं वा स्थूप्यन्तं वा समुच्छ्रयम् । हर्म्यगोपुरकं वापि शालाकृतिमथापि वा ॥
मौलिकाकृतिकं वापि कुर्यादेव तु गोपुरम् । गोपुरद्वारतुङ्गं स्यादुपानादुत्तरान्तकम् ॥
द्वारस्यैव चतुर्दिक्षु प्राकारेषु प्रकल्पयेत् ।

[14] A : शिखरं तदथापि वा ; F : शिखरं तथापि वा

[15] A : अथवा कस्य ; C : अन्तपातस्य ; E : अन्तं वा तस्य

[16] A : विस्तारमध्यर्धसंगमुच्यते

[17] E : त्रिगुणं

[18] A : शेषं तु हर्म्यवच्चापि

[19] A : उपमाद् pour उपानाद् ; D : उपानाम्

[20] D : स्यान्मृदुतालम्

[ प्राकाराश्रितस्थानानि[1] ]

प्राकाराश्रितमुच्यते । आग्नेय्यां पचनस्थानं [2]चतुःशालासमन्वितम् ॥४३॥
शक्रपावकयोर्मध्ये [3]व्यञ्जनालयमुच्यते । याम्यपावकयोर्मध्ये स्नानाम्भःस्थानमुच्यते ॥४४॥
याम्यनैर्ऋतयोर्मध्ये [4]पुष्पशाला प्रकीर्तिता । रक्षो[5]वरुणयोर्मध्ये पुष्पशालाथवा [6]भवेत् ॥ ४५
नैर्ऋते धनधान्यानां स्थानं तु [7]परिकल्पयेत् । रक्षोवरुणयोर्मध्ये धर्मश्रवणमण्टपम् ॥ ४६ ॥
मरुद्वरुणयोर्मध्ये विद्यास्थानं प्रकीर्तितम् । वायव्ये [8]शस्त्रशाला स्याद्वस्त्रशालासमन्वितम् ॥ ४७
[9]वायुचन्द्रमसोर्मध्ये [10]शयनस्थानमिष्यते । सोम[11]शंकरयोर्मध्ये छत्रादीनां निवेशनम् ॥४८॥
ऐशान्यां दिशि कुर्वीत यागमण्टपमुत्तमम् । [12]कूपस्थानं च तत्रान्तरङ्कणे परिकीर्तितम् ॥४९॥
ईशान[13]शक्रयोर्मध्ये धान्यस्थानं विधीयते । उक्तान्येतानि सर्वाणि स्थानानि च सुरोत्तम ॥

---

[1] Cf. *Aṃśumatkāśyapa*, 42, 63-76 :

मर्यादिसालमाश्रित्य पार्श्वके पचनालयम् । अथवा मध्यहारायामाग्नेय्यां पचनालयम् ॥
नैर्ऋत्यामायुधस्थानं वायव्यां शयनार्हकम् । शांकरे यागशाला स्याद् भ्रंशभागेऽथवा बुधः ॥
आग्नेययाम्ययोर्मध्ये कर्तव्यं मण्डनालयम् । शक्रशंकरयोर्मध्ये मण्डनालयमेव वा ॥
वाद्यस्थानं च तत्पार्श्वे भृङ्गराजपदेऽपि वा । निर्ऋतिवरुणयोर्मध्ये धर्मश्रवणमण्टपम् ॥
वरुणवाय्वोर्मध्ये तु पुस्तकाराधनालयम् । तत्पार्श्वयोः प्रकर्तव्यं मण्डनालयमुत्तमम् ॥
पचनालयपार्श्वे वा कर्तव्यं मण्डनालयम् । सोमवायव्ययोर्मध्ये शस्त्राणामालयं कुरु ॥
सोमशंकरयोर्मध्ये गौर्या वासं प्रकल्पयेत् । तत्पार्श्वे शयनस्थानं पर्यङ्केण समन्वितम् ॥
पुष्पकर्तव्यमेवाथ महेशे पुष्पमण्टपम् । ग्रहक्षतपदे कुर्याद्धान्यालयं द्विजोत्तम ॥
परितो मालिकायां च एवमेवं प्रकल्पयेत् । मालिकाभ्यन्तरे चैशे कूपस्थानमुदाहृतम् ॥
अथवान्यप्रकारेण वक्ष्येऽहं देशनिर्णयम् । शक्रशंकरयोमध्ये शालिस्थानमुदाहृतम् ॥
शक्रानलयोर्मध्ये धनवासमुदाहृतम् । याम्यपावकयोर्मध्ये पुष्पमण्टपमुच्यते ॥
याम्यनैर्ऋतयोर्मध्ये स्नानाम्बुकोष्ठमुच्यते । निर्ऋतिवरुणयोर्मध्ये धर्मश्रवणमण्टपम् ॥
वरुणवायव्ययोर्मध्ये त्वायुधस्थानमुच्यते । वायव्यसोमयोर्मध्ये शयनस्थानमुच्यते ॥
ईशानसोमयोर्मध्ये यागार्थं मण्टपं कुरु । जयन्ते व्यञ्जनशाला स्यादाग्नेय्यां पचनालयम् ॥

[2] A : चतुस्ताल pour चतुःशाला ; C : चतुःसाला ; E : चतुःसाल

[3] C et E omettent le passage qui va de व्यञ्जनालयमुच्यते à रक्षोवरुणयोर्मध्ये (45b) et lisent : शक्रपावकयोर्मध्ये पुष्पशालाथवा भवेत् ।

[4] A : पुरशाला

[5] D, F : वारुण pour वरुण

[6] F : तथा pour भवेत्

[7] A : परिकीर्तितम्

[8] C : शस्त्रशालं

[9] E : वायोश्चन्द्र pour वायुचन्द्र

[10] A : रथिनः pour शयन

[11] E : शांकर pour शंकर

[12] A : उप pour कूप

[13] F : क्रमयोर् pour शक्रयोर्

[ व्यक्तलिङ्गानां स्थानम् [1]]

[2]अन्तर्मण्डलकं हित्वा [3]महामर्यादिभित्तिकम् । मध्यस्थेषु प्रयुञ्जीत त्रिषु [4]भित्तिसमाश्रितम् ॥
[5]सर्वेषां [6]व्यक्तलिङ्गानां स्थानं सालसमाश्रितम् । कारयेत्परितो धीमान् [7]मूलप्रासादसंमुखम् ॥
[8]भित्तिं हित्वाङ्गणे वापि कारयेद्देशिकोत्तमः ॥ ५३ ॥

[9]इत्यजिताख्ये [10]महातन्त्रे [ क्रियापादे ] [11]प्राकारलक्षणविधिरष्टत्रिंशः पटलः ॥

[1] Cf. *Aṃśumatkāśyapa*, 42, 77-82 :
परितो मालिकायां तु सकलस्थानमुच्यते । शांकरे नृत्तमूर्तिं च त्वाग्नेय्यां वृषवाहनम् ॥
उमास्कन्दसहितं विप्र नैर्ऋत्यां परिकल्पयेत् । कङ्कालं वायुदिग्भागे भिक्षाटनं जयन्तके ॥
सुखासनं तु सत्यांशे वितथे त्रिपुरान्तकम् । सुग्रीवे हरेरर्धं स्याद्गन्धर्वे चन्द्रशेखरम् ॥
शेषांशे मदनारिः स्यान्मुख्ये कालारिमूर्तिनम् । दितये त्वर्धनारीशमिन्द्रे कल्याणसुन्दरम् ॥
क्षेत्रपालस्तु पर्जन्ये याम्ये वै दक्षिणेश्वरम् । वारुण्ये लिङ्गमुद्भूतं सौम्ये तु गजहारिणम् ॥
इतोर्ध्वमालयं प्रोक्तमन्तरालेषु कल्पयेत् । मूलहर्म्यं तु संवीक्ष्य सकलस्थापनं कुरु ॥

[2] D : अन्तर्मण्टपकं
[3] E : महामर्यादि pour महामर्यादि
[4] C : भक्ति pour भित्ति ; E : पङ्क्ति
[5] E omet le demi-*śloka* 52a
[6] A : यत्तु pour व्यक्त
[7] F : मूलप्रासादमुन्मुखम्
[8] E : पङ्क्तिं ; F : भक्तिं
[9] E : इत्यजिते pour इत्यजिताख्ये
[10] E omet महातन्त्रे
[11] A : प्राकारलक्षणविधिः एकपञ्चाशः पटलः; C : प्राकारलक्षणविधिपटलः; D : प्राकारलक्षणविधिः सप्तत्रिंशत्पटलः । ग्रन्थं ५४; E : प्राकारलक्षणपटलः (३७); F : प्राकारलक्षणः पटलः

11

## [एकोनचत्वारिंशः पटलः]

## [परिवारालयविधिः[1]]

### [परिवारालयस्थानम्[2]]

परिवारालयं वक्ष्ये तच्छृणु त्वं समाहितः। प्रासादानां तु तत्प्रोक्तं प्राकारेषु समन्ततः ॥१॥
अन्तर्मण्डलके[3] पूर्वं परिवाराष्टकं[4] भवेत्। [5]अन्तर्हाराग्रतः कुर्याद्द्विरष्टपरिवारकम् ॥ २ ॥
मध्यहारे प्रयुञ्जीत द्वात्रिंशत्परिवारकम्। तेषां [6]भित्त्याश्रितं वाथ मध्यमे वा[7] प्रकल्पयेत्॥३॥

---

[1] Pour परिवारालयविधि voir *Aṃśumatkāśyapa* 45 et 50, *Kāmika* I, 71, *Kāraṇa* I, 60 et 66 et II, 88, *Kālottara* 52, *Dīpta* 11, *Yogaja* 17, *Vīra* 41, *Santāna* 14 et *Suprabheda* 1, 39.

[2] Cf. *Dīptāgama*, 11, 1b-2 :
आदिप्रासादबाह्ये तु परिवाराणि कल्पयेत्। अष्टौ वै षोडशं चैव द्वात्रिंशच्च यथाक्रमम् ॥
परिवारं प्रकर्तव्यं प्राकाराभ्यन्तरेष्वपि।

*ibid.*, 6b-9a :
परिवारालयं ग्राह्यं त्रिविधेन प्रकीर्तितम्। सालभित्त्याश्रितं वाथ अन्तराले तु वा पुनः ॥
परिवारं प्रकर्तव्यमन्तर्मण्डलके बुधः। परिवाराष्टौ तु कर्तव्यमन्तर्हारे विशेषतः ॥
षोडशं परिवारं स्यान्मध्यहारे यथाक्रमम्। मर्यादाभित्तिके कुर्याद्द्वात्रिंशत्परिवारकम् ॥

cf. *Yogajāgama*, 17, 1-2a :
अन्तर्मण्डलके कुर्यात्परिवाराणि चाष्ट वै। अथवान्यप्रकारेण अन्तर्हारेऽथवा पुनः ॥
अन्तर्मण्डलके स्थाप्य वृषभं पूर्वके न्यसेत्।

*ibid.*, 10a :
मर्यादाभित्तिके कुर्यात्परिवाराणि षोडश।

cf. *Kāraṇāgama*, I, 60, 1-4a :
स्थापनं परिवाराणां वक्ष्ये लक्षणपूर्वकम्। परितो हर्म्यबाह्ये तु परिवाराणि कल्पयेत् ॥
अन्तर्मण्डलके कुर्यादैशे चण्डेश्वरालयम्। श्रीकराख्यविमाने तु चण्डेशं स्थापयेद्बुधः ॥
प्राकारे तु द्वितीये तु परिवाराष्ट कल्पयेत्। प्राकारभित्तिसंयुक्तं चान्तरालाश्रितं तु वा ॥
स्थापयेत्परिवाराणि आलयैश्च समन्वितम्।

*ibid.*, 14b :
न्यसेन्मर्यादिभित्तौ च परिवाराणि षोडश।

[3] F : मण्डलिका pour मण्डलके
[4] F : अष्टमं pour अष्टकं
[5] A : अन्तस्ताराग्रतः
[6] A : हित्वाश्रितं; C : नित्याश्रितं
[7] A omet वा

[परिवारालयमानम्[1]]

परिवारालयं सर्वं तन्मानमधुनोच्यते । मूलप्रासादगर्भे तु शरभागविभाजिते ॥ ४ ॥
व्योमभागाधिकं [2]धाम नेत्रभागाधिकं तु वा । कुर्याद्वै परिवाराणां [3]हीनं तद्वदथापि वा ॥५॥
तत्समं च प्रमाणानां पञ्चकं परिकीर्तितम् । [4]मूलधाममुखं तेषां द्वारं च परिकल्पयेत् ॥ ६ ॥

[प्रथमं परिवाराष्टकम्[5]]

लक्षणं प्रतिमादीनां पूर्ववत्परिकीर्तितम् । अग्रे वृषालयं कुर्यान्मण्टपप्रान्तसंस्थितम् ॥ ७ ॥
आग्नेय्यां [6]ब्रह्मणः कुर्याद्याम्ये[7] मातृगणस्य तु । विनायकस्य नैर्ऋत्यां [8]प्राग्द्वारं तत्प्रकल्पयेत् ॥

---

[1] Cf. *Kāraṇāgama*, I, 60, 6b-7 et *Yogajāgama*, 17, 13-14a :
मूलगर्भप्रमाणेन परिवारालयं कुरु । मन्दिरार्धसमं वापि तद्गर्भार्धसमं तु वा ॥
विस्तारद्विगुणोत्सेधमालयानां विधीयते ।

cf. *Dīptāgama*, 11, 42b-43a :
प्रासादार्धसमो वापि गर्भगेहसमोऽपि वा । परिवारालयविस्तारं विस्तारद्विगुणोन्नतम् ॥

[2] C : वाथ pour धाम

[3] A : हीनां

[4] D, E, F : मूलालय pour मूलधाम ; C omet les demi-*śloka* 6b et 7a

[5] Cf. *Kāraṇāgama*, I, 60, 9-10 :
स्थापयेद्वृषभं पूर्वे त्वगस्त्यं वह्निगोचरे । याम्ये कात्यायनी प्रोक्ता नैर्ऋत्यां तु गणेश्वरम् ॥
ब्रह्माणं वारुणे देशे वायव्यां चैव षण्मुखम् । केशवं सौम्यदिग्भागे ऐशान्यां भास्करं तथा ॥

*ibid.*, 20b-22a :
ईशानात्पावकान्तं च मन्दिरं पश्चिमाननम् । नैर्ऋत्याद्यनिलान्तं च प्राङ्मुखं चास्त्रमन्दिरम् ॥
दक्षिणस्थमुत्तराभिमुखं चैव प्रकल्पयेत् । सर्वाण्यौत्तरवेश्मानि दक्षिणाभिमुखानि वै ॥

cf. *Dīptāgama*, 11, 15-17 :
पूर्वे तु वृषभस्थानमाग्नेय्यां सिंहवाहिनीम् । याम्ये मातृगणानां तु नैर्ऋत्यां विघ्ननायकम् ।
वारुणे तु कुमारः स्याद्वायव्यां काकवाहिनीम् । सोमे तु केशवस्थानमैशान्यां भास्करालयम् ॥
परिवाराष्टौ तु विन्यस्य अन्तर्हारे विशेषतः । अन्तर्मण्डलके कुर्यादैशे चण्डेश्वरालयम् ॥

cf. *Yogajāgama*, 17, 15b-17 :
वृषभं पूर्वतः स्थाप्य दुर्गामाग्नेयके न्यसेत् । सप्तमातृगणान्वीरं दक्षिणे स्थापयेत्ततः ॥
नैर्ऋत्यां गणनाथं तु गजपृष्ठालयं कुरु । वारुण्यां सुकुमारः स्याज्ज्येष्ठा तु वायुदेशके ॥
सौम्ये विष्णुं तथा स्थाप्य चण्डेशमीशतो न्यसेत् ।

cf. *Virāgama*, 41, 3-6 :
अन्तर्मण्डलके कुर्यादैशे चण्डेश्वरालयम् । पुरतो वृषभस्थानं स्थापयेद्वृषभं ततः ॥
आग्नेय्यां चैव देशे तु दुर्गां स्थाप्य विशेषतः । दक्षिणे मातृदेवांश्च विघ्नेशं नैर्ऋते तथा ॥
वारुण्यां स्थापयेत्तत्र कुमारं वाप्यजो भवेत् । ज्येष्ठां वायव्यदेशे तु विष्णुं चोत्तरदेशके ॥
ऐशान्यां चैव विप्रेन्द्र भास्करं विन्यसेत्ततः । तदेवमन्तर्हारे तु विन्यसेदष्टदैवतान् ॥

[6] A : ब्राह्मणं pour ब्रह्मणः

[7] F : वामे pour याम्ये

[8] A : प्राक्पारं ; C, E : प्राग्वारं

वारुण्यां स्कन्दधाम[1] स्याज्ज्येष्ठाया[2] वायुगोचरे[3]। कौशिक्याश्चोत्तरे [4]तत्र विष्णोर्वापि प्रकल्पयेत्॥
[5]मूलधामवदस्यापि द्वारं च परिकल्पयेत्। ऐशान्यां तु रवेः कुर्यात्पश्चिमद्वारमेव हि ॥ १० ॥

[परिवाराष्टकानामालयाः[6]]

चण्डेशालयमव्यक्तं मण्डले तु प्रकल्पयेत्। ऐशान्यां [7]दक्षिणद्वारं मुखमण्टपसंयुतम् ॥ ११ ॥
वृषालयं [8]चतुर्द्वारं मण्टपाकारमुच्यते। ब्रह्मणश्चतुरश्रं तु मातृणां गोपुराकृतिः ॥ १२ ॥
विस्तारद्विगुणं तस्य चायामं परिकल्पयेत्। हस्तिपृष्ठं गणेशस्य [9]निवेशः स्याद्गुहस्य तु ॥१३॥
ज्येष्ठाया नागरं चापि [10]दुर्गायाश्च [11]तथा भवेत्। [12]विष्णोर्द्राविडमित्युक्तमर्कस्यापि[13] विधानवत्[14]॥
परिवारालयं सर्वं कुर्यादेकतलान्वितम्। एवमालयमुद्दिष्टमधुना पीठमुच्यते ॥ १५ ॥

[परिवाराणां पीठानि[15]]

अन्तर्मण्डलमध्ये तु भित्त्याश्रितमथापि वा। बलिपीठं प्रकर्तव्यं कौशिकाङ्गुलसंमितम् ॥१६॥

---

[1] A : धामस्य pour धाम स्यात्
[2] A, C : ज्येष्ठायां pour ज्येष्ठायाः
[3] A : देशके pour गोचरे
[4] F : तस्य pour तत्र
[5] C, D et E omettent les *śloka* 10 et 11a
[6] Cf. *Kāraṇāgama*, I, 60, 11-13a :
मण्टपं तु चतुर्द्वारं कर्तव्यं वृषभालयम्। पाकालयं पावके तु दुर्गालयं च स्वस्तिकम् ॥
गजपृष्ठे तु नैर्ऋत्यां ब्रह्मणः पूर्वतो मुखम्। कुक्कुटाण्डं गुहस्योक्तं विष्णोः कान्तं हरेः कुरु ॥
नन्द्यावर्तमथैशान्यां पूर्वोक्तविधिना कुरु।
*ibid*, 19 :
मण्टपाकृतिकं वापि सभाकृतिमथापि वा। नन्द्यावर्तविमानं वा सर्वेषां तु प्रकल्पयेत् ॥
cf. *Yogajāgama*, 17, 15b-18 :
मण्टपं तु चतुर्द्वारं वृषभालयमिष्यते। स्वस्ति दुर्गाया धामं तु शालाकारं तु मातृणाम् ॥
हस्तिपृष्ठं गणेशस्य कूटाकारं गुहालयम्। ज्येष्ठाधाम गृहाकारं विष्णुकान्तं हरेः कुरु ॥
नन्द्यावर्तमथैशान्यां चण्डेशं भास्करं तु वा। सर्वेषां परिवाराणां मण्टपाकृतिरेव वा ॥
शुभाकृतिविमानं वा नन्द्यावर्ताकृतिर्भवेत्।
[7] A : दक्षिणे द्वारं ; E : दक्षिणं द्वारं ; F : दक्षिणे पार्श्वे
[8] A : चतुर्द्वारमण्टपाकार॰
[9] A : तवेशं ; D : निवेशं
[10] F : दुर्गायां च
[11] A : यथा pour तथा
[12] E : विष्णो थ द्राविडं प्रोक्तं
[13] C, E : कर्मस्यापि pour अर्कस्यापि ; D : कर्मकस्य
[14] E : विधानवित्
[15] Cf. *Kāraṇāgama*, II, 88, 1b-3a :
चतुरश्राकृतिं पीठं हस्तमात्रप्रमाणतः। द्वियङ्गुलं घनं प्रोक्तं तस्योर्ध्वे पङ्कजं तथा ॥
अष्टपद्मदलं कल्प्य पञ्चाङ्गुलसमुच्छ्रितम्। कर्णिकामध्यमे चैव वृत्तं वा परिकल्पयेत् ॥
[16] cf. *Kāmikāgama*, I, 71, 93b :
पीठस्था वा[थ] बिम्बस्थाः परिवारामरा मताः।.......

[1]अधमं द्विगुणं [2]मध्यं त्रिगुणं चोत्तमं भवेत् । वेदाश्रमथवा वृत्तं सर्वपीठं [3]प्रकल्पयेत् ॥ १७ ॥
विस्तारसमतुङ्गं स्यात्त्रिपादं चार्धमेव वा । त्रिमेखलं [4]तु कुर्वीत द्विमेखलमथापि वा ॥ १८ ॥
एकमेखलया [5]युक्तमूर्ध्वे [6]पद्मसमन्वितम् । पद्मपीठं तु कुर्वीत पद्माकारं [7]सकर्णिकम् ॥ १९ ॥
मातृणां नवपीठं स्याज्ज्येष्ठायाः [8]पीठकत्रयम् । अन्येषामेवमेकं स्याच्चण्डेशस्य तथैव हि ॥ २० ॥
[9]बेरं संत्यज्य पीठं स्यादेकं चण्डेश्वरं विना । [10]अष्टकं परिवाराणामुद्दिष्टमथ षोडशम् ॥ २१ ॥

[पश्चिमद्वारालये विशेषः[11]]

पश्चिम[12]द्वारहर्म्ये तु वृषस्थाने गुहो भवेत् । गुहस्थाने वृषश्चापि शेषं पूर्ववदेव हि ॥ २२ ॥

[द्वितीयं परिवारषोडशकम्[13]]

द्वितीयं परिवाराणां षोडशं कथ्यतेऽधुना । प्रागादिषु यथास्थानं लोकपालान्प्रकल्पयेत् ॥ २३ ॥

---

*ibid.*, 95-102 :

चतुर्दिक्षु चतुष्पीठे चाग्रपृष्ठे द्वयं तु वा । पृष्ठं विहाय त्रितयमेकमग्रेऽथवा भवेत् ।
कोणद्वारे भवेत्पीठं कोणस्थं दिग्गतं तु वा । प्रतिसालं तु पीठं वा पैशाचं तु बहिर्भवेत् ॥
पञ्चाङ्गुलं समारभ्य चैकाङ्गुलविवर्धनात् । पञ्चविंशतिमात्रान्तं विस्तारादग्रपीठके ॥
पादमर्धं त्रिपादं वा समं वोच्चं विशालतः । द्वित्रिवेदेषुषट्सप्तभागान्कृत्वैकभागतः ॥
एकद्वित्रिचतस्रः स्युर्मेखलाया अथोपरि । सकर्णिकं वा पद्मं स्यात्केवला कर्णिकापि वा ।
मेखलाद्विगुणं पद्मं त्रिगुणं वा चतुर्गुणम् । पद्मोच्चं कीर्तितो वेशो मेखलासदृशो भवेत् ॥
त्रिपादं वा द्विपादं वा पादं वा परिकल्पयेत् । कर्णिका मेखलोच्चा वा पद्मार्धेनाथ पादतः ॥
त्रिपादेन विधेया वा यथाशोभबलेन वा । वृत्तं वा चतुरश्रं वा क्षुद्रपीठं तदीरितम् ॥

[1] F : अधमद्विगुणं
[2] A : कुर्यात् pour मध्यं
[3] A : प्रकल्पितम्
[4] E : प्रकुर्वीत pour तु कुर्वीत
[5] C : युक्तामूर्ध्वे ; F : वृत्तमूर्ध्वे
[6] A : पद pour पद्म
[7] F : सकर्णकम्
[8] C : पीठिक pour पीठक ; D, E : पीठिका
[9] A : बेरे सद्मस्य ; E, F : बेरे सन्त्यज्य

[10] A omet le passage qui va de उद्दिष्टमथ षोडशम् (21b) à द्वितीयं परिवाराणां (23a) et lit : अष्टानां परिवाराणां षोडशाः कथ्यतेऽधुना

[11] Cf. *Yogajāgama*, 17, 19 :
पश्चिमद्वारहर्म्ये तु स्थापयेत्पश्चिमे वृषम् । कुमारं पूर्वदेशे तु विन्यसेत्तु विशेषतः ॥

cf. *Kāraṇāgama*, I, 60, 13b-14a :
पश्चिमद्वारहर्म्ये तु स्थापयेद्वारुणे वृषम् । ब्रह्माणं पूर्वदेशे तु स्थापयेद्देशिकोत्तमः ॥

[12] C, D : स्थान pour द्वार

[13] Cf. *Kāraṇāgama*, I, 60, 17-18 :
स्थापयेत्स्वस्वदेशे तु शक्रादींल्लोकपालकान् । अश्विनीसप्तमातृश्च वागीशीं कमलोद्भवाम् ।
ज्येष्ठां चैवोरगेन्द्रं च क्षेत्रपालं रविं क्रमात् । ऐन्द्राग्नेये च मध्यादिष्वन्तराले तु विन्यसेत् ॥

[1]अर्कचन्द्रमसोः स्थानं [2]शक्रदक्षिणवामयोः । नारदागस्त्ययोश्चापि कीनाशस्य तथा भवेत्॥२४॥
श्रियं सरस्वतीं चापि [3]वरुणस्य तथैव हि[4] । [5]व्यासवागीशयोः स्थानं कुबेरस्य तथा भवेत् ॥२५॥
एवं षोडशकं प्रोक्तं [6]परिवारद्वितीयकम् । द्वात्रिंशत्परिवारं[7] तु तृतीयमधुनोच्यते ॥ २६ ॥

[तृतीयं द्वात्रिंशत्परिवारकम्[8] ; तत्राष्ट वसवः[9]]

[10]धरो ध्रुवश्च सोमश्चाप्यापश्चैवानिलोऽनलः[11] । प्रत्यूषश्च प्रभासश्च [12]वसवोऽष्टौ दिगाश्रिताः॥

[अष्ट मरुतः[13]]

गगनः स्पर्शनो वायुरनिलो[14] मारुतस्तथा । प्राणः [15]प्राणेशजीवेशौ मरुतोऽष्टौ प्रकीर्तिताः ॥

---

cf. *Kāmikāgama*, I, 71, 84b-88a :
द्विरष्टपरिवारोऽयं तेषु सौम्यं निगद्यते । उपपीठपदं कृत्वा स्थापयेद्रविदेशतः ॥
आदित्यं सुप्रजं वह्निं किंनरं मातरं तथा । विबुधं विघ्नराजं च श्रियं च वरुणं तथा ॥
स्कन्दं ज्येष्ठां च दुर्गां च विष्णुं चण्डेश्वरं तथा । क्षेत्रजं गीतजं पश्चात्स्थापयेन्मुनिपुङ्गवाः ॥
अस्मिन्नेव पदे चान्तर्विद्येशा द्वारपास्तु वा । द्विरष्टपरिवाराः स्युः "

[1] A : अर्कचन्द्रसमास्थानं ; C, D : अर्कचन्द्रसमस्थानं [2] E : वज्री pour शक्र
[3] A : वारुणस्य [4] F : च pour हि [5] A : वास pour व्यास
[6] C, D, F : परिवारं द्वितीयकम्
[7] Le mot परिवार se trouve ici au neutre au lieu du masculin
[8] Cf. *Kāmikāgama*, I, 71, 88-92a :
" द्वात्रिंशदधुनोच्यते । स्थण्डिले तु पदे स्थाप्य द्वात्रिंशद्रविभागतः ॥
आदित्यं चोदकं गङ्गां वह्निं नागमगस्त्यकम् । यमं सुशान्तं भूतेशं विघ्नेशं भारतीमपि ॥
श्रियं जलेशं स्कन्दं च दुर्गां ज्येष्ठां मनोन्मनीम् । ब्रह्माणं विष्णुमन्ते च काश्यपं नन्दिनं तथा ॥
क्षेत्रजं विमलं चान्ते गजेन्द्रं स्थापयेद्बहिः । अन्तर्विद्येश्वरान्वापि ऋषीन्वा विन्यसेद्वसून् ॥
अथाष्टपरिवारान्वा विन्यसेद्देशिकोत्तमः ।
[9] Cf. *Kāraṇāgama*, I, 14, 26b-27a :
धरो धूम्रश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवश्चाष्ट एव च ॥
[10] A : धरोऽध्रयश्च ; C : धरो धूम्रश्च
[11] C : अनलेऽनिलम् pour अनिलोऽनलः ; D, E : अनलोऽनिलः [12] E : वसवोऽष्टाविहाक्षिताः
[13] Cf. *Śaivasiddhāntasaṃgraha*, p. 438 :
गर्भाग्निः स्पर्शनो वायुरनिलो जगतस्तथा । प्राणप्राणेशजीवेशा मरुतश्चाष्ट पूजयेत् ॥
सर्वे तु द्विभुजाश्चैव द्विनेत्रास्त्वेकवक्त्रकाः । सर्वे मरकतप्रख्याः सर्वाभरणभूषिताः ॥
[14] A : अनलो pour अनिलो [15] C, D, E : प्रवेश pour प्राणेश

वसूनामन्तरालेषु प्रागादिषु च संस्थिताः ।

[ [1]अष्टनागाः]

अनन्तो वासुकिश्चैव [2]तक्षः कार्कोटकस्तथा ॥ २९ ॥

[3]गुलिकः शङ्खपालश्च महापद्मश्च पद्मकः । एते चाष्टौ[4] महानागा मरुतां दक्षिणे स्थिताः[5] ॥

[6]एतेषामूर्ध्वकायं तु कल्पयेत्पुरुषाकृतिम्[7] । [8]कृकट्यां तु शिरःपार्श्वे फणेन [9]परिमण्डितम् ॥

सर्पाकारमधःकायं[10] सर्वेषां परिकल्पयेत् ।

[अष्ट प्रमथाः[11]]

[12]विकृतो [13]विवृतास्यश्च पवनो गणपावनः ॥ ३२ ॥

प्रमथो [14]मथकारिश्च मारुतश्च महेन्द्रकः । एते तु [15]प्रमथाश्चाष्टौ [16]मरुतां वामपार्श्वगाः ॥३३॥

[क्षेत्रपालः[17]]

[18]अन्तर्हारगतं कुर्यादैशान्यां [19]क्षेत्रपालकम् ।

[परिवाराणां बेराभावे पीठकल्पनम्[20]]

[21]बेराभावे तु पीठस्थं स्थापयेत्स्थापकोत्तमः ॥ ३४ ॥

उक्तस्थाने यदि द्वारं [22]सर्वं तस्य प्रयोजयेत् । [23]परिवारत्रयेऽप्यस्मिन्यदिष्टं तत्प्रकल्पयेत् ॥३५॥

---

[1] Cf. *Śaivasiddhāntasaṃgraha*, p. 440 :
अनन्तो वासुकिश्चैव तक्षः कार्कोटकस्तथा । पद्मश्चैव महापद्मो गुलिकः शङ्खपालकः ॥
चतुर्दशेऽष्टनागांश्च पूजयेद्गन्धपुष्पकैः ।

[2] F : दक्षः pour तक्षः

[3] C गुणक pour गुलिकः

[4] D : अष्ट pour अष्टौ

[5] A : यथा pour स्थिताः

[6] A : एतेषामूर्ध्वकायस्तु ; C : एतेषामूर्ध्वगो यस्तु

[7] C, F : आकृतिः pour आकृतिम्

[8] A : कुकट्यां तु

[9] A : फणि pour परि

[10] F : अथ कश्चित् pour अधःकायं

[11] Cf. *Śaivasiddhāntasaṃgraha*, p. 444 :
अष्टाविंशत्यावरणे प्रमथेन्द्राष्टकं यजेत् । ज्वरः कुण्डोदरश्चैव शङ्कुकर्णो महाबलः ॥
जिह्वाशिखः शिखिजिह्वः पादाक्षश्चाक्षपादकः । प्रेतजिह्वः प्रमथराजा अष्टकोट्यधिराजकाः ॥
सर्वे ते द्विभुजाश्चैव द्विनेत्राश्चैकवक्त्रकाः ।

[12] A : विवृतो

[13] C : विवृताढ्यश्च

[14] A : मयकानिश्च ; F : विप्रकाश्यश्च

[15] A :प्रथमाश्चाष्टौ ; F : प्रथमा वाष्टौ

[16] C : मारुता pour मरुतां

[17] Cf. *Kāraṇāgama*, I, 60, 32a et 35a :
अन्तर्हारे तु परितो देवानां स्थानमुच्यते । . . . . . ऐशान्यां क्षेत्रपालकः ॥

[18] A : अन्तर्हारे गतं

[19] A : क्षेत्रकल्पनम्

[20] Cf. *Kāraṇāgama*, I, 60, 25 :
प्रतिमानामभावे तु पीठं वा कल्पयेत्सुधीः । विमानेन युतं वापि हीनं वा स्थापयेत्सुधीः ॥

[21] A omet les *śloka* 34b, 35 et 36a

[22] C, D : सर्वे pour सर्वं

[23] E : परिवारत्रयेऽप्यस्मिन्नन्यदिष्टं प्रकल्पयेत्

द्वयं वापि त्रयं वाथ यथास्थानोपपत्तिकम् ।

[परिवारबलिः[1]]

[2]परिवारबलिं तत्र चाग्रादारभ्य दापयेत् ॥ ३६ ॥

प्रदक्षिणक्रमेणैव गन्धपुष्पादिभिर्युतम् । स्वनाममन्त्रसंयुक्तं बलिं [3]दद्याद्विशेषतः ॥ ३७ ॥

[4]निर्माल्यलङ्घने दोषो सोमसूत्रे न विद्यते । सव्यापसव्यमार्गं [5]चेद्राजराष्ट्रं विनश्यति ॥३८॥

तस्मात्सर्वप्रयत्नेन सव्यमार्गे[6] बलिं क्षिपेत् । [7]सालमण्टपयुक्तं[8] चेदन्तस्थं परिवारकम्॥ ३९ ॥

बाह्ये पीठं तु संस्थाप्य तद्देवानां बलिं क्षिपेत् । मण्टपावृतदेवानां[9] पूर्ववद्बलिमाचरेत् ॥४०॥

---

[1] Cf. *Kāraṇāgama*, I, 66, 7b-12 ; 14b-21a ; 25b-28a :
सर्वेभ्यो द्वारपालेभ्यस्तृप्तये नन्दिकालकौ । द्वारस्य दक्षिणे नन्दिं गङ्गामेवं तदुत्तरे ॥
वामपार्श्वे महाकालं यमुनां तस्य दक्षिणे । पुरतो वृषभं यष्ट्वा चाग्नेय्यां पावकं ततः ॥
सप्तमातृगणं याम्ये विघ्नेशं नैर्ऋते ततः । पश्चिमे तु गुहं चैव ज्येष्ठां वायव्यदेशके ॥
सौम्यभागे तु दुर्गां च ईशे क्षेत्रं समर्चयेत् । द्वारे बलिं विशेषेण नन्दिकालबलिं ददेत् ॥
प्रथमे च महापीठे भास्करस्य बलिं ददेत् । प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
गोपुरे दण्डिनं सव्ये मुण्डिनं वामपार्श्वके । . . . . महोक्षं पूजयेदग्रे इन्द्रादीनां बलिं ददेत् ॥
इन्द्रं चैव तथाग्निं च यमं च निर्ऋतिं तथा । वरुणं चैव वायुं च सोममीशानमर्चयेत् ॥
पुनः प्रदक्षिणं कृत्वा ब्रह्मविष्णू समर्चयेत् । नैर्ऋते चैव विष्णुं च ईशे ब्रह्माणमेव च ॥
द्वितीयावरणं प्रोक्तं वज्रादीनां तृतीयके । पीठाग्रे चास्त्रकं यष्ट्वा महापीठे बलिं क्षिपेत् ॥
आमोदादि दलाग्रे वा तन्मूले वा समर्चयेत् । तदन्ते कर्णिकामध्ये विघ्नं वा रुद्रभूतकम् ॥
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा । अविघ्नो विघ्नराजश्च षडेते भूतनायकाः ॥
अविघ्नं कर्णिकामध्ये आमोदं पूर्वदिग्दले । याम्ये चैव प्रमोदं च सुमुखं पश्चिमे दले ॥
दुर्मखं तु दले सौम्ये विघ्नकारं च ईशके । . . . . अथवान्यप्रकारेण प्रथमावरणे यदि ।
प्रथमं दक्षिणं कृत्वा वृषाद्यष्टकमर्चयेत् । पुनः प्रदक्षिणं कृत्वा मातृणां बलिमाचरेत् ॥
गोपुरद्वारपालेभ्यो वृषं चास्त्रं च पूर्ववत् । इन्द्रादींश्च दलाग्रेषु तन्मूले पीठभूतकान् ॥
एवं बलिकर्मं कुर्यात् "

[2] A : परिवारालयं तत्र

[3] C, D, E, F : दत्त्वा pour दद्याद्

[4] A : निर्माल्यलङ्घनं दोषं सोमसूत्रं ; C : निर्माल्यलङ्घने दोषं सोमसूत्रं

[5] E : च pour चेद्

[6] C : मार्गो pour मार्गे

[7] A : शाला pour साल ; C, D : साला : E : सालं

[8] A : मण्टपसंयुक्तं pour मण्टपयुक्तं चेद्

[9] A : सालानां pour देवानां

[महापीठस्थानम्[1]]

महापीठद्वयं कुर्याद्बाह्याभ्यन्तरयोरपि । [2]गोपुरस्याग्रसंस्थस्य चाभ्यन्तरस्य [3]चावधौ ॥ ४१ ॥
[4]गुणहस्तादि तत्स्थानमथवा[5] तिथिहस्तकम्[6] । महापीठस्य निर्दिष्टं तल्लक्षणमथोच्यते ॥४२॥

[महापीठलक्षणम्[7]]

तालत्रयं समारभ्य षट्षडङ्गुलवृद्धितः[8] । [9]मुनितालान्तकं यावन्मानानि परिकल्पयेत् ॥४३॥
तेषु [10]चैकेन मानेन गृहीत्वा तेन कारयेत् । विस्तारसममुत्सेधं [11]पीठस्य परिकल्पयेत् ॥४४॥
विकारभागे तत्तुङ्गे व्योमांशं पादुकं भवेत् । [12]वेदांशं जगतीं कुर्यात्कैरवं वह्निभागतः ॥४५॥

---

[1] Cf. *Kāmikāgama*, I, 71, 117-120a ; 122b-124 :
प्रासादपोतमध्यात्तु पादमध्यविवर्जितम् । मूलधाम्नः समारभ्य वह्निदण्डं व्यपोह्य च ॥
तत्र संस्थापयेत्पीठं तत आरभ्य वर्धयेत् । अर्धदण्डेन पञ्चाशद्दण्डान्तं देशिकोत्तमः ॥
पीठायामान्तरा ह्येतद्वृषपृष्ठेऽथवा भवेत् । सालानां मध्यदेशे वा ग्राममार्गान्तरेऽपि वा ॥
ग्राममध्येऽथवा कुर्याद्वामेशानेऽथवा भवेत् .... । पश्चिमद्वारसंयुक्ते ऋषभं शूलमेव च ॥
महापीठध्वजाद्यं च पश्चिमे परिकल्पयेत् । दक्षद्वारे च कौबेरेऽप्येवमेव समाचरेत् ॥
चतुर्द्वारयुते द्वारं प्रत्यक्षं वा सशूलकम् । महापीठमथैकत्र स्थापयेद्वा ध्वजादिकम् ॥

[2] C : गोपुरस्याश्रयं स्थाप्य : E : गोपुरस्याग्रतः स्थाप्य ; F : गोपुरस्याग्रसंस्पर्शे

[3] A : चावधिम् ; C : चाविधि ; D, E : चावधि

[4] A : गुणहस्तोत्थं ; F : गुणहस्तोऽर्थं

[5] E : अधमं pour अथवा

[6] A : हस्तकान् pour हस्तकम्

[7] Cf. *Kāmikāgama*, 71, 103-116, 121b-122a :
महतां पीठकानां च लक्षणं शृणुतोत्तमाः । पद्मगर्भसमो वापि तदर्धः पाद एव वा ॥
तदन्तरेऽष्टभागे तु नवधा विस्तरो भवेत् । रुद्रमात्रं समारभ्य द्वित्र्यङ्गुलविवर्धनात् ॥
नवहस्तप्रमाणान्तो महापीठस्य विस्तरः । विस्तारसम उत्सेधः सपादः सार्ध एव वा ॥
त्रिपादो ह्यर्धमानो वा तत्तदन्तरजोऽपि वा । पीठोच्चः षोडशांशो वा एकभागेन कीर्तितः ॥
पीठतारसमो वा स्यादेकद्वित्र्यङ्गुलोन्नतः । जगती चतुरंशः स्यात्त्रिपादं कुमुदो भवेत् ॥
पादेन कम्पः कर्णस्तु त्रिपादेन प्रकीर्तितः । भागेनोपरि कम्पः स्याद्वाजनं तु द्विभागतः ॥
भागेन वाजनं चोर्ध्वे तदूर्ध्वे पद्ममिष्यते । पीठाकारसमो वा स्यादेकद्वित्र्यङ्गुलोन्नतः ॥
षोडशाष्टांशहीनो वा पत्रविस्तार इष्यते । तदर्धो वा त्रिपादो वा स्वव्यासादुच्चमिष्यते ।
तयोरन्तरमानं तु नवधोच्चं भवेद्द्विजाः । पद्मतारत्रिभागैका कर्णिकार्धेन वा मता ॥
पादमानान्तराष्टांशे नवमानं प्रकीर्तितम् । कर्णिकाविस्तरः प्रोक्तस्तत्त्रिपादः समोऽपि वा ॥
अर्धमानान्तरोपेतः कर्णिकोच्छ्राय इष्यते । पादाष्टांशविहीनः स्यादग्रस्थूलस्य विस्तरः ॥
अधिष्ठानोपपीठोक्ताकृतिं वोपरि कल्पयेत् । धामाकृतिर्वा कर्तव्या प्रस्तरान्ता गुरूत्तमाः ॥
मध्यभद्रयुतं वापि नानाचामरसंयुतम् । नानाभूतसमायुक्तं कोणस्थर्क्षसमन्वितम् ॥
अनेकनासिकाजालं सोपपीठं तु केवलम् । वृत्तं वा चतुरश्रं वा त्र्यश्रं वस्वश्रमेव वा ॥....
दक्षिणे पश्चिमे वास्य सोपानं परिकल्पयेत् । संश्लिष्टं वाथ विश्लिष्टं सोपानं तदपीरितम् ॥

[8] E : वृद्धिदम् pour वृद्धितः ; F : वृद्धिदः

[9] A : मुनिनालंत्यकं ; F : मुनितालान्यकं

[10] A : चैकैक pour चैकेन

[11] A : रूपस्य pour पीठस्य

[12] A : वैदाधो pour वेदांशं

व्योमांशं [1]पट्टिका तत्र गलं वह्न्यंशकं भवेत् । तदूर्ध्वे पट्टिकां कुर्याद्भागेनैकेन [2]बुद्धिमान् ॥
[3]नेत्रांशं स्यान्महापट्टी शिवांशं[4] चोर्ध्वपट्टिका । तदूर्ध्वे कमलं कुर्यात्तत्ताराधसमुन्नतम्[5] ॥४७॥
[6]तत्त्र्यंशकैकभागेन तदूर्ध्वे कर्णिका भवेत् । द्व्यंशेन तद्दलं प्रोक्तमेवं पीठं प्रकल्पयेत् ॥४८॥
पीठकोणेषु कुर्वीत वृषेन्द्रांश्चतुरः समान् । अथवान्यप्रकारेण [7]त्रिःसप्तांशे विभाजिते ॥ ४९ ॥
व्योमांशोपानपद्मे[8] च कण्ठं पद्मं च पट्टिका । पञ्चभागेनोपपीठं शेषं पूर्ववदाचरेत् ॥ ५० ॥
महाभूतादियुक्तं तु कुर्यात्कोणचतुष्टये । पीठव्यासाष्टभागैकमुपपीठोच्छ्रयं भवेत् ॥ ५१ ॥
[9]सोपपीठं तु वा कुर्यात्पीठं[10] सोपानसंयुतम् । [11]बाह्याभ्यन्तरतः पीठविस्तृतं संप्रकल्पयेत् ॥

[महापीठदेवताः]

पीठलक्षणमुद्दिष्टं [12]तयोर्देवानतः शृणु । [13]आद्ये गणेश्वरं विद्धि द्वितीयेऽष्टगणाः स्मृताः ॥५३
तयोस्तेभ्यो बलिं [14]दद्यान्नित्ये नैमित्तिकेऽपि च । एवं शैलेन कर्तव्यं सुधापक्वेष्टकामयम् ॥

[15]इत्यजिताख्ये [16]महातन्त्रे [क्रियापादे] [17]परिवारालयविधिरेकोनचत्वारिंशः
पटलः ॥

---

[1] A : पट्टिकां
[2] A : वृद्धिमान्
[3] A : नेत्र्यवशं स्याद् pour नेत्रांशं स्याद् ; C : नेत्रांशत्य
[4] A : महापट्टीरिवांशं pour महापट्टी शिवांशं ; E : महापट्टा शिवांशं
[5] A : समन्वितम् pour समुन्नतम्
[6] A : तत्त्र्यंशेनैकभागेन ; C, E : तत्तत्र्यंशैकभागेन
[7] E : त्रिःसप्तांशविभाजिते
[8] A omet le passage qui va de पद्मे च कण्ठं पद्मं च पट्टिका à महा (śloka 51 a) et lit : व्यो शोपान भूतानि युक्तं तु कुर्यात्कोणचतुष्टये
[9] A : सोमपीठं
[10] A : पीठ pour पीठं; D : पीठे
[11] A : बाह्यमाभ्यन्तरं पीठं विस्तृतं
[12] A : तयोर्देवांस्ततः ; F : तयोर्देवानथ
[13] A : आद्यं
[14] A : दद्यान्नित्यनैमित्तिकेन च
[15] E : इत्यजिते pour इत्यजिताख्ये
[16] E omet महातन्त्रे
[17] A : परिवारालयविधिः द्विपञ्चाशः पटलः ; C, E : परिवारालयविधिपटलः ; D : परिवारालयविधिरष्टत्रिंशत्पटलः । ग्रन्थं ५२ ; F : परिवारालयविधिः सप्तत्रिंशत्पटलः । हरिः ओम् । गणाधिपतये नमः । विघ्नेश्वराय नमः । श्रीसरस्वत्यै नमः । शुभमस्तु । श्रीरस्तु । Le ms. F se termine avec ce *paṭala*

## [चत्वारिंशः पटलः]

## [प्रतिमास्थापनविधिः[1]]

### [प्रतिमाभेदः[2]]

प्रतिमास्थापनं[3] वक्ष्ये तच्छृणु त्वं समाहितः । केवलं सोमकं चैव साम्बिकागुहमेव च ॥ १ ॥
सब्रह्मकेशवं चैव [4]सोमश्रीविष्णुपद्मजम् । [5]सविष्णवर्धं सगौर्यर्धमिति सप्तप्रकारजम् ॥ २ ॥
[6]केवलं प्रथमं [7]तेषां वदामि सुरपुङ्गव । केवलं केवलस्यैव शिवस्य स्थापनं भवेत् ॥ ३ ॥

### [स्थापनार्थं मण्टपः[8]]

सर्वेषां स्थापनार्थाय मण्टपं चाधुनोच्यते । प्रासादाग्रेऽथवा तस्य दक्षिणेतरयोस्तु वा[9] ॥ ४ ॥

---

[1] Pour प्रतिमास्थापनविधि voir *Aṃśumad* **24**, *Kāmika* I, 68, *Kāraṇa* I, 72, *Dīpta* 34, *Vīra* 62, *Santānasaṃhitā* 21, *Suprabheda* I, 37 et *Sūkṣma* **56**.

[2] Cf. *Vīrāgama*, 62, 2b-3:
उमास्कन्दहितं चैव सुखासनं तथैव च । कल्याणसुन्दरं चैव चन्द्रशेखरमेव च ॥
गङ्गाधरं च पञ्चैते सृष्टिरूपमिहोच्यते ।...
*ibid.*, 63, 4b-5 :
ऋषभवाहनं चैव अर्धनारी तथैव च । किरातं चैव वीरेशं भिक्षाटनं तथैव च ॥
एते तु पञ्चमूर्तिस्तु स्थितिमूर्तिरुदाहृता ।...
*ibid.*, 64, 2b-3 :
नृत्तं चैव तु कामारि कालदाहं तथैव च । गजघ्नं त्रिपुरघ्नं च जलंधरवधं तथा ।
षष्ठं संहारमूर्तीनां स्थापनं त्विह चोच्यते ।...

[3] E : लक्षणं pour स्थापनं

[4] A : सह pour सोम

[5] C, E : सविष्णुध्वंसगौर्यर्धमिति

[6] A omet les *śloka* 3 et 4a

[7] E : त्वेषां pour तेषां

[8] Cf. *Kāmikāgama*, I, 68, 21-22 :
" मण्डपं त्वधुनोच्यते । प्रासादस्य चतुर्दिक्षु मण्डपं चाग्रपार्श्वयोः ॥
त्रिहस्तं तु समारभ्य चैकैककरवृद्धितः । पञ्चादशकरान्तं तु कुर्याल्लक्षणसंयुतम् ॥
cf. *Vīrāgama*, 62, 8b-10 :
प्रासादस्याग्रतश्चैव मण्टपं कारयेत्ततः । पञ्चषट्सप्तहस्तं तु कुर्यात्तु अधमत्रयम् ॥
अष्टमं नवहस्तं तु दशहस्तं तु मध्यमम् । एकादशद्वादशकरं त्रयोदशकरं तथा ॥
दशपञ्चकरं वापि उत्तमत्रयमुच्यते ।
cf. *Suprabhedāgama*, 1, 37, 34b-35 :
पूर्वे वा दक्षिणे वापि पश्चिमे वा मनोरमे । दशद्वादशहस्तं वा षोडशस्तम्भसंयुतम् ॥
चतुर्द्वारसमायुक्तम्"
cf. *Dīptāgama*, 34, 18b-19a :
मण्डपं कारयेद्धीमान्प्रासादस्याग्रतोऽन्तिके । द्वादशं दशहस्तं वा"

[9] A : अथ pour तु वा

शांकरे [1]वापि कुर्वीत सर्वलक्षणसंयुतम् । पञ्चविंशतिहस्तैस्तु दशपञ्चकरैस्तु वा ॥ ५ ॥
[2]दशहस्तेऽथवा बेरे षोडशैः परिकल्पयेत् । [3]पञ्चहस्ते तु हस्तैस्तु तिथिसंख्यैः क्रमाद्भवेत् ॥६॥
षट्त्रिंशत्स्तम्भसंयुक्ते प्रोक्तेऽस्मिन्मण्टपत्रये । वर्जयेद्देशिको धीमान्मध्ये स्तम्भचतुष्टयम् ॥ ७ ॥
[4]वेद्यर्थमथवान्येषां बेराणां मण्टपं बुधः । उत्तमं रविहस्तं तु मध्यमं सप्तहस्तकम् ॥ ८ ॥
अधमं पञ्चहस्तं तु षोडशस्तम्भसंयुतम् । कुर्यात्सर्वे च ते प्रोक्ता रवितालसमुच्छ्रयाः ॥ ९ ॥

[वेदिका, कुण्डानि च[5]]

[6]तालमात्रतलोत्सेधद्वितालोत्सेधवेदिका । तत्र कुण्डानि पूर्वादि लक्षणेनैव कारयेत् ॥ १० ॥
[7]वेदाश्रं योनि[8]खण्डेन्दुत्र्यश्राणि च[9] सुवृत्तकम् । षडश्रं पद्मकुण्डं च [10]वस्वश्रं च प्रकल्पयेत् ॥
ईशानशक्रयोर्मध्ये प्रधानं च सुवृत्तकम् ।

[पुण्याहवाचनम्, वास्तुहोमश्च[11]]

गोमयेनोपलिप्याथ मण्टपं कुण्डवेदियुक्[12] ॥ १२ ॥

---

[1] A : वाथ pour वापि [2] D : दशहस्तैस्तथा [3] D, E : पञ्चहस्तैस्त्रिहस्तैस्तु

[4] A : वेद्यस्समयवान्येषां ; D : वेद्यर्थमथ यान्येषां

[5] Cf. *Suprabhedāgama*, I, 37, 37b-44 :
मण्डपे नवकोष्ठे तु मध्यभागे विशेषतः । उपवेदी तु कर्तव्या तालोच्छ्राया सुविस्तृता ॥
आलयाभ्यन्तरे वेदीं कारयेत्सुदृढां शुभाम् । हस्तमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ॥
अष्टदिक्षु च कुण्डानि कारयेत्सुप्रमाणतः । पूर्वे तु चतुरश्रं तु वह्नौ पिप्पलपत्रवत् ॥
अर्धचन्द्रं तु याम्यायां नैर्ऋत्यां तु त्रिकोणकम् । वृत्तं तु वारुणे भागे षडश्रं वायुगोचरे ॥
पद्मं चैवोत्तरे भागे ऐशान्यामष्टकोणकम् । ईशानऐन्द्रयोर्मध्ये वृत्तकुण्डं तु कारयेत् ॥
मण्डपस्योत्तरे भागे स्नानमण्डपमेव वा । स्नानवेदीं तु तन्मध्ये त्रिद्व्येककरसंमिताम् ॥
हस्तमात्रसमुत्सेधां सुसमां सुदृढां शिवाम् । त्रिमेखलासमायुक्तां भूताब्ध्यग्न्यङ्गुलैर्मिताम् ।
अथवाष्टाङ्गुला भद्रा मेखलैकसमन्विता ।

cf. *Dīptāgama*, I 34, 19-21 :
" दर्पणोदरसंनिभम् । त्रिभागैकं भवेद्वेदी रत्निमात्रसमुच्छ्रयम् ॥
परितः कल्पयेत्कुण्डं हस्तमात्रप्रविस्तरम् । चतुरश्रं चतुर्दिक्षु वृत्तं प्राधानिकं कुरु ॥
मेखलात्रयसंयुक्तं द्वित्रिभिश्चतुरङ्गुलैः । नाभियोनिसमायुक्तं निम्नोन्नतविवर्जितम् ॥

cf. *Kāmikāgama*, I, 68, 22b-24a :
नवपञ्चैककुण्डानि पूर्ववत्परिकल्पयेत् । चतुरश्राणि वृत्तानि तद्दिगश्राणि वा नयेत् ॥

[6] C : तालमात्रसमुत्सेधा द्वि०; D : तालमात्रसमुत्सेधो द्वि०; E : तालमात्रसमोत्सेधात् द्वि०;

[7] E : वेदाश्र pour वेदाश्रं [8] D : खण्डे तु pour खण्डेन्दु

[9] C : त्रियश्राणि pour त्र्यश्राणि च; E : त्रयाश्रं च [10] A: वस्वस्रं

[11] Cf. *Suprabhedāgama*, I, 37, 45-46 :
गोमयालेपनं कृत्वा शोषणं पावनं तथा । ब्राह्मणान्भोजयित्वा तु वास्तुहोममतः परम् ॥
पर्यग्निकरणं कृत्वा प्रासादं यागमण्डपम् । पुण्याहं तत्र कर्तव्यं प्रोक्षयेत्पञ्चगव्यकैः ॥

[12] E : कुण्डसंयुतम्

ब्राह्मणान्भोजयित्वात्र[1] गोमयेनानुलेपयेत् । पुण्याहं वाचयित्वाथ वास्तुहोमं च कारयेत्॥१३॥

[रत्नादिन्यासः[2]]

[3]स्थापनस्यात्र यत्पूर्वं कर्म तच्चाभिधीयते । नेत्रोन्मीलनवर्जं तु निर्वृत्ते शिल्पिकर्मणि ॥१४॥
[4]वेदाश्रकुट्टिमे तत्र गोमयेनानुलेपिते । सितपुष्पाक्षतोपेते स्थण्डिले शालिनिर्मिते ॥ १५ ॥
पीठं तत्र समादाय प्रोक्षयित्वासिनाम्भसा[5] । विन्यस्याभ्यर्च्य [6]चानन्तमासने तत्र मध्यमे ॥
रत्नानि विन्यसेद्धीमान्मध्यादीशान्तदेशके । [7]माणिक्यं विन्यसेन्मध्ये शक्रे [8]मरकतं न्यसेत् ॥
वैडूर्यं वह्निदेशे तु नीलं याम्येऽथ नैर्ऋते । मौक्तिकं स्फटिकं वाःपदिशि वायौ च पुष्यकम् ॥
वज्रं तु [9]सोमदिग्भागे प्रवालं [10]शांकरे तथा । [11]विन्यस्य नवबीजैस्तु ततस्तत्रोपरि न्यसेत् ॥

[नेत्रोन्मीलनम्[12]]

प्रतिमां स्थाप्य निष्कम्पां संश्लेषं कारयेद्दृढम् । शिल्पिना कर्मदक्षेण नेत्रोन्मीलनमेव च ॥

---

[1] E : अथ pour अत्र

[2] Cf. *Dīptāgama*, 34, 4b-7a :
प्रतिष्ठादिवसात्पूर्वे पञ्चमे त्रियहेऽपि वा । रत्नन्यासं प्रकर्तव्यं सुमुहूर्ते सुलग्नके ॥
माणिक्यं मध्यमे न्यस्त्वा हैमकूर्चसमन्वितम् । इन्द्रनीलं तु पूर्वायां न्यसेन्मरकतं यमे ॥
वारुणे स्फटिकं प्रोक्तं चन्द्रकान्तं तु सौम्यके । हृद्बीजेन न्यसेद्धीमान्सुस्निग्धं कारयेत्ततः ॥

cf. *Suprabhedāgama*, I, 37, 7-13 :
प्रासादस्य पुरोभागे मण्डपे समलंकृते । स्थण्डिलं तत्र कुर्वीत शालिभिर्विमलैस्तथा ॥
गन्धपुष्पादिना पूज्य पद्मपीठस्य मध्यमे । नवावटानि कर्तव्यं रत्नानि विधिवन्न्यसेत् ॥
माणिक्यं चैव वैडूर्यं नीलं मरतकं तथा । मौक्तिकं चैव गोमेदं वज्रं पुष्यं प्रवालकम् ॥
एतानि हृदयेनैव मध्यमादीनि विन्यसेत् । तिलमुद्गनीवारांश्च तिलं वै सर्षपं तथा ॥
श्यामं शालिकुलुत्थं च प्रियङ्गु नवबीजकम् । सुवर्णेन कृतं चेह बीजानि कवचेन तु ॥
अञ्जनं हरितालं च श्यामं चैव मनश्शिलाम् । पारदं चैव सौराष्ट्रं सिद्धकं गैरिकं तथा ॥
स्थापनं शिवमन्त्रेण पीठोर्ध्वेऽवटमध्यमे । प्रतिमां तत्र संयोज्य सुस्निग्धं कारयेत्तथा ॥

[3] C, D, E : स्थापनस्य त्रयं पूर्वं  [4] A : वेदाश्रे कुट्टिमे

[5] A : प्रोक्षयित्वा शिवाम्भसा ; D : प्रोक्षयित्वा समाम्भसा  [6] D : वानन्तवासने

[7] E : माणिक्कं  [8] C, D : मरतकं  [9] A : सौम्य pour सोम

[10] A : शांकरेऽथवा  [11] C : विन्यसे नवबीजैस्तु

[12] Cf. *Sūkṣmāgama*, 56, 17-29 :
नेत्रद्वययुते ऋक्षे अक्षिमोक्षणमाचरेत् । ततस्तक्षकमाहूय देशिकानुज्ञया ततः ॥
भ्रूरेखामक्षिरेखां च शिल्पिः कुर्याद्विचक्षणः । गोभूहिरण्यवस्त्रादि दत्त्वा शिल्पिं विसर्जयेत् ॥
स्थण्डिलं शालिभिः कृत्वा पद्ममष्टदलं लिखेत् । तण्डुलैश्च तिलैर्लाजैदर्भैः पुष्पैः परिस्तरेत् ॥
तस्य मध्ये तु संस्थाप्य महेशप्रतिमादिकम् । पुण्याहं वाचयित्वा तु रक्तपुष्पैरलंकृतम् ॥
कलशानष्टसंख्याकान्ससूत्रान्सापिधानकान् । सवस्त्रान्पल्लवोपेतान्नालिकेरफलान्वितान् ॥

विधिना कारयेत्पश्चात्तद्विधानमथोच्यते । अन्यत्र स्थण्डिलं कृत्वा तत्र देशे तु विन्यसेत् ॥
ततश्च [1]हेमसूच्या तु शिल्पिना [2]दृष्टिमण्डलम् । वर्तयित्वा ततः कृष्णज्योतिश्चाथ च [3]वर्तयेत्॥
विसृज्य शिल्पिनं पश्चाद्यजमानेन सत्कृतम् । पुण्याहं वाचयित्वाथ बेरशुद्धिपुरःसरम् ॥२३॥
पञ्चमृत्पञ्चगव्यैस्तु तस्य शुद्धिरुदाहृता । शुद्धिं कृत्वा मधुप्रस्थं घृतप्रस्थं तथैव च ॥ २४ ॥
पयसश्च ततः प्रस्थं लोहपात्रे विनिक्षिपेत् । [4]सौवर्णकमलं तेषु मध्वादिषु विनिक्षिपेत् ॥ २५ ॥
स्थण्डिलं शालिभिः कृत्वा साष्टपत्रं सकर्णिकम् । पद्मं तत्र समालिख्य [5]तत्र देवं निवेशयेत् ॥
तस्याग्रे स्थण्डिले तत्र [6]मध्वादीनपि विन्यसेत् । बेरमभ्यर्च्य गन्धाद्यैः प्रणवं समुदाहरन् ॥
[7]मध्वादींश्चाथ संप्रोक्ष्य हृदयेन कुशाम्भसा । [8]दक्षिणादूर्ध्वगान्तं तु [9]नयनानां क्रमेण वै ॥
[10]मधु दुग्धं घृतं चापि मुद्रितं [11]धेनुमुद्रया । हृदयेन [12]प्रदर्श्याथ [13]दूर्वया [14]हैमया ततः ॥
सूर्येन्दु[15]वह्निबीजैस्तु क्रमेण परिकल्पयेत् । तानि नेत्रेषु [16]सर्वेषु सुवर्णनखसंयुतैः ॥ ३० ॥
[17]तर्जन्यनामिकामध्यानखैः स्पृष्ट्वा तु विन्यसेत् । ततो यवनिकां तत्र [18]व्यपोह्यातोद्यवाद्यकैः॥
ब्राह्मणांश्च सवत्सां गां गायत्र्या संप्रदर्शयेत् । [19]ततोऽभिषिच्य देवेशं गन्धतोयेन देशिकः ॥

---

गन्धपुष्पैः समभ्यर्च्य विद्येशानभितो यजेत् । गन्धपुष्पैः समभ्यर्च्य प्रच्छन्नपटमालिखेत् ॥
ईशानेन तु मन्त्रेण पक्ष्मरेखां समालिखेत् । कृष्णमण्डलमालिख्य सद्योजातेन मन्त्रतः ॥
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमनुस्मरन् । मधुवाता ऋतायेति मधुपात्रं सुदर्शयेत् ॥
घृतं मिक्षेति मन्त्रेण घृतपात्रं प्रदर्शयेत् । आप्यायस्वेति मन्त्रेण क्षीरपात्रं प्रदर्शयेत् ॥
दधिक्राविण्णेतिमन्त्रेण दधिपात्रं प्रदर्शयेत् । गौर्धेनुभव्यमन्त्रेण गां सवत्सां प्रदर्शयेत् ॥
ब्रह्मजज्ञानमन्त्रेण ब्राह्मणान्दर्शयेत्ततः । सुमङ्गलीति मन्त्रेण दर्शयेच्च सुमङ्गलीम् ॥
येषामीशेति मन्त्रेण धान्यराशिं प्रदर्शयेत् । प्रच्छन्नपटमावर्ज्य जनान् सर्वान्प्रदर्शयेत् ॥
बेरशुद्धिं ततः कृत्वा पञ्चमृत्पञ्चगव्यकैः । रत्नोदैः शुद्धतोयैश्च स्नापयेद्देशिकोत्तमः ॥

[1] A : होमसूत्रा तु [2] A : मुष्टि pour दृष्टि [3] A : वर्जयेत्
[4] C : सौवर्णं क्रमते तेपामर्घादिषु ; D : सौवर्णं क्रमतैलेषु मध्वादिषु ; E : सौत्रर्णं क्रमतस्तेषु मभ्वादिषु
[5] C : तदेवं विनिवेशयेत् ; E : तत्र देवं नियोजयेत् [6] D, E : मध्यादीनपि
[7] C : मर्घादींश्च समं प्रोक्ष्य ; E : मध्वादीनि च संप्रोक्ष्य
[8] A : दक्षिणं तूर्ध्वजातं तु ; C : दक्षिणामूर्ध्वगानां तु
[9] C, E : नवानां तु क्रमेण वै ; D : नवानां क्रमेण वै
[10] C, E : मधुदुग्घघृतं चापि [11] C : येन pour धेनु
[12] A : तु सृज्याथ ; C : विमृश्याथ ; E : विदृश्याथ [13] A : पूर्वया ; C : दूर्वाया
[14] C : हैमं वा [15] A : इन्द्र pour इन्दु [16] A : वर्णेषु
[17] A : तर्जन्यानामिकामध्यानां नखे दृष्ट्वा ; C, D : तर्जन्यानामिमध्यानां नखैः स्पृष्ट्वा
[18] A : व्यापोस्यातोद्यपात्रकैः [19] A : ततः शिवाद्यं देवेशं

[जलाधिवासः[1]]

[2]सर्वालंकारसंयुक्तं नीत्वा ग्रामप्रदक्षिणम् । जलतीरे समे स्थाप्य जलैस्तैरभिषिच्य च[3] ॥३३॥
[4]पञ्चविंशैः कुशैः कृत्वा [5]कूर्चग्रन्थिं तु मूर्धनि । [6]न्यस्याथ परितः [7]पादालम्बितैस्तु कुशैः सह ॥
बेरं[8] मूर्धादिपादान्तं नववस्त्रेण वेष्टयेत् । पुण्याहं वाचयित्वाथ नद्यादौ [9]तज्जले ततः ॥ ३५ ॥
नाभिदघ्नेऽथ गायत्र्या [10]फलकायां समाहितः । शाययेद्देशिको धीमान्प्राक्शिरश्चोर्ध्ववक्त्रकम्॥
[11]ततो दिगस्त्राण्यभ्यर्च्य साधिपानि यथाक्रमम् । [12]षष्टिका नाडिकानां तु तदर्धं वा तदर्धकम्॥

[प्रतिमाया मण्टपानयनम् , बेरशुद्धिश्च[13]]

नीत्वा प्रहरकं वापि तत उत्थाप्य देशिकः । प्रतिमां तां रथे वाथ शिबिकायामथापि वा ॥

---

[1] Cf. *Dīptāgama*, **34**, **15-17** :
ग्रामप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम् । कुर्याज्जलाधिवासं तु नद्यां वाथ तटाकके ॥
तीरे समतलं कृत्वा शुद्धिं कृत्वा तु पूर्ववत् । मूर्धादिपादपर्यन्तं वस्त्रैर्दर्भैश्च वेष्टयेत् ॥
शाययेज्जलमध्ये तु प्राक्शिरस्कं हृदा बुधः । एकरात्रं त्रिरात्रं वा द्विरात्रं वाधिवासयेत् ॥

cf. *Santānasaṃhitā*, 21, 21b-30 :
जलाधिवासनं पश्चाच्छङ्खभेर्यादिनिस्वनैः । रथे वा शिबिकायां वा प्रतिमारोपणं भवेत् ॥
स्तोत्रशब्दसमायुक्तं गणिकानृत्तसंयुतम् । चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ॥
ग्रामप्रदक्षिणं कुर्यात्सर्वालंकारसंयुतम् । नदीतटाकतीरे बा गत्वाचार्यो विशेषतः ॥
तीरं समतलं कृत्वा प्रतिमां तत्र पूजयेत् । अष्टकुम्भान्समादाय सूत्रेण वेष्टयेत्ततः ॥
पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः । नववस्त्रेण संवेष्ट्य प्रतिमां तु विशेषतः ॥
प्रतिमां कण्ठदघ्नं तु जले चैवाधिवासयेत् । पूर्वादीशानपर्यन्तं विन्यसेत्कलशान् बुधः ॥
अनन्तश्चैव सूक्ष्मश्च शिवोत्तमश्चैकनेत्रकः । एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डि च ॥
अधिदेवाः समाख्याता वस्त्रयुग्मेन वेष्टयेत् । लोकपालबलिं दद्यादिन्द्रादीशान्तमेव च ॥
शान्तिहोमं ततः कुर्यात्तत्काले विशेषतः । त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ॥
नवरात्रं तु देवेशि स्थापयेज्जलमध्यमे ।

[2] A : सर्वलक्षणसंभुक्तं हित्वा
[3] A : अभिषिच्यते pour अभिषिच्य च
[4] E : पञ्चविंशत्कुशैः
[5] A : कूर्चं ग्रन्थिं तु
[6] A : न्यस्त्वाथ ; E : न्यस्त्वाधः
[7] D : पादालम्बितैस्तु
[8] A : बेरमूर्धादि०
[9] C : तज्जलैस्ततः
[10] C : फलगायां
[11] A : ततो दिगस्त्रानभ्यर्च्य ; E : अस्त्राणि दिक्ष्वथाभ्यर्च्य
[12] C : षष्टिकं नाधिकारं तु ; E : षष्टिकं नाडिकान्तं वा

[13] Cf. *Suprabhedāgama*, **I**, **37**, **50b-52a** :
जलाद्बिम्बं समुत्थाप्य पञ्चगव्योषितं तथा । एकरात्रं तु कर्तव्यमथवा स्नापयेत्तु वै ॥
स्नानवेद्यास्तु तन्मध्ये संस्थाप्य प्रतिमां ततः । अष्टमृत्सलिलैनैव स्नात्वाभ्यर्च्य हृदा बुधः ॥

cf. *Vīrāgama*, **62**, **71b-72a** :
वास्तुहोमं दिवा कुर्याल्लक्षणेन समन्वितम् । दिनान्ते चैव विप्रेन्द्र जलादुत्तीर्य देशिकः ॥
आलयं प्रविशेत्तत्र पुष्पदन्तपदे स्थितः । स्नापयेत्पञ्चगव्येन व्योमव्यापि समुच्चरन् ॥

[1]साधकैः पुत्रकैर्वापि[2] समारोप्यानयेत्ततः[3] । [4]प्रतिष्ठामण्टपाद्बाह्ये[5] कल्पिते स्नानमण्टपे ॥३९॥
वेदिकातुल्यविस्तारे सोमेशानदिगास्थिते[6] । [7]नालावटसमायुक्ते [8]वेदिकोपरि विन्यसेत् ॥४०॥
तत्र [9]वस्त्रं सकूर्चं तु [10]व्यपनीय [11]यथापुरम् । यथोक्तशुद्धिपूर्वं तु प्रतिमामभिषेचयेत् ॥ ४१ ॥
[12]जलाधिवासनं यत्र क्रियते तु विवर्जितम् । शतशः प्रणवेनात्र कम्बुकेनाभिषेचयेत् ॥ ४२ ॥

[मण्टपसंस्कारः[13]]

ततो मण्टपसंस्कारं कुर्यात्पुण्याहपूर्वकम् । वितानं बन्धयेदूर्ध्वे [14]दिग्ध्वजानष्टदिक्षु च ॥४३॥
परितो दर्भमालां च [15]मालापल्लवसंयुताम् । मुक्तादामानि कोणेषु मालां सर्वत्र [16]लम्बयेत्॥४४
विन्यसेद्वेदिपर्यन्ते [17]साङ्कुरं चाष्टमङ्गलम् । तोरणं चापि पूर्वादि विन्यसेत्क्षीरवृक्षजम्[18]॥४५॥

[ मण्टपपूजा[19] ]

[20]वेद्यां भूमिं समभ्यर्च्य विताने चन्द्रमर्चयेत्[21] । वासुकिं दर्भमालायां [22]वज्रादि दिग्ध्वजेषु च॥

---

cf. *Sūkṣmāgama*, 56, 35-33 :
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु । पुण्याहं वाचयेत्तत्र मण्डपस्यार्चनं कुरु ॥
जलादुत्तीर्य बिम्बं तु शुद्धिं कृत्वा विचक्षणः । महामण्डपमासाद्य "

[1] C : सायकै [2] E : अथ pour अपि [3] C : अनयोस्ततः pour आनयेत्ततः
[4] D : प्रतिमा pour प्रतिष्ठा [5] C : ग्राह्ये pour बाह्ये [6] E आश्रिते pour आस्थिते
[7] A : नालवास pour नालावट [8] C : घटिकोपरि
[9] C : वस्त्रसकूर्चं तु [10] A : व्यवनीता [11] A, C : यथापुरा
[12] C : जलाधिवासने यत्र ; D : जलाधिवासनो यत्र
[13] Cf. *Dīptāgama*, 34, 22-23a :
वितानध्वजदर्भैश्च मण्डयेन्मण्डपं बुधः । चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥
पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः ।
cf. *Suprabhedāgama*, I, 37, 34a ; 35b-37a :
ततो मण्डपसंस्कारं यथाविभवविस्तरम् ।.......चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥
दर्भमालासमायुक्तं पुष्पमालावलम्बितम् । वितानोपरिसंछन्नमष्टदिग्ध्वजलम्बितम् ॥
मङ्गलाङ्कुरसंयुक्तं मुक्तादामैर्विभूषितम् ।
[14] A : दिग्गजान् pour दिग्ध्वजान् [15] D : मालां pour माला
[16] A : बिम्बयेत् [17] C, D, E : साङ्कुराष्टकमङ्गलम् [18] A : वृक्षकम् pour वृक्षजम्
[19] *Kāraṇāgama*, I, 42-47a :
पश्चिमद्वारमाश्रित्य नित्यद्वारादिकं यजेत् । दिव्यान्तरिक्षभूमिष्ठविघ्नानुत्सार्य बुद्धिमान् ॥
दक्षजङ्घां समुत्क्षिप्य वामशाखां विशेषतः । अस्त्रेणोदुम्बरेणैव द्वारं प्रति विचक्षणः ॥
वास्तोष्पतये चेति ब्रह्मणे नम इत्यपि । संपूज्य गन्धपुष्पाद्यैर्ब्रह्माणं निर्ऋतौ यजेत् ॥
यागमण्डपकम्पेषु पृथिवीतत्त्वकं यजेत् । तृणेषु जलतत्त्वं च बन्धेषु चाग्नितत्त्वकम् ॥
वंशेषु वायुतत्त्वं च स्थूणासु गगनं तथा । विताने चन्द्रबिम्बं च दर्भमालासु वासुकिम् ॥
इत्येवं मण्टपं पूज्य व्याप्यं सादाशिवान्तकम् ।
[20] A : विद्यां pour वेद्यां [21] Cf. *Ajitāgama*, Vol. I, pp. 149-150 [22] E : वज्रादीनि ध्वजेष्वपि

अन्तस्तम्भचतुष्के तु धर्मादीन्परितो यजेत् । आग्नेयादिषु कोणेषु बाह्येषु च [1]रवींस्तथा॥४७॥
[2]स्तम्भेष्वथ समभ्यर्च्य [3]भद्रं च विजयं क्रमात्[4] । [5]विजृम्भं लोहितं चैव तोरणेषु चतुर्ष्वपि ॥

[शयनकल्पनम्[6] ]

तत्र वेद्यां [7]प्रकर्तव्यं [8]स्थण्डिलं तु मनोहरम्[9] । यवगोधूमशाल्याद्यैरष्टद्रोणैर्वरं[10] भवेत् ॥४९॥
[11]तदर्धैर्मध्यमं प्रोक्तं तदर्धैरधमं भवेत् । [12]सुसितैस्तण्डुलैः कृष्णैस्तिलैश्चापि [13]विकीर्य च॥५०॥
पद्ममष्टदलं कृत्वा शयनं तत्र कल्पयेत् । [14]दारुजं चर्मजं चैव रोमजं [15]पक्षजं तथा ॥ ५१ ॥
उपर्यास्तरणोपेतं शयनं पञ्चधा भवेत् । [16]दारुजं फलकं ज्ञेयं क्षीरवृक्षसमुद्भवम्[17] ॥ ५२ ॥
चर्मजं शयनं चर्म वैयाघ्रं [18]चैणमेव वा । रोमजं शयनं रोमकम्बलं पक्षिपक्षजम् ॥ ५३ ॥
चतुर्थं शाल्मलीतूलसंभवं [19]वा प्रकल्पयेत् । उपर्यास्तरणं चापि केवलं सूक्ष्मवाससा ॥ ५४ ॥
चर्मकम्बलतूलानामभावे [20]वस्त्रमुच्यते । दारुजादिभिरप्येतै[21]रुपर्युपरि कल्पयेत्[22] ॥ ५५ ॥

[ शयनाधिवासः[23] ]

कल्पिते शयने तस्मिन्कुशान्पूर्वोत्तराग्रकान् । परिस्तीर्य तिलान्कृष्णाँल्लाजाञ्शुभ्रांश्च देशिकः ॥

---

[1] C, D, E : रविस्तथा
[2] C, E : स्तम्भेषु च
[3] A : भद्रजिन्वयं pour भद्रं च विजयं
[4] E : तथा pour क्रमात्
[5] C : वज्राभं लोहितं चैव ; E : वज्रं फाले लोहितं च
[6] Cf. *Dīptāgama*, 34, 23b-25 :
स्थण्डिलं कारयेद्विद्वान्वेदिमध्ये विधानतः । तण्डुलैः शोभितं कृत्वा तिलदर्भैः परिस्तरेत् ॥
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् । चर्मजं चाण्डजं चैव रोमजं मुण्डजं तथा ॥
परिस्तरणसंयुक्तं गन्धपुष्पैस्तु पूजयेत् ।
cf. *Suprabhedāgama*, I, 37, 47-49a :
शयनं कल्पयेद्विद्वान्वेदिकोपरि शालिभिः । अष्टद्रोणैस्तदर्धैर्वा तदर्धैस्तण्डुलैस्तथा ॥
तन्मध्येऽष्टदलं पद्मं तण्डुलेन तु कारयेत् । अण्डजाद्यैस्तु संकल्प्य यत्नतोपर्युपर्युत ॥
अलाभे चाण्डजादीनां वस्त्रैः पञ्चभिरास्तरेत् ।
[7] E : तु pour प्र
[8] A : मण्टपं pour स्थण्डिलं
[9] E : मनोरमम् pour मनोहरम्
[10] C : द्रोणवरं pour द्रौणैर्वरं ; E : द्रोणं वरं
[11] A : तदर्धं मध्यमं
[12] A : सुस्थितैः pour सुसितैः
[13] A : प्रकीर्य pour विकीर्य
[14] Cf. *Ajitāgama*, vol. I, p. 148
[15] A : पक्षिपक्षजम् pour पक्षजं तथा
[16] A : दारुजा pour दारुजं
[17] A : समुद्भवाः pour समुद्भवम्
[18] A : चर्म एव च pour चैणमेव वा ; E : चैणमेव च
[19] E : च pour वा
[20] A : वर्णम् pour वस्त्रम्
[21] A : अर्च्येत pour अप्येतैर्
[22] D : कल्पितैः pour कल्पयेत्
[23] Cf. *Dīptāgama*, 34, 27-28a :
सुमुहूर्ते सुलग्ने तु शाययेच्छयनोपरि । प्राक्शिरस्कं हृदा देवमूर्ध्ववक्त्रं यथा न्यसेत् ॥
रक्तवस्त्रेण संवेष्ट्य कुशदर्भैश्च वेष्टयेत् ।

[1]विकिरेच्च ततो मध्ये शयनेऽथ मनोन्मनीम् । संपूज्य [2]शाययेत्तत्र प्रतिमां प्रणवेन तु ॥ ५७
प्राक्शिरश्चोर्ध्ववक्त्रां तां [3]पूर्ववद्बद्धकूर्चकाम् । प्रच्छादयेत्सुरक्तेन वाससा [4]बद्धकौतुकाम् ॥५८
[5]सुगन्धं साक्षतं तत्र [6]पुष्पदूर्वासमायुतम् । प्रणवेनैव मन्त्रेण [7]प्रतिमोपरि विन्यसेत् ॥ ५९ ॥

[ कुम्भस्थापनम्, तत्पूजा च[8] ]

ततो देवाधिवासार्थं कुम्भान्बिम्बफलप्रभान् । द्रोणार्धतोयसंपूर्णान्सुपक्वान्दोषवर्जितान् ॥६०
[9]अष्टौ संगृह्य [10]वैद्येशाञ्शैवमेकं[11] तथाविधम् । द्रोणपूर्णं[12] तु संशोध्य प्रक्षाल्य हृदयेन तु॥६१
आवेष्ट्य [13]तन्तुना सम्यक् समेन सुसितेन च । [14]नादेयेनाथ कौपेन वारिणा शीतलेन च ॥

---

cf. *Suprabhedāgama*, I, 37, 49b-50a; 52b-55a; 57a :
तदूर्ध्वे नवशक्तीस्तु इच्छाज्ञानक्रिया अपि । गन्धपुष्पादिना पूज्य मङ्गलाङ्कुरशोभितम् ॥...
घृतशिरोऽर्पणं कृत्वा साक्षतो हेमदूर्वया । सौवर्णं रजतं वापि हृदयेन तु मन्त्रतः ॥
कौतुकं दक्षिणे हस्ते बन्धयेद्रक्षयान्वितम् । गन्धाद्यैश्चैव संपूज्य नीत्वा वै वेदिकोपरि ॥
पश्चिमाभिमुखं देवं संयजेद्धृदयेन तु । शयने शाययेद्देवं प्राक्शिरस्कं मुखोर्ध्वकम् ॥
उत्तराच्छादनं कृत्वा वस्त्रैर्दर्भैस्तु पुष्पकैः ।

[1] A : विकारेच्च ; D : विकरेच्च
[2] A : जायते तत्र ; D : कारयेत्तत्र
[3] A : पूर्ववद्बन्धकूर्चताम्
[4] A : बन्धकौतुकम्
[5] A : सगन्धं
[6] C : पुष्पं pour पुष्प
[7] A : प्रतिमां परिविन्यसेत्
[8] Cf. *Suprabhedāgama*, I, 37, 57b-70a :
विद्येशकलशानष्टौ वज्राद्यस्त्रान्सहैमकान् । वस्त्रयुग्मपरिच्छन्नान् सकूर्चान् सापिधानकान् ॥
तत्तन्मन्त्रेण बिम्बस्य परितोऽष्टसु दिक्षु च । संस्थाप्य बिम्बशिरसश्चैशाने कुम्भमेककम् ॥
षोडशाव्रतसंपूर्णं बिम्बप्रभासमन्वितम् । त्रिसूत्रैर्वेष्टयित्वा तु सूत्रात्सूत्रान्तरं यवम् ॥
पञ्चरत्नसमायुक्तं शुद्धाम्बुपरिपूरितम् । सचूतपल्लवोपेतं सकूर्चं सापिधानकम् ॥
वस्त्रयुग्मेन संवेष्ट्य स्थण्डिलोपरि विन्यसेत् । विप्राणां तु हितार्थं तु यज्ञसूत्रं च स्रुक्स्रुवम् ॥
क्षत्रियाणां हितार्थं तु गजवाजिरथान् बुधः । तुलां च मानपात्राणि वैश्यानां तु हिताय वै ॥
शूद्राणां तु हितार्थं तु वृषं लाङ्गलसंयुतम् । कृत्वैतानि सुवर्णेन षडङ्गैस्तु विनिक्षिपेत् ॥
यद्रूपा प्रतिमा स्थाप्या तत्तद्रूपं सुभावयेत् । कुम्भमध्ये तु संस्थाप्य तस्य मूलमनुस्मरन् ॥
षड्विधं ध्यानमावाह्य तानि संकल्प्य तच्छिवे । पूर्वोक्तेनैव मार्गेण मन्त्रन्यासं तु कारयेत् ॥
पूजयेद्गन्धपुष्पाद्यैर्हृदयेन विचक्षणः । वर्धनीं बीजमुख्येन तद्वत्संस्थाप्य वामके ॥
अभितश्चोपवेद्यां तु संस्थाप्य कलशाष्टकान् । वस्त्रकूर्चाक्षतोपेतान् ससूत्रान् पल्लवान्वितान् ॥
हेमवज्रादिकोपेताँल्लोकपालाधिदेवतान् । संपूज्य स्वस्वमन्त्रेण द्वारकुम्भांस्तु विन्यसेत् ॥
अष्टमङ्गलरूपाणि वेदिकायास्तु बाह्यतः । संस्थाप्य स्वस्वनामार्च्य ततो होमं समाचरेत् ॥
[9] A : आदौ pour अष्टौ
[10] A, C, E : विद्येशान् pour वैद्येशान्
[11] A : एवमेवं pour शैवमेकं
[12] A : पूर्वं pour पूर्णं
[13] E : तन्तुभिः pour तन्तुना
[14] C : नादीयनाथ pour नादेयेनाथ

चन्दनोशीरजैश्चूर्णैर्लवङ्गतुटिसंभवैः[1] । पुष्पैः सगन्धिभिश्चैव वासितेन प्रपूरयेत् ॥ ६३ ॥
वस्त्रपूतेन [2]गायत्रीं शैवीं सम्यगुदाहरन् । तेषु शैवे क्षिपेत्पञ्चरत्नमन्येषु काञ्चनम् ॥ ६४ ॥
सर्वेषु कूर्चं विन्यस्य [3]पिधानैस्तु पिधाय च । वस्त्रयुग्मेन शैवाख्यमावेष्ट्यान्यान्[4] पृथक् पृथक् ॥
[5]संवेष्ट्यैकेन वस्त्रेण ततः शैवं तु विन्यसेत्[6] । प्रतिमायाः [7]शिरोभागे [8]दक्षिणे तानपि क्रमात् ॥
[9]पूर्वादिषु च विन्यस्य घटान्विद्येश्वरात्मकान् । चतुर्दिक्षु परिस्तीर्य त्रिंशद्दर्भैः क्रमेण वै[10]॥६७॥
पुण्याहं वाचयित्वा [11]तु प्रोक्षयित्वास्त्रमुच्चरन्[12] । पाद्याद्यैः [13]पूजयेद्देवाञ्छिवादीन्देशिकोत्तमः ॥
सुप्रसन्नमना भूत्वा तद्विधानमिहोच्यते[14] । कृतविद्यातनुर्मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ॥६९
पाद्यादीन्सम्यगापाद्य प्रोक्षयित्वा शिवाम्भसा । ब्रह्मभिः पञ्चभिः सर्वानभिमन्त्र्य यथाक्रमम् ॥
मुद्रां च दर्शयित्वाथ सुरभिं तेषु [15]वस्तुषु । प्राणवृत्तिनिरोधेन ध्यात्वा देवं यथाविधि ॥ ७१
पुष्पैरञ्जलिमापूर्य [16]तस्य मूलं समुच्चरन् । प्रणवादि नमोऽन्तं तु [17]साक्षान्मन्त्रतनुं शिवम्॥७२
आवाह्य कुम्भतोये तु [18]प्रधाने मध्यसंस्थिते । [19]आवाहन्या ततश्चापि [20]स्थापन्या स्थापनं भवेत् ॥

---

[1] C : लवं कंकटिसंभवैः [2] C : शैवगायत्रीं [3] C : विधानैस्तु विधाय च

[4] C, E : आवेष्ट्य तान् pour आवेष्ट्यान्यान् ; D : आवेष्ट्यान् तान्

[5] A : संवेष्ट्य नववस्त्रेण

[6] Cf. *Dīptāgama*, 34, 28b-31 :
अभितः कलशानष्टौ द्वे वारिपूरितान्न्यसेत् । ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम् ॥
स्थापयित्वा यथान्यायं शिवकुम्भसमन्वितम् । गौरीबीजं तु वर्धन्यां न्यस्त्वा विद्येश्वरात्मकान् ॥
कूर्चवस्त्रपिधानैश्च पल्लवैश्च विभूषयेत् । गन्धपुष्पादिनाभ्यर्च्य स्वस्वबीजं स्मरन्न्यसेत् ॥
तोरणद्वारकुम्भं च पूजयित्वा यथाविधि ।

cf. *Sūkṣmāgama*, 56, 40-42 :
तस्य दक्षिणपार्श्वे तु शिवकुम्भं च वर्धनीम् । सवस्त्रान्पल्लवोपेतान्सकूर्चान्फलसंयुतान् ॥
हेमरत्नसमायुक्ताञ्शुद्धाम्बुपरिपूरितान् । कुम्भे शम्भुं समावाह्य तन्मूलेनैव देशिकः ॥
अभितः कलशानष्टौ विद्येशान्संप्रपूजयेत् । गन्धपुष्पादिनाभ्यर्च्य "

[7] C : शिवाभागे [8] A : दक्षिगेनापि च क्रमात्

[9] A : पूर्वादिगश्च [10] A : तु pour वै

[11] E : च pour तु

[12] Ms. A ajoute : प्रणवादिनमोन्तं च साक्षमन्त्रतनुं शिवम् । आवाह्य कुम्भतोये तु.........
voir les demi-*śloka* 72b et 73a

[13] E : पूजयेद्देवं pour पूजयेद्देवान् [14] A : अथोच्यते pour इहोच्यते

[15] C, E : वास्तुषु [16] D : मन्त्रमूलं pour तस्य मूलं

[17] A : साक्षमन्त्रतनुं [18] C : प्रधरे

[19] A : आवाह्यान्यं [20] A : स्थापिन्या

[1]संनिधिः [2]संनिधान्या स्यान्निरोधिन्या[3] निरोधनम् । ततो नमस्कृतिं बध्वा दर्शयेच्च तदग्रतः ॥
[4]षडङ्गानि हृदादीनि पावकादिचतुर्ष्वपि । कोणेषु तत्र विन्यस्य [5]तद्दिक्ष्वस्त्रं च देशिकः[6] ॥७५॥
मृग्यैव मुद्रया [7]न्यस्य [8]नेत्रमीशानगोचरे । [9]शान्तां मनोरमां चैव [10]मुकुलीं शशकर्णिकाम् ॥
[11]पद्मां च [12]कालकण्ठ्याख्यां [13]षडङ्गानां प्रदर्शयेत् । ततः पाद्यादिभिर्देवमर्चयेन्मूलमन्त्रतः ॥
अङ्गैरङ्गानि [14]चाभ्यर्च्य [15]तत्तत्स्थानेषु मन्त्रवित् । [16]विद्येशांश्च क्रमाद्ध्यात्वा कुर्यादावाहनादिकम् ॥
तेषां वज्रादिमुद्राश्च[17] दर्शयेन्मन्त्रवित्तमः । पाद्यमाचमनं चार्घ्यं [18]गन्धं पुष्पं च धूपकम् ॥७९
दीपं च क्रमशो दद्यात् सर्वेषां स्वस्वमूलतः । ततो [19]होमः प्रकर्तव्यस्तद्विधानमथोच्यते ॥ ८०

[ होमः[20] ]

तेषु कुण्डेषु सर्वेषु कृत्वा संस्कारमुत्तमम् । अधिदेवान्यजेत्पश्चात्प्रागादिषु यथाक्रमम् ॥ ८१ ॥
अधिदेवास्त्विति[21] प्रोक्ता विद्येशाश्च समन्ततः । प्रधाने शिव एव स्यादर्चनं स्यात्स्वनामभिः ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । ततश्चाग्निमुखं [22]हुत्वा होमयेद्द्रव्यसंचयम् ॥ ८३

---

[1] A : संनिधिं pour संनिधिः

[2] A : संनिधानं स्याद् pour संनिधान्या स्याद् ; C : संनिधिन्या स्याद् ; D : संनिधिन्यासाद्

[3] C : निरोधन्या pour निरोधिन्या

[4] A : षडङ्गादि

[5] E : दिक्ष्वस्त्रं चैव

[6] C : देशिकम्

[7] A : न्यस्त्वा

[8] C : नेत्रमीशेन गोचरे

[9] A : शान्तं मनोरमं चैव

[10] C : मुकुलीशसकर्णिकाम् ; E : मुकुलीशं च कर्णिकाम्

[11] A : पद्मं

[12] A : कालकण्ठाख्य

[13] A : षडङ्गान् pour षडङ्गानां ; C : षडङ्गात्

[14] A : चाभ्यस्य

[15] A, D : ततः pour तत्तत्

[16] C : विद्येशं च

[17] A : मुद्रां च pour मुद्राश्च

[18] A : गन्धपुष्पं

[19] C, E : होमं प्रकर्तव्यं pour होमः प्रकर्तव्यः

[20] Cf. *Suprabhedāgama*, I, 37, 71-79 :
नवपञ्चत्रयं वापि एकाग्निरथवा पुनः । प्राग्याम्येन्दुषु कुण्डेषु त्रेताग्निं सम्यगाचरेत् ॥
सदाशिवेश्वरौ रुद्रः क्रमात्कुण्डाधिपाः स्मृताः । त्रये वैकाग्निके विद्वाञ्छिवाग्निं पूर्वतो हुनेत् ॥
शिवाग्निं प्रथमं हुत्वा मूर्तिहोमं ततः परम् । शिवाद्यवनिपर्यन्तं ध्यात्वा सर्वगतं प्रभुम् ॥
तत्तद्रूपान्स्वमात्मानं स्मृत्वाग्निं संयजेद्बुधः । आदित्यः पूर्वतो मूर्तिर्भवस्त्विमूर्तिधारकः ॥
आग्नेय्यामग्निमूर्तिस्तु धारकः शर्व उच्यते । मूर्तिधारः पशुपतिः पृथिवीमूर्तिर्दक्षिणे ॥
आकाशो नैरृते मूर्ती रुद्रस्तन्मूर्तिधारकः । आपो वरुणदिग्भागे रुद्रो नाम सुधारकः ॥
वायुर्वै वायुदिग्भागे भीमो वै मूर्तिधारकः । उत्तरे सोममूर्तिस्तु महान्वै मूर्तिधारकः ॥
मूर्तिधारस्तथेशस्तु आत्मा तु मूर्तिरेव च । एवं विधानतस्त्वष्टमूर्तयो मूर्तिधारकाः ॥
प्रधानस्य शिवः प्रोक्तस्तत्तद्ध्यानपरायणः । प्राग्वदग्निमुखं कृत्वा पश्चाद्द्रव्यैस्तु होमयेत् ॥

[21] A : अधि pour इति

[22] C, E : हित्वा pour हुत्वा

[1]समिदाज्यचरूँल्लाजांस्तिलान्[2] सर्षपकान्यवान् । [3]प्लक्षोदुम्बरकाश्वत्थवटवह्निसमुद्भवाः ॥८४॥
[4]अपामार्गार्कजाश्चैव खादिराश्च [5]समिद्भवेत् । [6]पालाशी स्यात्प्रधानस्य[7] तत्तत्परिधिसंयुता[8]॥८५
[9]यथोक्तालाभे सर्वत्र पलाशोदुम्बरावुभौ । [10]समिद्धोमं तु मूलेन सर्वत्र परिकल्पयेत् ॥ ८६ ॥

---

[1] Cf. *Suprabhedāgama*, I, 37, 80 :
काष्ठाज्यसमिदन्नादि लाजाः सक्तुतिलानि च । यवसिद्धार्थमुद्गानि मधुनैकादशानि च ॥
cf. *ibid*, I, 37, 84-86a :
पलाशं समिधं पूर्वे आग्नेय्यां तु वैकङ्कतम् । वटं याम्ये तु विज्ञेयं अश्वत्थं निर्ऋतौ तथा ॥
प्लक्षं तु वारुणे भागे चौदुम्बरं तु वायवे । अर्कं वै सौम्यदिग्भागे बिल्वमीशानगोचरे ॥
इन्द्रईशानयोर्मध्ये पलाशं समिधं हुनेत् ।
cf. *Santānasaṃhita*, 21, 64b-65a :
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । नीवारं चैव गोधूममपूपं सक्तुसंयुतम् ॥
cf. *ibid*, 21, 71b-72 :
समिधः संप्रवक्ष्यामि शृणुष्वायतलोचने । पलाशखदिराश्वत्थप्लक्षन्यग्रोधमेव च ॥
बिल्वमुदुम्बरं वह्निः क्रमेण परिकीर्तितम् ।
cf. *Dīptāgama*, 34, 33 :
समिदाज्यचरूँल्लाजान्यवसिद्धार्थमाषकान् । मधु घृतसमायुक्तं गुलखण्डं च होमयेत् ॥
cf. *ibid*, 34, 32 :
अश्वत्थोदुम्बरप्लक्षवटं पूर्वादितः क्रमात् । पलाशं तु प्रधानस्य सर्वेषामिध्ममिष्यते ॥
cf. *Vīrāgama*, 62, 101 :
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । मुद्गं माषं च विप्रेन्द्र नवद्रव्यमिहोच्यते ॥
cf. *ibid*, 62, 98-100 :
पलाशं पूर्वतो भागे अश्वत्थं दक्षिणे तथा । पश्चिमे चक्रवृक्षस्तु उदुम्बरं तु चोत्तरे ॥
ईशानइन्द्रयोर्मध्ये पलाशसमिधा युतम् । शमीं चैव अपामार्गं बिल्ववृक्षसमन्वितम् ॥
प्लक्षेण च समायुक्तमाग्नेयादित्रिकोणके । सोमईशानयोर्मध्ये पलाशसमिधा तथा ॥

[2] C, D, E : तिल pour तिलान् [3] A : प्लक्षोदुम्बरमश्वत्थ॰ ; C : प्लक्षौदुम्बरकाश्वत्थ॰
[4] A : अपामार्गार्ककाश्चैव ; C, E : अपामार्गार्कजं चैव [5] A : समुद्भवेत् [6] A : पलाशं
[7] C, D, E : प्रधाने स्यात् pour प्रधानस्य [8] A : संयुतान् pour संयुता
[9] C : यथोक्तलाभे
[10] Cf. *Dīptāgama*, 34, 35-37a :
ईशानेन समिद्धोमं पुरुषेण घृतं हुनेत् । अघोरेण चरुं हुत्वा लाजं वामेन होमयेत् ॥
यवं सद्येन हुत्वा तु सिद्धार्थं कवचेन तु । माषमस्त्रेण जुहुयान्नेत्रमन्त्रान्मधुत्रयम् ॥
प्रत्येकं शतमर्धं वा तदर्धं होमं कारयेत् ।
cf. *Vīrāgama*, 62, 102-112a :
समिधः सद्यमन्त्रेण आज्यं वामेन होमयेत् । अघोरेण चरुं हुत्वा लाजं तत्पुरुषेण तु ॥
सर्षपं त्वीशमन्त्रेण यवं हृदयमन्त्रतः । शिरसा च तिलं हुत्वा शिवमन्त्रेण मुद्गकम् ॥

आज्यादीन्यथ शेषाणि चाङ्गैर्हृदयपूर्वकैः । [1]अस्त्रान्तैर्जुहुयान्मन्त्री [2]क्रमेणैव हुताशने ॥ ८७ ॥
आचार्यो मूर्तिपैः[3] सार्धं समकाले तु होमयेत् । द्रव्यान्ते व्याहृतिं हुत्वा देशिकः प्रतिमां तथा ॥
मूर्धादिपादपर्यन्तं मूलमन्त्रेण संस्पृशेत् । [4]ततः प्रागादिहोतारः स्पृशेयुः क्रमशस्तदा ॥ ८९ ॥
तथैव षड्भिरङ्गैश्च तत्तदङ्गेषु संस्पृशेत् । सर्वद्रव्यावसानेषु सर्वकुण्डेषु चैव हि ॥ ९० ॥
मूर्तीनां कुण्डसंस्थानां प्रत्येकं तु शताहुतिम् । आज्येन हुत्वा सर्वत्र परिषिच्य यथाविधि ॥
विद्येशमूर्तिभेदेन स्थितं पावकमर्चयेत् । होमकाले प्रयुञ्जीत ऋग्यजुःसामाथर्वणैः ॥ ९२ ॥
[5]वेदैरध्ययनं दिक्षु प्रागादिषु यथाक्रमम् । ऐशान्यां दिशि तत्रैव [6]साधकोऽस्त्रं जपेत्तदा ॥
ततः कुम्भगतानां तु हविर्दत्त्वा यथाक्रमम् । अधिवासनकर्मैवं[7] समाप्य गुरुणा सह ॥ ९४ ॥

[ प्रातः करणीयकृत्यानि[8] ]

होतारः सर्व एवात्र रात्रिशेषं तु जागरात् । नीत्वा प्रातः समुत्थाय कृतनित्यक्रियास्तु ते ॥

---

माषं तु कवचेनैव घृतमिश्रे घृतं तथा । त्रियम्बकेन मन्त्रेण चरुं चैव तु होमयेत् ॥
आवोराजेति मन्त्रेण लाजहोमं तु कारयेत् । एवं क्रमेण होतव्यं तत्तन्मन्त्रेण देशिक ॥
अष्टोत्तरशतं वापि पञ्चाशत्पञ्चविंशतिः । द्रव्यं प्रति विशेषेण होतव्यं देशिकोत्तम ॥
शैवाचार्येण संयुक्तं होमकर्म तु कारयेत् । द्रव्यान्ते चापि द्रव्यान्ते प्रतिमां संस्पृशेत्ततः ॥
द्रव्यान्ते व्याहृतिं हुत्वा देवनाम्ना च होमयेत् । चतुर्दिक्षु चतुर्वेदं कुर्यादध्ययनं ततः ॥
श्रीरुद्रं पूर्वतो भागे पुरुषं चैव दक्षिणे । पश्चिमे चमकं प्राच्यां पवमानं तथोत्तरे ॥
चतुर्दिक्षु च गेहस्य गणिकानृत्तसंयुतम् । माहेश्वरसमायुक्तं नृत्तं कृत्वा तु भक्तितः ॥
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् । स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ॥
एवमेव क्रमेणैव रात्रौ होमं तु कारयेत् ।

[1] A : अस्त्रान्ते pour अस्त्रान्तैर्

[2] A : क्रमेणेद्धे pour क्रमेणैव

[3] C, D, E : होतृभिः pour मूर्तिपैः

[4] A omet les demi-*śloka* 89b et 90a

[5] C : वेद्यैरध्ययनं

[6] C : सायकोऽस्त्रं

[7] A : एव pour एवं

[8] Cf. *Kāmikāgama*, I, 68, 83-87 ; 90b :
नृत्तगेयसमायुक्तं स्तोत्रमङ्गलवाचकैः । रात्रिशेषमपोह्याथ प्रभाते विमले ततः ॥
देशिको मूर्तिपैः सार्धं कुर्यात्स्नानं तु पूर्ववत् । मन्त्रसंनद्धकायस्तु प्रविश्य मुखमण्डपम् ॥
उद्धृत्य प्रतिमां पूर्वं मुखे मूर्तिपसंनिभम् । व्यपोह्य वस्त्रकूर्चादीन्यजेद्गन्धादिभिर्हृदा ॥
कुम्भान्संपूजयेत्पश्चाद्वह्निकुण्डेषु पूजयेत् । अघोराष्टशतं हुत्वा प्रायश्चित्तार्थमेव वा ॥
वौषडन्तहरेणैव पूर्णाहुतिमथाचरेत् । आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥...
मुहूर्तनाडिकापूर्वे स्थापनं तु समाचरेत् ।

cf. *Dīptāgama*, 34, 37b-42a :
प्रभाते स्नानं कुर्वीत आचार्यो मूर्तिपैः सह । महूर्तनाडिकापूर्वे सर्वातोद्यसमाकुलम् ॥
रात्रिशेषं हुनेद्धीमान्षोडशाहुतिसंख्यया । घृतमिश्रे घृतं हुत्वा देवस्य त्वा चरुं हुनेत् ॥

[ पूर्णाहुतिः ]

देशिकेन समाविश्य सुमुहूर्ते सुलग्नके । देवानभ्यर्च्य कुम्भस्थान्प्रज्वाल्याग्निं समन्ततः ॥९६॥
[1]व्याहृत्यन्तं तु सर्वत्र मूर्तिमन्त्रैर्दशाहुतिम् । हुत्वा सर्वात्मना पश्चात्स्रुचा पूर्णां प्रदापयेत् ॥
परिषिच्य ततो मूर्तिमुद्रास्यानलसंश्रयाम्[2] । परिधीन्विष्टरांश्चापि गृहीत्वाभ्युक्ष्य च क्रमात् ॥
वह्नौ विनिक्षिपेद्धीमांस्तत उत्थाय देशिकः । नववस्त्रोत्तरीयं च[3] नवोष्णीषाम्बरं दधत् ॥९९॥

[ प्रतिमाया उत्थापनम्, स्नानवेद्यां विन्यासश्च ]

पञ्चाङ्गभूषणोपेतः सपवित्रकरो गुरुः । [4]देवमुत्थापयेद्वेद्याः प्रणवं समुदाहरन् ॥ १०० ॥
वस्त्रकूर्चादिकं सर्वमपनीय च होतृभिः । [5]तस्मिन्नध्येतृभिश्चैव काले [6]स्वस्त्यादिवाचकैः ॥
सातोद्यवाद्यैरन्यैश्च [7]मङ्गलैस्तु समन्वितैः । मण्टपे [8]स्नानवेद्यां तु बेरं पीठे तु विन्यसेत् ॥

[ प्रतिमाशुद्धिः ]

उपविश्योत्तरास्यं तु[9] भद्रपीठे निराकुलः । कृतविद्यातनुर्मन्त्री [10]शोधयेत्प्रतिमां [11]तदा ॥१०३
हरिद्राद्यैस्ततः पञ्चगव्येन हृदयेन च । अभिषिच्य ततः शुद्धिं भसितेन [12]सितेन च ॥१०४॥
शुद्धोदकेन [13]संस्नाप्य ब्रह्मपञ्चकमुच्चरन् । अभिषिच्य ततो दत्त्वा वक्त्रेणाचमनीयकम् ॥ १०५

[ कुम्भाभिषेकः[14] ]

प्रणवेन शिवस्यार्घ्यं दत्त्वा पुष्पं च मन्त्रवित् । स्थापितं तु ततः कुम्भं प्रधानं देशिकः स्वयम् ॥

---

ब्रह्मजज्ञानमन्त्रेण शेषद्रव्याणि होमयेत् । जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ॥
शयनाद्देवमुत्थाप्य स्नानवेद्युपरि न्यसेत् । मण्डपं भूषयेद्धीमान्स्नानार्थं सुप्रकल्पितम् ॥
आसनं श्वभ्रमध्ये तु कल्पयेत्पद्मसंस्थितम् । तन्मध्ये स्थापयेद्देवम् "

[1] A : व्याहृत्य तं तु ; C : विहृत्य तं तु
[2] C, D : संश्रयान् pour संश्रयाम्    [3] E : उत्तरीयश्च pour उत्तरीयं च
[4] A : देवमुत्थापयेद्वेद्या ; C, D : देवमुत्थापयेद्वेद्यां ; E : देवमुत्थाप्य तद्वेद्यां
[5] A : तस्मिन्मध्ये त्रिभिश्चैव    [6] A : स्वस्त्यानुवाचकैः    [7] E : मङ्गलैश्च
[8] A : स्थाप्य pour स्नान    [9] C : आस्यात्तु pour आस्यं तु ; E : आस्यस्तु
[10] C : बोधये pour शोधयेत् ; E : बोधयेत्    [11] A : तथा pour तदा
[12] A : शिवेन pour सितेन    [13] A : संस्थाप्य
[14] Cf. *Sūkṣmāgama*, 56, 50b-58a :
पुण्याहं वाचयेत्तत्र एकत्रिंशत्कला न्यसेत् । ब्रह्मकुम्भं समुद्धृत्य पूर्ववत्समलंकृतम् ॥
आलयप्रदक्षिणं कृत्वा देवाग्रे स्थापयेद्बुधः । मुहूर्तं निरीक्ष्य दैवज्ञो गन्धपुष्पाक्षतैर्यजेत् ॥
ताम्बूलं दापयित्वा तु दक्षिणां दापयेत्ततः । जीवन्यासं ततः कृत्वा सुमुहूर्ते विचक्षणः ॥
तत्तत्स्वबीजमूलेन कुम्भतोयाभिषेचयेत् । मन्त्रान्नं दापयेत्पश्चात्परिवारघटादिकम् ॥
स्वस्वस्थानेऽभिषेकं तु गन्धपुष्पादि दापयेत् । वस्त्रैराभरणैर्माल्यैः प्रभूतहविषं ददेत् ॥

[1]उद्धृत्योद्वाहयित्वाथ शेषान्कुम्भांश्च होतृभिः । क्रमेण स्वस्वदिक्संस्थैः कृत्वार्चां च प्रदक्षिणम् ॥
अग्रे तु स्थण्डिले [2]तस्याः स्थापयित्वा यथा पुरा । कृतविद्यातनुर्देवानर्चयित्वा यथाक्रमम् ॥
[3]कुम्भस्थांस्तांस्ततो देवान् ध्यायेद्धृदि[4] समाहितः । प्राणवृत्तिनिरोधेन [5]तमेवाथ घटे जले ॥ १०९
[6]मन्त्रं प्राणस्थितिं मत्वा तस्मान्मूलं [7]समुच्चरन् । [8]तत्कुम्भाम्भस्तु कूर्चेन गृहीत्वा [9]प्रतिमाहृदि ॥
स्रावयेत्कर्मणा तेन[10] [11]स देवः स्यात्प्रतिष्ठितः । तत उद्धृत्य तत्कुम्भं वत्सरेणाभिषेचयेत् ॥
[12]विद्येशानां तु कुम्भेभ्यः पूर्ववत्परितः क्रमात् । तत्तन्मन्त्रांस्तु विन्यस्य [13]तत्र तैरभिषेचयेत् ॥

[ मन्त्रन्यासः ]

ततः सप्रणवं मूलं [14]हृदये [15]विन्यसेत्ततः । [16]अङ्गानि हृदयादीनि हृदयादिषु विन्यसेत् ॥
[17]अस्त्रं हस्ते तु विन्यस्य तारं शिरसि विन्यसेत् । गायत्रीं वक्त्रदेशे तु मातृकाश्च ततो न्यसेत् ॥

[ मातृकान्यासः ]

अकारं मूर्ध्नि चाकारं ललाटे नेत्रयोस्ततः । इकारं [18]कर्णयोश्चापि ईकारं [19]विन्यसेत्ततः ॥ ११५
उकारं गण्डयोर्न्यस्य[20] ऊकारं नासिकापुटे । [21]ओष्ठयोश्च तथा ऋ ॠ दन्तपङ्क्तिद्वयोः[22] पुनः ॥

---

धूपदीपं ददेच्छम्भोस्ताम्बूलं च निवेदयेत् । आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥
गोभूहिरण्यधान्याद्यैर्मनः संतोषयेत्क्रमात् । उत्सवं कारयेत्तत्र यथावित्तानुसारतः ॥
भक्तानां परिवाराणां दक्षिणां दापयेत्सुधीः । दीनान्धकृपणादीनां यथाशक्त्या तु दक्षिणा ॥

cf. *Suprabhedāgama*, I, 37, 96-101a :
किंचित्पूर्वं मुहूर्तस्य उत्थाप्य शयनाच्छिवम् । संपूज्य गन्धपुष्पाद्यैः शङ्खदुन्दुभिनिस्वनैः ॥
सर्वालंकारसंयुक्तं मन्त्रन्यासमथाचरेत् । शिवकुम्भं समुद्धृत्य वर्धनीं तु शिवाग्रतः ॥
विन्यस्यार्घ्यं तु दत्त्वाथ सकलीकृतविग्रहः । ध्यात्वा तद्रूपमग्निस्थं प्रतिमायां सुयोजयेत् ॥
शक्तिं वै वामपार्श्वे तु विन्यसेद्बीजमुख्यकैः । कुम्भात्तत्त्वं तथा बिम्बे संयोज्याङ्गानि विन्यसेत् ॥
शिवाख्योमाख्यविद्येशकुम्भैरस्त्राभिषेचयेत् । तदन्ते स्नपनं कृत्वा हविष्यं तु महद्भवेत् ॥
उत्सवं तत्र कर्तव्यं प्रागुक्तविधिना ततः ।

1 C : उद्धृत्य वारयित्वा च ; E : उद्धृत्य वाहयित्वा च  2 A : तस्य pour तस्याः
3 A : कुम्भस्थांश्च ततो  4 A, C : ध्यायेद्धृति pour ध्यायेद्धृदि  5 A : तमेवाधिर्घने जले
6 A : मन्त्रप्राणस्थितं मत्वा ; C : मन्त्रप्राणस्थितिर्मत्वा ; D : मन्त्रप्राणस्थितिं मत्वा
7 A : समुच्चरेत्  8 A : तत्कुम्भांस्तु कूर्चेन  9 C : प्रतिमां हृदि
10 A : कर्मणान्तेन pour कर्मणा तेन ; D : कर्मणाक्तेन
11 A : सदेव स्यात्प्रतिष्ठितम्  12 A : विद्येशेभ्यस्तु कुम्भेभ्यः
13 C, D : तैश्च तेनाभिषेचयेत्  14 A : हृद्देशे pour हृदये
15 C : विन्यसेत्तमः ; E : विन्यसेद्बुधः  16 A : अङ्गादि pour अङ्गानि
17 D : वस्त्रं pour अस्त्रं  18 A : कर्णयोर्न्यस्त्वा  19 C : विन्यसेत्तमः
20 A : न्यस्याद् pour न्यस्य ; C, D : न्यस्त्वा  21 C : ओष्ट्योस्तु तथा
22 E : द्वये pour द्वयोः

[1]ऌ ॡ च विन्यसेत्कण्ठे[2] एकारं चांसयोर्द्वयोः[3] । [4]ऐकारं च ततो [5]जत्रुद्वयोरोकारमेव[6] च ॥
[7]औकारं [8]स्तनमध्ये तु अंकारं जठरे [9]तथा । [10]अःकारं मेढ्रदेशे तु [11]कचवर्गौ च पार्श्वयोः ॥
टवर्गं पृष्ठदेशे [12]तु [13]तवर्गं [14]कटिदेशके । ऊर्वोश्च [15]पयवर्गौ च जङ्घयोः [16]शहवर्गकौ[17] ॥
विन्यसेन्मुद्रया [18]मृग्या सर्वाण्येतानि देशिकः । एवं मन्त्रतनुं कृत्वा ततश्चाप्यभिषेचयेत् ॥
गायत्र्या [19]गन्धतोयेन पाद्यमाचमनार्घ्यकम् । गन्धपुष्पं तथा धूपं वस्त्राभरणमेव च॥१२१॥
मालां नैवेद्यकं[20] चापि हृन्मन्त्रेण प्रदापयेत् । एवं बेरं प्रतिष्ठाप्य चलं चेदुत्सवं ततः॥१२२॥
तेनैव कुर्यात्तद्रात्रौ समारभ्य तु भौवनम् । चलानामचलानां तु [21]तथा चैवोभयात्मनाम् ॥

[चलाचलादिप्रतिष्ठायां विशेषः[22]]

समाना स्यात्प्रतिष्ठेयं विशेषः कथ्यतेऽधुना । जलाधिवासनं नोक्तं मृण्मये तु कथंचन॥१२४॥
[23]शयने [24]चाधिवासश्च शेषं सर्वं समं भवेत् । शूलस्थापनकाले तु रत्नन्यासविधिर्भवेत्॥१२५॥
[25]अचलस्यापि शैलस्य [26]विशेषोऽयं निदर्शितः । अधिवास्य प्रभाते तु मन्त्रन्यासविधेः पुरा ॥
रत्नन्यासस्तु कर्तव्यस्ततः[27] स्थापनमाचरेत्[28] । [29]चित्राभासेषु[30] सर्वेषु रत्नन्यासस्तु नो भवेत् ॥

---

1 C : ऌकारं pour ऌ ॡ च  2 D, E : कर्णे pour कण्ठे  3 E : न्यसेत् pour द्वयोः
4 C : एकारं  5 C : जत्रौ द्वयोः pour जत्रुद्वयोः  6 A : आकारमेव pour ओकारमेव
7 A : ओ pour औ  8 C : तु तन्मध्ये pour स्तनमध्ये  9 E : न्यसेत् pour तथा
10 A : आ pour अः  11 A : कचवर्गे तु  12 C, E : च pour तु
13 C : ट pour त  14 C : कति pour कटि  15 C, E : पफ pour पय
16 A, C, E : शळवर्गकौ  17 Cf. *Ajitāgama*, vol. I, p. 3, *śloka* 20
18 A : दृश्या pour मृग्या ; C : मुग्ध  19 D : गण्ड pour गन्ध
20 C : मालां च वेद्यकं ; E : मालानैवेद्यकं  21 C, D, E : यथा pour तथा

22 Cf. *Kāmikāgama*, I, 68, 31-32a :
शैलं चेत्स्थापने काले रत्नाद्यं विधिवन्न्यसेत् । शूलस्थापनकाले तु न्यसेद्रत्नानि मृण्मये ॥
अन्येषां रत्नविन्यासं वर्जयेत्तु विशेषतः ।

23 A : शयाने  24 A : वाधिवासं च ; C, E : चाधिवासं च
25 C, E : अर्चस्यापि  26 A : विशेषोऽग्निनिदर्शितः
27 A : रत्नन्यासं तु कर्तव्यं तत्तत्  28 A : आरमेत् pour आचरेत्

29 Cf. *Kāmikāgama*, I, 68, 55 ; 61a :
ग्रामप्रदक्षिणं वापि चित्रादौ परिवर्जयेत् । महत्तरे वा तत्त्याज्यम् "
जलाधिवासनं कुर्याच्चित्रादौ दर्पणे न वा ।

cf. *Suprabhedāgama*, I, 37, 4 :
रत्नन्यासं जले वासं शयनं तु प्रदक्षिणम् । चित्राभासे तु वर्ज्यं हि "

30 A : यत्र भासेषु

[1]जलाधिवासनं तद्वच्छयनं [2]न तथा भवेत् । अचलेष्वेव [3]कर्तव्यो रत्नन्यासश्चलेष्वपि ॥१२८॥
कुर्याद्वा सर्वबेरेषु नयनोन्मीलनं [4]भवेत् । मन्त्रन्यासविधौ मन्त्री मृण्मये भित्तिचित्रके ॥
केवलेनैव कूर्चेन मन्त्रन्यासं तु कल्पयेत् । अचले मृण्मये बेरे वर्णयुक्ते[5] शिलामये ॥ १३० ॥
[6]मन्त्रकर्म जलोपेतं [7]तस्याग्रे परिकल्पिते । पीठे सर्वं प्रयुञ्जीत तालमात्रसमन्विते ॥ १३१ ॥
प्रभा वा पीठिका [8]वापि यत्र बेरे [9]पृथक्कृता । कृत्वा शुद्धिं [10]तयोः कुर्यात्पञ्चमृत्पञ्चगव्यकैः॥

[11]इत्यजिताख्ये [12]महातन्त्रे [क्रियापादे] [13]प्रतिमास्थापनविधि-
श्चत्वारिंशः पटलः ॥

[1] E omet le demi-*śloka* 128a
[2] C, D : च pour न
[3] A : कर्तव्यं रत्नन्यासं चलेष्वपि
[4] E : तथा pour भवेत्
[5] A : रक्ते pour युक्ते
[6] A : मन्त्रकर्मं जलोपेतं ; C : मन्त्रकर्मतलोपेत०
[7] A : तस्यादुपरि कल्पिते
[8] E : वा च pour वापि
[9] A : पृथक्कृतम्
[10] C, D, E : ततः pour तयोः
[11] E : इत्यजिते pour इत्यजिताख्ये
[12] E omet महातन्त्रे
[13] A : प्रतिमास्थापनविधिः त्रिपञ्चाशः पटलः ; C : प्रतिमास्थापनविधिपटलः समाप्तः ; D : प्रतिमास्थापनविधिः एकोनचत्वारिंशतपटलः । ग्रन्थं १३३ ; E : प्रतिमास्थापनविधिपटलः

## [एकचत्वारिंशः पटलः]

## [साम्बिकस्थापनविधिः ; साम्बिकागुहस्थापनविधिश्च[1]]

[रत्नन्यासविधिः[2]]

साम्बिकस्याथ[3] देवस्य स्थापनं वक्ष्यतेऽधुना । रत्नन्यासविधिः कार्यो[4] गोमयालेपिते शुभे ॥
[5]देशे तत्कर्मशालायां कृत्वा वै स्थण्डिलद्वयम् । शालिभिर्विमलैः पद्मं तयोः सम्यक् [6]सुशोभनम्॥
देवं देवीं तयोश्चापि प्राङ्मुखं संनिवेश्य च । [7]तत्तदग्रे तयोः पीठं स्थण्डिले विन्यसेत्ततः ॥
प्रोक्षयित्वाम्भसा पीठं सर्वात्मानं समुच्चरन् । [8]माणिक्यवज्रवैडूर्यहरितालेन्द्रनीलकान्[9] ॥ ४ ॥
स्फटिकं मौक्तिकं चैव [10]पुष्यरागं प्रवालकम् । मध्यादीशानपर्यन्तं शक्तिबीजैः क्रमान्न्यसेत्॥
[11]देव्याः पीठे च रत्नानि पञ्च वा विन्यसेत्क्रमात् । शक्तिबीजैस्तु तत्रापि [12]देव्याः पीठे च विन्यसेत्॥
तयोरासनयोः पश्चात् [13]संश्लेषं सुदृढं तथा । [14]कारयेच्छिल्पिना कर्मदक्षेण शुचिना ततः॥७॥

---

[1] Pour साम्बिकस्थापनविधि et साम्बिकागुहस्थापनविधि voir *Aṃśumad* 24, *Kāmika* I, 68 et II, 43 et 47, *Kāraṇa* I, 79 et II, 53, 58 et 67, *Dīpta* 36, *Vīra* 62, *Santāna* 21, *Sahasra* 27, *Suprabheda* I, 37 et *Sūkṣma* 56. G (ms. de Svāminātha Śivācārya Mylapore, Madras) ajoute : ओं अजितागमः । उमया सह देवस्य स्थापनविधिः । अगस्तीश्वराय नमः ।

[2] Cf. *Kāmikāgama*, I, 68, 25-30 :

मण्डपे तु अलंकृत्वा पीठं तत्र विनिक्षिपेत् । नवपट्टसमायुक्तं पञ्चपट्टयुतं तु वा ॥
एकपट्टयुतं वापि पूजयेच्चन्दनादिभिः । आधाराख्यमनन्तं च मध्यमे विन्यसेद्गुरुः ॥
लोकपालांश्च चतुरो रत्नानि विविधानि च । माणिक्यमिन्द्रनीलं च वैडूर्यं च प्रवालकम् ॥
मुक्ता वज्रं तथा पुष्यरागं गोमेदकं तथा । मरकतं चैव रत्नानि नवरत्नादिपञ्चकम् ॥
पञ्चरत्नमिति प्रोक्तं माणिक्यं चैकमेव वा । वज्रं वा मध्यमे प्रोक्तं महावेशमिति स्मृतम् ॥
स्वस्थलोपममन्त्रैश्च मध्यादिक्रमतो न्यसेत् । देवं रत्नोपरि न्यस्त्वा सुस्निग्धं कारयेद्दृढम् ॥

cf. *Santanāsaṃhitā*, 21, 11b-14a :

रत्नन्यासं ततः कुर्याद्विधिना देशिकोत्तमः । वज्रं च पूर्वतो न्यस्य आग्नेय्यां पद्मरागकम् ॥
मरतकं दक्षिणे न्यस्य मौक्तिकं नैर्ऋते न्यसेत् । विद्रुमं वारुणे देशे वायव्ये पुष्यरागकम् ॥
सोमे च सूर्यकान्तं स्यादीशाने रूपकान्तकम् । इन्द्रनीलं तु देवेशे शिल्पिना कारयेत्ततः ॥

[3] A : च pour अथ
[4] A : विधिं कुर्याद् pour विधिः कार्यो
[5] G : यदेतत् pour देशे तत्
[6] A : सुशोभितम्
[7] G : तदग्रे च pour तत्तदग्रे
[8] A : माणिक्यं pour माणिक्य ; E : माणिक्कं ; G : माणिक्क॰
[9] E : नीलकम् pour नीलकान्
[10] G : पुष्परागं
[11] D : दिव्यां pour देव्याः
[12] D : देव्यां pour देव्याः
[13] C : संशोष्यं pour संश्लेषं ; E : संश्लेष्य
[14] G : कारयेत्कल्पना कर्मदक्षिणो स विनां ततः

ततश्च देवयोर्मूर्ध्नि [1]कुसुमं संनिवेशयेत् । रत्नन्यासं समाप्यैवं[2] नेत्रोन्मीलनमारभेत् ॥ ८ ॥

[नेत्रोन्मीलनम्[3]]

तदर्थं[4] स्थण्डिलं [5]कुर्यादन्यत्रैव यथा पुरा । तत्रापि देवं देवीं च [6]विन्यसेत्स्थण्डिलोपरि॥९॥
ततो वै [7]हैमया सूच्या [8]पक्ष्मरेखां तु शिल्पिना । [9]ज्योतिर्मण्डलमालिख्य कृष्णमण्डलमालिखेत्॥
[10]उन्मील्य च[11] विसर्ज्यैनं शिल्पिनं कृतकृत्यकम्[12] । [13]अन्यत्र देवौ संस्थाप्य पूर्ववत्स्थण्डिले कृते॥

---

[1] G : सदण्डं च निवेशयेत् [2] C, G : एव pour एवं

[3] Cf. *Kāmikāgama*, I, 68, 33-40 :
सुगुप्ते मण्डपे रम्ये गोमयेनानुलेपिते । प्रच्छन्नपटसंयुक्ते सर्वालंकारसंयुते ॥
स्थण्डिलं तत्र कर्तव्यमष्टद्रोणादिव्रीहिभिः । तिलतण्डुलसंयुक्तं लाजपुष्पसमन्वितम् ॥
तस्य मध्ये न्यसेद्बिम्बं प्राङ्मुखं देशिकोत्तमः । हेमसूचिप्रहाराभ्यां नेत्रमन्त्रमनुस्मरन् ॥
प्रथमं दक्षिणं नेत्रं द्वितीयं वामनेत्रकम् । ललाटस्थं तृतीयं तु लेखयेत्पूजयेद्गुरुः ॥
पक्ष्मरेखां पुरा कृत्वा ततो वै दृष्टिमण्डलम् । ज्योतिर्मण्डलमालिख्य नेत्रमोचनमाचरेत् ॥
तथैवोन्मीलनं शिल्पी वज्रकाञ्चनसूचितः । पुष्पायोनिर्मितेनेव टङ्केनैव त्रिलोचनम् ॥
नासिकाकर्णवक्त्राणि लिङ्गं पायुं च मोचयेत् । तत्तद्देवाङ्गभूतानां नयनोन्मीलनं नयेत् ॥
चित्राभासादिदेवानां तत्तद्वर्णैः समाचरेत् । तदाक्षिमोचनं कुर्याद्धेमतूलिकया गुरुः ॥

[4] C : अर्धं pour अर्थं [5] G : कृत्वा अन्यत्रैव [6] C : विन्यसेन्मण्डलोपरि

[7] A : हेमसूच्या च pour हैमया सूच्या [8] C, D : पक्ष pour पक्ष्म

[9] A : कृष्णमण्डलमध्यस्थज्योतिर्मण्डलमाप्य तत् ; C, D : कृष्णमण्डलमध्यस्थं ज्योतिर्मण्डलमाप्य तत् ; G : कृष्णमण्डलमध्यस्थं ज्योतिर्मण्डलमालिखेत्

[10] Cf. *Kāmikāgama*, I, 68, 41-52a :
उद्वास्य शिल्पिनं पश्चात्तस्याग्रे स्थण्डिलं नयेत् । बिम्बं तस्योपरि न्यस्त्वा हृदयेन तु मन्त्रतः ॥
ससूत्रान्सापिधानांश्च कलशानष्टदिक्षु च । सवस्त्रान्वारिसंयुक्तान्सकूर्चान्पिल्लवैर्युतान् ॥
स्वमन्त्रैरभितो न्यस्त्वा लोकेशांस्तत्र पूजयेत् । क्षुद्रेऽष्टकलाशान्हित्वा चान्यत्सर्वं समाचरेत् ॥
स्वर्णया दूर्वया नेत्रं मध्वाज्याभ्यां तु तर्पयेत् । हृदा वा नेत्रमन्त्रेण मन्त्रिताभ्यां गुरूत्तमः ॥
लोहजे शैलजे पक्षे रत्नजेऽप्येवमाचरेत् । अन्येषामपि सर्वेषां भावयेत्तर्पणक्रियाम् ॥
तर्जन्यनामिकामध्यैः सूर्यसोमाग्निलोचने । हिरण्यनखसंप्रोतैर्न्यसेत्तद्वोजसंयुतम् ॥
सौवर्णे राजते ताम्रे कांस्ये वाथ शरावके । घृतेन मनुना चैव प्रत्येकं प्रस्थपूरितम् ॥
तदर्धेनार्धपादेन पूरितं वा पृथक् पृथक् । घृतं प्रदर्शयेन्मन्त्री नेत्रमन्त्रमनुस्मरन् ॥
दर्शयेन्मधुपात्रं तु मृत्युजिन्मन्त्रमुच्चरन् । हृदयेन तु मन्त्रज्ञस्तद्वत्साङ्गं प्रदर्शयेत् ॥
बीजमुख्येन मन्त्रेण धान्यराशिं प्रदर्शयेत् । शिवादिदशभागान्तं तेषां मानं प्रकीर्तितम् ॥
ब्राह्मणान्दर्शयेत्पश्चात्पवमानमनुस्मरन् । तेनैव दर्शयेत्कन्यां भूषितां सर्वभूषणैः ॥
प्रच्छन्नपटमावर्ज्य जनसङ्घान्प्रदर्शयेत् ।

[11] A, C, D : वर्जयित्वा pour उन्मील्य च

[12] A, C, D : स्यात्कृतं तदा pour कृतकृत्यकम् ; G : स्यात्कृतं ततः

[13] A : अन्यदेवौ समं स्थाप्य ; G : अन्यत्र देवं संस्थाप्य

[1]तयोरग्रे मधुप्रस्थं घृतप्रस्थं तथैव च । दुग्धप्रस्थं च [2]संगृह्य [3]लोहपात्रस्थितं शुचि ॥ १२ ॥
तेषु हैमं विनिक्षिप्य कमलं [4]प्रणवेन तु । सर्वात्मना तु संप्रोक्ष्य [5]न्यस्य च स्थण्डिलोपरि ॥
हैमया [6]दूर्वया क्षौद्रं तर्पयेद्दक्षिणाक्षकम्[7] । ऊर्ध्वे [8]च सर्पिषा [9]तद्वद्वामे दुग्धेन चैव हि ॥१४
[10]सूर्याग्निसोमबीजैस्तु तर्पणं सम्यगाचरेत् । [11]हिरण्यनखसंप्रोतां देशिनीं मध्यमां तथा॥१५॥
अनामिकां च कृत्वाथ देशिन्या [12]दक्षिणे स्पृशेत् । [13]सूर्यबीजं समुच्चार्य ततो [14]ललाटलोचने ॥
अग्निबीजमनुस्मृत्य [15]मध्यानामिकया[16] स्पृशेत् । सोमबीजमनुस्मृत्य ततो देव्याश्च लोचने ॥
[17]सोमसूर्यात्मने कुर्यान्मधुना पयसा ततः । अग्निनेत्रं [18]घृतेनैव पूर्ववद्धैमदूर्वया[19] ॥ १८ ॥
ततस्तिरस्करिण्यास्तु निरासं तत्र कारयेत् । ततो धेनुं ततो विप्रांस्ततः [20]कन्याश्च दर्शयेत् ॥

[बेरशुद्धिः, ग्रामप्रदक्षिणं च[21]]

देवदेव्योश्च [22]गायत्रीमुच्चरन्देशिकः सुधीः । पञ्चमृतपञ्चगव्यैस्तु ततः शुद्धिं समाचरेत् ॥२०॥
पाशुपतेन चास्त्रेण तयोः शुद्धिरुदाहृता[23] । मालाभरणवस्त्राद्यैः कृत्वालंकारमुत्तमम् ॥ २१ ॥
[24]प्रदक्षिणं ततश्चापि कुर्याद्ग्रामपुरादिषु । जलाधिवासनं कुर्यान्नद्यादिषु ततः सुधीः ॥ २२ ॥

[जलाधिवासः[25]]

जलतीरं ततो नीत्वा प्रतिमे तत्र विन्यसेत् । अभिषिच्य ततस्तोयैः कृत्वा पुण्याहमुत्तमम् ॥

---

[1] C, D : यतोरग्रे pour तयोरग्रे
[2] E : संग्राह्य [3] A : लोहपात्रं स्थितं शुचिः [4] G : प्रणवे तु च
[5] A : न्यस्त्वा pour न्यस्य [6] G : दूर्वाक्षौद्रं तु pour दूर्वया क्षौद्रं
[7] A : दक्षिणांसकैः pour दक्षिणाक्षकम् ; C : दक्षिणांसके ; G : दक्षिणाम्बिके
[8] G : वा pour च [9] A : वै तद् pour तद्वद्
[10] E : सोमसूर्याग्निबीजैश्च [11] G : हिरण्यरत्नं संप्रोक्तं देशीनां मध्यमा तथा
[12] E : दक्षिणः pour दक्षिणे [13] E : अग्नि pour सूर्य [14] G : ललाटान्तलोचने
[15] A omet le passage qui va de मध्यानामिकया स्पृशेत् à सोमबीजमनुमृत्य (17b) et lit : अग्निबीजमनुस्मृत्य ततो देव्याश्च लोचने
[16] C, D, E : मध्येऽनामिकया [17] A : सोमसूर्यात्मनेत्राय मधुना [18] G : घृतं चैव
[19] C, G : पूर्ववद्धोमदूर्वया ; D : पूर्ववद्धोमपूर्वया [20] A : कन्यां च
[21] Cf. *Sūkṣmāgama*, 56, 29b-31 :
बेरशुद्धिं ततः कृत्वा पञ्चमृतपञ्चगव्यकैः । रत्नोदैः शुद्धतोयैश्च स्नापयेद्देशिकोत्तमः ॥
वस्त्रैराभरणैर्माल्यैरलंकृत्य विशेषतः । रथे वा शिबिकायां वा देवानारोप्य भक्तितः ॥
ग्रामप्रदक्षिणं कृत्वा सर्वालंकारसंयुतम् ।
[22] C, D, E, G : गायत्रीमुच्चरेत् pour गायत्रीमुच्चरन्
[23] G : उदाहृतम् pour उदाहृता [24] G omet les *śloka* 22 et 23
[25] Cf. *Sūkṣmāgama*, 56, 32-34 :
जलतीरं समाश्रित्य प्रपां कृत्वातिसुन्दराम् । तन्मध्ये स्थण्डिलं कल्प्य साष्टपत्रं सकर्णिकम् ॥

देवं देवीं च कूर्चाभ्यां वस्त्राभ्यां [1]चापि वेष्टयेत् । ततः शिरसि [2]चाप्यर्घ्यं प्रणवेनैव विन्यसेत्॥
[3]नाभिदघ्ने जले पश्चात् प्राक्शिरश्चोर्ध्ववक्त्रकम्[4] । शाययेत्प्रतिमे तत्र दिक्पालास्त्रं [5]यथादिशम्॥
[6]अर्चयेद्देवमुक्तः स्यादधिवासो जलाश्रितः । कालोऽस्य च पुरा [7]प्रोक्तो मण्टपं चापि पूर्ववत् ॥

[स्नानमण्टपे बेरशुद्धिः[8]]

कल्पयेदथ तत्रैव कोणेष्वपि चतुर्ष्वपि । योन्याकाराणि कुण्डानि [9]तत्र चैव सुसंस्कृते ॥२७॥
स्नानमण्टपमध्यं[10] तु [11]नीत्वा देवौ च यत्नतः । स्नानवेद्यां तु विन्यस्य शुद्धिं कृत्वा यथाविधि॥
[12]अभिषिच्य [13]ततो देवौ[14] गन्धतोयेन मन्त्रवित् । सर्वात्मना शिवं देवीं गायत्र्या चाभिषेचयेत्॥

[प्रतिसरबन्धः]

[15]हैमैः प्रतिसरं[16] बध्वा हृदयेन [17]तयोस्ततः । कूर्चद्वयेन वस्त्राभ्यां देवं देवीं च वेष्टयेत्॥३०॥

[शयनाधिवासः, कुम्भस्थापनं च[18]]

ततः कृत्वा च पुण्याहं कल्पिते शयने शुभे । शाययेत्प्रतिमे सम्यक् सर्वात्मानं समुच्चरन् ॥

---

दर्भैः पुष्पैः परिस्तीर्य कलशान्नवसंख्यकान् । संस्थाप्य हृदयेनैव पुण्याहं वाचयेत्ततः
प्राक्छिरश्चोच्छ्रयं कुर्यान्मूलेनैव जले क्षिपेत् । त्रिरात्रमेकरात्रं वा याममेकमथापि वा ॥

[1] G : च विचेष्टयेत्
[2] C : चाभ्यर्घ्यं
[3] A : नाभिदघ्नजले
[4] C : वक्त्रके pour वक्त्रकम् ; G : पत्रकम्
[5] A : यदादिशम्
[6] A : अर्चयेद्देवमुक्तं स्यादधिवासं जलाश्रितम्
[7] A : प्रोक्तं ; C : प्रोक्ता
[8] Cf. *Kāraṇāgama*, II, 58, 7-9 :
उमया सह चाधीशप्रतिष्ठां च ततः शृणु । षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ॥
इन्द्राद्यष्टास्वपि दिक्षु युगाश्रादि चतुर्दिशि । आग्नेयादिमहायोनिस्तयोर्मध्ये सुवृत्तकम् ॥
तोरणान्मङ्गलाञ्शस्त्रान्पूर्ववत्परिकल्पयेत् । अङ्कुरार्पणपूर्वं तु वास्तुपूजां समाचरेत् ॥
cf. *Kāmikāgama*, I, 68, 66-68 :
प्रोक्षयेत्पुरुषेणैव हृदा गन्धादिभिर्यजेत् । जलादुत्तीर्य बेरं तु स्नानश्वभ्रे तु विन्यसेत् ॥
व्यपोह्य वस्त्रकूर्चाद्यं स्नपनं पूर्ववद्भवेत् । वस्त्रेणैव तु संवेष्ट्य पूजयेद्धृदयेन तु ॥
कौतुकं बन्धयेत्पश्चाद्धृदा दक्षिणहस्तके । शक्तीनां चैव सर्वासां वामे वा दक्षिणेऽपि वा ॥
[9] A : तत्र चैवमसंस्कृतम् ; C : तत्र वै वसुसंस्कृतिम् ; E : तत्रैव च सुसंकृतिम्
[10] A, C, E : मध्ये pour मध्यं
[11] A : भवेदेवं समापयेत् ; E : भवेदेवं समर्चनम्
[12] G : अभिक्षिपत् pour अभिषिच्य
[13] C : तथा pour ततो
[14] A : देवं pour देवौ
[15] A omet les *śloka* 30 à 32a
[16] E : हेमप्रतिसरं pour हैमैः प्रतिसरं
[17] C : ततस्ततः
[18] Cf. *Santānasaṃhitā*, 21, 51-61a :
शयनवेदिमनुप्राप्य वेदिं च प्रोक्षयेद्धृदा । षट्त्रिंशद्द्रोणशालींश्च उत्तमं तद्विनिर्दिशेत् ॥
त्रिंशद्द्रोणांश्च शालींश्च मध्यमं तद्विनिर्दिशेत् । अधमं विंशतिद्रोणशालींश्च विकिरेत्ततः ॥

ततो भवानीं [1]रक्तेन वाससा वेष्टयेत्सुधीः । पूर्ववत्कलशानां तु स्थापनं सम्यगाचरेत् ॥३२॥
[2]शक्तिकुम्भं शिरोदेशे [3]देव्याश्चापि प्रकल्पयेत् । [4]वर्धनी [5]शक्तिकुम्भः स्याद्वस्त्रहेमादिसंयुता[6]॥
देवं देवीं च गायत्र्या गन्धाद्यैः पूजयेत्ततः । देवं देवीं यथारूपं ध्यात्वा देशिकसत्तमः ॥
आवाहनादिकं [7]कर्म [8]कुम्भयोः शिवयोर्यजेत् । पूर्ववच्चाथ विद्येशान्कलशेषु समर्चयेत् ॥३५॥

[होमः[9]]

ततो होमं प्रकुर्वीत कुण्डेषु विधिना ततः । पुरुषः पूर्वकुण्डे स्याद्दक्षिणे [10]घोर उच्यते ॥३६॥

---

शाल्यर्धं तण्डुलं न्यस्य तण्डुलार्धतिलं तथा । पद्ममष्टदलं लिख्य दर्भैश्चैव परिस्तरेत् ॥
पञ्चभिः कम्बलैश्चैव उपर्युपरि विन्यसेत् । अष्टोत्तरशतैर्दर्भैः कूर्चं तदुपरि न्यसेत् ॥
प्रतिमां विन्यसेद्देवि अयुताक्षरमूर्तिना । प्राक्शिरः पश्चिमं पादं विन्यसेत्तु विशेषतः ॥
वस्त्रेण वेष्टयित्वा तु गन्धाद्यैः पूजयेत्ततः । कुम्भानष्टौ समादाय सूत्रेण परिवेष्टितान् ॥
अक्षतान्कवचेनैव द्रोणतोयप्रपूरितान् । सकूर्चान्सापिधानांश्च वस्त्रयुग्मेन वेष्टितान् ॥
पूर्वे तु पञ्चताम्बूलमाग्नेय्यां पञ्चगव्यकम् । दक्षिणे चाष्टमृत्तोयं पुष्पोदकं तु नैरृते ॥
वारुण्यां क्षीरमेवाहुर्वायव्यां सर्वगन्धकम् । सोमे चैव घृतं न्यस्य कषायमीशगोचरे ॥
एवमुक्तप्रकारेण स्थापयेद्वेदिकोपरि । अनन्तादिशिखण्ड्यन्तान्विन्यसेद्देशिकोत्तमः ॥
मुद्राणां लक्षणे चोक्तामष्टमुद्रां च दर्शयेत् ।

1 C : रत्नेन pour रक्तेन

2 A, C, D, E : शान्ति pour शक्ति

3 D : देवस्यापि

4 A, C, D : वर्धनीं

5 A : शक्तिकुम्भं स्यात् वस्त्र॰ pour शक्तिकुम्भः स्याद्वस्त्र ; D : शक्तिकुम्भस्या वस्त्र॰

6 A : संयुताम् pour संयुता ; E : संयुतम्

7 A : कृत्वा pour कर्म

8 C : कर्णयोः कुम्भयोर्यजेत्; D : कर्मणोः कुम्भयोर्यजेत्

9 Cf. *Kāmikāgama*, I, 68, 72-83 :
होमकर्म तदन्ते स्यात्प्रागुक्तविधिना सह । पलाशोदुम्बराश्वत्थवटाः पूर्वादितः क्रमात् ॥
शम्यपामार्गश्रीवृक्षपिप्पलैश्चाग्निकोणतः । प्रधानस्य पलाशः स्यात्समिधः संप्रकीर्तिताः ॥
समिदाज्यचरुलाजसर्षपैश्चैव वैणवाः । यवः प्रियङ्गुः शालिश्च मुद्गमाषकुलुत्थकाः ॥
मधुक्षीरगुलं सक्तु फलाद्यैरुदकाः स्मृताः । त्रिपञ्चसप्तनवभी रुद्रैर्विश्वैश्च पक्षकैः ॥
द्रव्यैर्वा सप्तदशभिः समस्तैर्होममाचरेत् । ब्रह्मादिदिक्षु ख्यातानि विदिक्षु हृदयादयः ॥
प्रधाने मूलमन्त्रः स्यादंशब्रह्मसमायुतः । पञ्चाग्न्यायतनं चेत्तु हृदयादीनि वर्जयेत् ॥
एकाग्न्यायतनं चेत्तु द्रव्यैरेकत्र होमयेत् । सहस्रमर्धं तस्यार्धं शतं वाष्टशतं तु वा ॥
एवमर्धं च दशभिर्मूलमन्त्रेण होमयेत् । मूलाद्दशांशतोऽङ्गैस्तु सर्वैर्ब्रह्मादि होमयेत् ॥
तत्त्वतत्त्वेश्वराद्यैश्च होमं पूर्ववदाचरेत् । द्रव्यान्ते व्याहृतिं कुर्याद्धोमान्ते पूर्वयायुतम् ॥
स्पर्शनं पूर्ववत्कुर्याच्छान्त्यम्भःप्रोक्षणं ततः । अत्रानुक्तं तु यत्सर्वं लिङ्गस्थापनवन्नयेत् ॥
आगमाध्ययनं दिक्षु कोणे मन्त्रजपं नयेत् । आगमाध्ययनं कुर्यादीशाने दीक्षितस्त्विह ॥
नृत्तगेयसमायुक्तं स्तोत्रमङ्गलवाचकैः । रात्रिशेषं व्यपोह्याथ ”

10 C, G : घोरमुच्यते

पश्चिमे [1]चापि [2]सद्यस्तु वामदेवस्तथोत्तरे । [3]ईशानस्तु प्रधाने स्यान्मूर्तयः पञ्च एव हि ॥३७॥
आग्नेयादिषु कोणेषु चतस्रो मूर्तयः स्मृताः । निवृत्तिश्च प्रतिष्ठा च विद्या [4]शान्तिश्च ताः स्मृताः॥
दिग्विदिक्षु स्थितास्तास्ता देवदेव्योश्च मूर्तयः । तेष्वग्निं [5]विधिनाधाय शिवहोमस्तु पूर्ववत् ॥
प्रधानकुण्डे कर्तव्यो देवहोमादनन्तरम् । देव्या होमो [6]विधातव्यो तद्विधानमिहोच्यते[7] ॥
देवीं तत्र समावाह्य पूजयित्वा यथाविधि । पूर्वोक्तैरखिलैर्द्रव्यैर्देव्यङ्गै[8]र्मूलपूर्वकैः ॥ ४१ ॥
तेनैव क्रमयोगेन जुहुयान्मन्त्रवित्तमः । देवहोमे तु देवस्य [9]कुर्यात्तन्मूर्तिपैः सह ॥ ४२ ॥
देव्याश्च [10]तद्वद्धोमं तु मूर्तिपैः सह मन्त्रवित् । द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं स्पृशेद्गुरुः॥
तस्यानन्तरमेवात्र[11] [12]स्पृशेयुः [13]क्रमशोऽधुना । देवहोमस्थिता[14] [15]देवं [16]देवीहोमस्थिताश्च ताम्॥
[17]मूर्धादिपादपर्यन्तं [18]तन्मूलैः स्पर्श इष्यते । हृदयादिभिरङ्गैस्तु[19] तत्तदङ्गानि संस्पृशेत् ॥४५॥
सर्वद्रव्यावसाने तु मूर्तीनां तु [20]दशाहुतीः । प्रतिकुण्डं ततो [21]हुत्वा संपूज्य परिषिच्य च ॥
कुम्भस्थानां तु देवानां दत्त्वा चैव हविः क्रमात् । रात्रिशेषं ततो नीत्वा जागरेण समन्वितः[22]॥

[अधिवासानन्तरदिवसकृत्यम्[23]]

प्रभाते देशिको धीमान्मूर्तिपैः सह साधकैः । कृतनित्यक्रियो भूत्वा [24]होतृभिश्च समन्वितः ॥

---

[1] G : चैव pour चापि [2] E : सद्यं तु वामदेवं तथोत्तरे
[3] A, D : ईश्वरस्य प्रधानस्य मूर्तयः ; C, G : ईश्वरस्य प्रधाने स्यान्मूर्तयः
[4] A : शान्तिस्तया स्मृताः [5] G : विधिना चाथ शिवोऽहमस्तु
[6] A, C, D : विधानेन [7] G : अथोच्यते pour इहोच्यते
[8] A : देवाङ्गैः pour देव्यङ्गैः ; C, D : देव्याङ्गैः ; G : द्रव्याङ्गैः
[9] D : कुर्यात्तं मूर्तिपैः [10] E : होमं तद्वत्तु ; G : तत्तद्धोमं तु
[11] A, C, D : अस्यै pour अत्र [12] C : स्पर्शेयुः ; G : स्पृशेत्
[13] D, E, G : क्रमतो जनाः [14] A : स्थितं pour स्थिताः ; E : स्थितान् [15] E : देवान्
[16] C : देवीं होमं pour देवीहोम [17] A : मूलादि pour मूर्धादि ; G : मूर्ध्नादि
[18] A, G : तन्मूले स्पर्शमिष्यते [19] E : च pour तु
[20] A : दशाहुतिः ; C, E, G : दशाहुतिम् [21] A : हित्वा [22] A : समन्वितम्
[23] Cf. *Santānasaṃhitā* 21, 78-88a :
ततः प्रभाते विमले मुहूर्ते तु निरीक्षयेत् । आचार्यपूजनं देवि कर्तव्यं लक्षणान्वितम् ॥
अधमं पञ्चनिष्कं तु मध्यमं द्विगुणं भवेत् । उत्तमं त्रिगुणं ज्ञेयं दद्याद्धृदयमन्त्रितम् ॥
ऋत्विजः पूजयेत्पश्चादाचार्यार्धं विशेषतः । पूर्णाहुतिं ततो दद्याद्यदस्येति विशेषतः ॥
स्नानवेद्यां च मध्ये तु स्नानासनं तु विन्यसेत् । तदूर्ध्वे प्रतिमां न्यस्य पञ्चरत्नानि कल्पयेत् ॥
घृतशिरोर्पणं कुर्यात्प्रासादेन तु मन्त्रतः । शुभाशुभनिमित्तानि यत्नेन तु परीक्षयेत् ॥
ब्रह्माण्यङ्गानि देवेशि स्वस्थाने चैव विन्यसेत् । अयुताक्षरमूर्तेश्च शरीरं सर्वत्र कल्पयेत् ॥
प्रतिष्ठाकुम्भमादाय अयुताक्षरदशाक्षरैः । स्नानवेदिमनुप्राप्य प्रासादेनाभिषेचयेत् ॥
गन्धपुष्पैश्च धूपैश्च दीपैश्चैव सुपूजयेत् । नैवेद्यं पायसं दद्यात्ताम्बूलं दापयेत्ततः ॥

प्रविश्य मण्टपं तत्र सकलीकृतविग्रहः । नवाम्बरधरो भूत्वा नववस्त्रोत्तरीयकः ॥ ४९ ॥
गन्धचन्दनलिप्ताङ्गः पश्चाङ्गभूषणैर्युतः । देवान्पूर्ववदभ्यर्च्य सुमुहूर्ते सुलग्नके ॥ ५० ॥

[पूर्णाहुतिः]

[1]देवदेव्योः प्रधाने तु तत्तन्मूलं समुच्चरन् । पूर्णाहुतिं क्रमाद्धुत्वा शेषेष्वष्टसु[2] च क्रमात् ॥५१॥
[3]देवकुण्डेषु [4]देवस्य देव्याश्चापि तथा सुधीः । हुत्वा पूर्णाहुतिं पश्चाद्देवमुत्थापयेच्छनैः ॥ ५२ ॥

[कुम्भाभिषेकः, मन्त्रन्यासश्च]

सुमुहूर्ते सुलग्ने तु सर्वदोषविवर्जिते । स्नानवेद्यां तु [5]संस्थाप्य प्राङ्मुखौ प्रणवेन तौ[6] ॥ ५३ ॥
[7]वस्त्रकूर्चादिकं त्यक्त्वा[8] [9]दत्त्वा चार्घ्यं द्वयोरपि । तत्तद्धृदयमन्त्रेण ततः स्नाप्य च मन्त्रवित् ॥
गन्धोदकेन मन्त्रेण देवं संवत्सरात्मना । [10]देवीं गायत्रिया चैव तयोस्तु कलशौ ततः ॥ ५५ ॥
उद्धृत्य कृत्वा [11]वैद्येशैः प्रासादं तु प्रदक्षिणम् । कलशौ देवदेव्योश्च पुरतस्तान्यथा पुरा ॥ ५६ ॥
संस्थाप्य देवं देवीं च गन्धाद्यैश्च समर्चयेत् । स्वस्वमूलेन मन्त्रेण ततः कूर्चाम्भसा तयोः॥५७॥
मन्त्रन्यासश्च कर्तव्यो देवदेव्योस्तु पूर्ववत् । ताभ्यां च कलशाभ्यां तौ द्वयोर्गायत्रिमुच्चरन् ॥
अभिषिच्य ततो देवं मन्त्रान्पूर्वोक्तवन्न्यसेत् । देव्याश्च [12]मूलमन्त्रं च विन्यस्याथ च [13]मूर्धनि॥
तारं विन्यस्य [14]वक्त्रे तु गायत्रीमातृकास्ततः[15] । यथा देवे तथा [16]न्यस्य [17]सर्ववर्मतया सुधीः॥
मालाभरणवस्त्राद्यैर्गायत्र्या तौ[18] समर्चयेत् । प्रभूतं च हविर्दत्त्वा ततश्चोत्सवमाचरेत्[19] ॥६१॥
एवं साम्बिकमुद्दिष्टम् ;

---

स्तोत्रमङ्गलशब्दैश्च गणिकानृत्तसंयुतम् । ग्रामप्रदक्षिणं कुर्यात्तस्मिन्काले विशेषतः ॥
ब्राह्मणाञ्छिवभक्तांश्च भोजयेत्तु यथाक्रमम् । परिवेषणे स्थितं देवं रक्षादेवीं च पूजयेत् ॥
प्रतिष्ठोपकरणं सर्वमाचार्याय प्रदापयेत् ।

1 A : देवं देव्या pour देवदेव्योः  2 E : अष्टासु pour अष्टसु

3 E : देवकुण्डे तु  4 A : देवं च  5 D, G : संस्नाप्य

6 G : तु pour तौ  7 E : वस्त्रकूर्चादिकान्  8 A : न्यस्त्वा pour त्यक्त्वा

9 G : दत्त्वाचार्यद्वयोरपि

10 A : देवीं गायत्र्या चैव ; G : देवीगायत्र्यया चैव ; la forme grammaticale correcte est गायत्र्या ; mais le mètre ne serait pas respecté.

11 A, C : विद्येशैः ; E : वेदेशैः  12 A : मूलमंगं च

13 A : मूर्ध्नि च  14 C : वज्रं pour वक्त्रे

15 C : मातृकांस्ततः pour मातृकास्ततः ; E : मातृकान्ततः

16 A : न्यस्त्वा  17 A, D : सर्ववर्मत्रया ; C, E : सर्वबिन्दुतया ; G : सर्वन्मुद्रया

18 C : गायत्र्यादौ pour गायत्र्या तौ ; E : गायत्र्याद्यौ ; G : गायत्रया तु

19 A, C, D : आरभेत् pour आचरेत्

[साम्बिकागुहस्थापनम्[1]]

[2]साम्बिकागुहमप्यथ । स्थापनं शृणु देवेश तत्रापि [3]च विशेषतः॥६२॥
[4]क्रियाकार्यमशेषं यत्तदिदानीं [5]प्रवक्ष्यते । रत्नन्यासं [6]तु वा कुर्यान्नेत्रोन्मीलनकर्म च[7] ॥६३॥
जलाधिवासनं [8]चापि स्कन्दगायत्रिमुच्चरन् । [9]अधिवासादिकर्माणि स्कन्दमूलेन कारयेत् ॥
होमं च स्कन्दमूलाङ्गैः [10]प्रधाने [11]समिदादिभिः । [12]उक्तैर्द्रव्यैस्ततः [13]कुण्डे जुहुयात्पूर्वसंख्यया॥

---

[1] Cf. *Kāmikāgama*, II, 47, 19-32:

प्रतिष्ठैषां प्रकर्तव्या सुकालेऽङ्कुरपूर्विका । रत्नन्यासं ततः कुर्याद्देवदेव्योश्च वै गुहे ॥
हेमाब्जं हेममायूरं देव्यां स्कन्देऽथवा न्यसेत् । तत्तत्प्रतिष्ठाध्यायोक्तमन्त्रैरपि समन्वितम् ॥
तत्तत्पीठाम्बुजेष्वेव सुस्निग्धं तं सुखं नयेत् । दृशामुन्मोक्षणं कृत्वा बेरशुद्धिं प्रदक्षिणम् ॥
जलाधिवासनं प्राग्वद्भवेद् मण्टपमाचरेत् । दिगश्राण्यथ वृत्तानि वेदाश्राणि च वा नयेत् ॥
कुण्डानि नवपञ्चैकसंख्यया कुट्टिमाद्बहिः । शिल्पिनं च विसृज्याथ विप्रान्संभोजयेत्ततः ॥
पुण्याहप्रोक्षणं वास्तुहोमं स्थण्डिलकल्पनम् । शयनं कल्पयेन्मध्ये स्नपनं कारयेत्ततः ॥
कौतुकत्रितयं बद्ध्वा त्रिषु ताञ्शाययेत्ततः । वस्त्रैश्च पृथगावेष्ट्य कुम्भान्संस्थापयेत्ततः ॥
शिवकुम्भं शिरोदेशे शिवस्य च तदुत्तरे । विन्यस्य वर्धनीं सोमास्कन्दश्चेद्दक्षिणे घटम् ॥
स्कन्देनाधिष्ठितं न्यस्य गन्धाद्यैरर्चयेत्ततः । लक्षणोदितरूपाभिध्यानाधिकृतधीर्गुरुः ॥
परितोऽष्टौ घटान्न्यस्य विद्येशैरप्यधिष्ठितान् । तत्तदध्यायमार्गेण तत्त्वमूर्त्यादिकं नयेत् ॥
कृत्वा कुण्डाग्निसंस्कारं समिदाज्यान्नलाजकैः । तिलसस्येन्द्रमुद्गैश्च होमं च विधिना नयेत् ॥
पलाशोदुम्बराश्वत्थवटा दिक्षु विदिक्षु च । शमीखदिरमायूरश्रीवृक्षोत्था इहेरिताः ॥
प्रधानेऽप्यादिमः प्रोक्तः पूर्णान्तं कर्म कारयेत् । षण्मुखं च तथा देवीं प्रधाने तर्पयेद्गुरुः ॥
एते विभिन्नपीठाश्चेत्पृथङ्मण्डपमाचरेत् । द्वितीये देवकुम्भाग्नींस्तर्पयेत्पूर्ववर्त्मना ॥

[2] G : साम्बिकां गुहमप्यत:
[3] A : सविशेषत:
[4] C : क्रियाकार्यविशेषोऽयं ; D, E : क्रिया कार्या विशेषोऽयं ; G : क्रियाकार्यविशेषो य:
[5] A : प्रविश्यते ; G : प्रदृश्यते
[6] G : तथा pour तु वा
[7] A : नेत्रकर्मणि मन्त्रवित् ; C : नेत्रकर्माणि मन्त्रवित् ; G : नेत्रोन्मीलनमन्त्रवित्
[8] A : तत्र pour चापि
[9] C : अधिवासाधिकर्माणि ; E : अधिवासनानि कर्माणि ; G : अधिवासनकार्यं च
[10] C : प्रधानेन pour प्रधाने
[11] C, E : समिधादिभि:
[12] A : यत्नै: pour उक्तै:
[13] A : कुण्डै:

[1]मन्त्रन्यासश्च[2] कर्तव्यो गुहे पित्रोरनन्तरम् । स्कन्दमूलेन [3]मन्त्रेण ततोऽङ्गानि च विन्यसेत् ॥
पूजां च स्कन्दगायत्र्या[4] कृत्वा दत्त्वा हविः क्रमात् । ततः सहोत्सवं कुर्यात्सर्वलोकहितावहम्॥
[5]एवं यः कारयेत्कर्ता सर्वान्कामानवाप्य सः[6] । मोदते रुद्रसामीप्यं लब्ध्वान्ते रुद्रसद्मनि॥६८॥

[7]इत्यजिताख्ये [8]महातन्त्रे [क्रियापादे] [9]साम्बिकसाम्बिकागुह-
स्थापनविधिरेकचत्वारिंशः पटलः ॥

---

[1] Cf. *Kāraṇāgama*, I, 79, 88-101 :
सर्वालंकारसंयुक्तं नृत्तगेयसमन्वितम् । वेद्यां च प्रतिमां स्नानश्वभ्रे तु फलकोपरि ॥
विन्यस्य पुरुषेणैव गन्धपुष्पादिभिर्यजेत् । घृतं शिरोऽर्पणं कुर्यात्पूर्वोक्तविधिना सह ॥
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत् । गौरीकलां न्यसेद्धीमान्गौरीदेहे विशेषतः ॥
वर्णानि विन्यसेत्स्कन्ददेहे वै देशिकोत्तमः । उक्तालंकारसंयुक्तमुद्धृत्यात्रैव कुम्भकान् ॥
शिरसा वाहयित्वा तु कुर्याद्धर्म्यप्रदक्षिणम् । देवस्याग्रे क्रमेणैव स्थण्डिलोपरि विन्यसेत् ॥
मुहूर्ते समनुप्राप्ते गुरवे संनिवेदयेत् । प्राणप्रकृतियोगं तु ज्ञात्वा स्थापनमारभेत् ॥
यथाकृष्टक्रमं ज्ञात्वा तथा संस्थापयेद्गुरुः । कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् ॥
तत्कुम्भस्थजलैर्देवं स्नापयित्वा विशेषतः । वर्धन्या बीजमादाय उमाया हृदि विन्यसेत् ॥
वर्धन्याश्च जलैश्चैव गौरीं तत्राभिषेचयेत् । स्कन्दकुम्भात्समादाय स्कन्दबीजं हृदि न्यसेत् ॥
तत्कुम्भस्थजलेनैव कुमारमभिषेचयेत् । मूर्तिकुम्भात्समादाय अभितो मूर्तिपे न्यसेत् ॥
तत्तत्कुम्भस्थतोयैश्च स्नापयेत्परमेश्वरम् । गन्धादिभिर्हृदा यष्ट्वा दशमुद्रां प्रदर्शयेत् ॥
स्नपनं कारयेदन्ते पूजयेद्विधिपूर्वकम् । वस्त्राभरणमालाश्च भस्मना दापयेद्धृदा ॥
फलानि विविधानीह पायसान्नं ददेत्पृथक् । ताम्बूलं दापयित्वा तु मुखवाससमन्वितम् ॥
उत्सवं कारयेत्पश्चाद्यथावित्तानुसारतः । यागोपयोगद्रव्याणि देशिकाय प्रदापयेत् ॥

[2] A : तु pour च [3] C : मन्तव्यो pour मन्त्रेण [4] C : गायत्री pour गायत्र्या

[5] Cf. *Dīptāgama*, 36, 71b-72a :
यस्मिन्राष्ट्रे कृतं ह्येवं तद्राजा जयमाप्नुयात् । पुत्रपौत्राश्च वर्धन्ते धनधान्यविवर्धनम् ॥
cf. *Kāraṇāgama*, I, 79, 177b-178 :
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् । राज्यार्थी लभते राज्यं पुत्रार्थी लभते सुतम् ॥
इहैव धनवाञ्श्रीमान् सोऽन्ते मोक्षमवाप्नुयात् ।

[6] A : अवाप्नुयात् pour अवाप्य सः ; D : अवापि सः

[7] E : इत्यजिते pour इत्यजिताख्ये [8] E omet महातन्त्रे

[9] A : साम्बिकास्थापनविधिः षट्चत्वारिंशः पटलः ; C : सुखासनस्थापनसोमास्कन्दविधिपटलः समाप्तः ; D : सुखासनस्थापनविधिपटलः । ग्रन्थं ४८ ; E : सुखासनसोमास्कन्दस्थापनविधिः ; G : उमया सह प्रतिष्ठाविधिपटलः । अगस्तीश्वराय नमः ।

## [द्विचत्वारिंशः पटलः]

## [सब्रह्मकेशवशम्भुस्थापनविधिः[1]]

### [रत्नन्यासः, नेत्रोन्मीलनं च]

[2]सब्रह्मकेशवं शम्भोः स्थापनं शृणु सांप्रतम् । देवस्य पूर्ववत्कुर्याद्रत्नन्यासं[3] विधानतः ॥ १ ॥
ब्रह्मणश्च तथा विष्णोः पञ्च रत्नानि विन्यसेत् । पञ्चभूताक्षरैर्धीमान्नेत्रोन्मीलनकर्मणि ॥

---

[1] Pour सब्रह्मकेशवशम्भुस्थापनविधि voir सकलस्थापनम् dans *Aṃsumad* 24, *Suprabheda* I, 37 et *Sūkṣma* 56, प्रतिमाप्रतिष्ठाविधि dans *Kāmika* I, 68, et *Santānasaṃhitā* 21, लिङ्गोद्भवप्रतिष्ठा dans *Kāmika* II, 50, *Kāraṇa* I, 74 et II, 69 et *Dīpta* 49, et त्रिमूर्तिस्थापनविधि dans *Kāmika* II, 61 et *Kāraṇa* II, 66.

Notre *āgama* a décrit vingt formes *sakala* de Śiva (cf. *paṭala* 36, śl. 175 à 288). Mais il ne leur reconnaît que sept types d'installation (pratiṣṭhā), traités en six *paṭala* (40 à 45). Il faut évidemment regrouper les vingt formes décrites plus haut sous ces sept chefs :

1. Śiva est dit *kevala* s'il est seul, (pat. 40), ce qui correspond aux *mūrti* सुखासीन, भिक्षाटन, कङ्कालधर, दक्षिणामूर्ति et कामनाशन
2. Śiva est dit *sāmbika* ou *somaka* (paṭ. 41) s'il est accompagné de Devī ce qui correspond aux *mūrti* गौरीसहित, नृत्त, चक्रप्रसाद, चन्द्रशेखर, कालनाशन, जलन्धरवध, वृषारूढ, त्रिपुरान्तक, et विषसंहरण et il est साम्बिकागुह (paṭ 41) si l'enfant, Skanda s'ajoute à Siva et à Devī (सोमास्कन्दमूर्ति)
3. Śiva est सब्रह्मकेशव (paṭ 42) s'il est accompagné de Brahman et de Viṣṇu, ce qui se trouve dans les formes लिङ्गोद्भव et त्रिमूर्ति
4. Śiva est सोमाश्रीविष्णुपद्मज (paṭ. 43) s'il est accompagné de Devī, Lakṣmī, Viṣṇu et Brahman ; c'est le cas dans la कल्याणसुन्दरमूर्ति ou वैवाह्यमूर्ति

5. et 6. Les formes isolées हर्यर्ध (où la moitié du corps de Śiva est celui de Viṣṇu) et अर्धनारी (où la moitié du corps de Śiva est celuli de Devī) font l'objet des *paṭala* 44 et 45.

Comme cette distribution des *mūrti* en sept classes ne se trouve pas dans les autres āgama, les citations que nous avons introduites en note ont été prises dans des *paṭala* dont le titre ne correspond pas aux titres des *paṭala* de l'*Ajita*, mais qui traitent de rituels parallèles.

[2] C : सब्रह्मकेशवं शम्भो ; E : सब्रह्मकेशवशम्भोः

[3] A : रत्नैर्न्यास॰ pour रत्नन्यासं ; C : रत्नन्यास॰

[1]कृते तु शिल्पिना [2]पश्चात्स्थित्वा [3]तु स्थण्डिलोपरि। देवस्य पूर्ववत्कृत्वा ब्रह्मविष्ण्वोरनन्तरम्॥
तयोश्च[4] विन्यसेन्नेत्रे सूर्यसोमौ यथा पुरा। [5]तर्पणं मधुदुग्धाभ्यां[6] नेत्रयोः परिकल्पयेत् ॥४॥

[बेरशुद्धिः, जलाधिवासश्च]

पूर्ववद्बेरशुद्धिं च कुर्यात्तत्र हृदा सुधीः। जलाधिवासनं चापि त्रयाणां परिकल्पयेत् ॥ ५ ॥

[मण्टपे शयनाधिवासः[7]]

केवलोक्तप्रकारं स्यान्मण्टपं कुण्डवेदियुक्। शयनत्रितयं कुर्याद्दारुजाद्यैः क्रमेण तु ॥ ६ ॥
जलाधिवासितान्देवानानयेत्स्नानमण्टपम्[8]। स्नानवेद्यां समानीय हित्वा कूर्चाम्बरस्रजः ॥७॥
गन्धाम्बुनाभिषिच्याथ कृत्वा पुण्याहमेव च। तेषां प्रतिसरं बध्वा [9]तत्तन्मन्त्रमनुस्मरन् ॥८॥
कूर्चेन [10]सह संवेष्ट्य वस्त्रैर्देवाननुक्रमात्[11]। अर्घ्यं दत्त्वा ततो मूर्ध्नि तेषां हृदयमुच्चरन् ॥ ९ ॥
[12]आनीय वेद्यामातोद्यैर्वेदघोषैः समायुतः। शाययेन्मध्यमे शम्भुं प्राक्शिरश्चोर्ध्ववक्त्रकम्॥१०॥
[13]ब्रह्माणं दक्षिणे चैव वामे विष्णुं तथैव च। अर्चयित्वा तथा मन्त्रैस्तन्मन्त्रत्रयमुच्चरन् ॥११॥

[कुम्भस्थापनम्[14]]

[15]कुम्भावप्यधिपौ तत्र ब्रह्मनारायणात्मकौ। [16]दक्षिणोत्तरयोर्न्यस्य शिवकुम्भस्य देशिकः ॥१२

[1] A : कृतेन शिल्पिना ; C, D, E : कृते तु शिल्पिनं

[2] E : पूज्य कृत्वा pour पश्चात्स्थित्वा [3] A : तत् pour तु [4] E : तु pour च

[5] A : दर्पणं [6] C : दण्डाभ्यां pour दुग्धाभ्यां

[7] Cf. *Kāmikāgama*, I, 61, 12b-15 :

"मण्टपं पूर्ववन्नयेत्। कुण्डानि कारयेत्तत्र नवपञ्चैकसंख्यया॥
दिगश्राण्यथ वृत्तानि चतुरश्राणि तानि वा। तक्षकोद्वासनं विप्रभुक्तिं पुण्योदसेचनम्॥
स्थण्डिलं शयनं स्नानं कौतुकानां च बन्धनम्। ब्रह्मविष्णुहराणां च दक्षहस्तेषु वै पृथक्॥
शयनारोहणम्"

[8] A : मण्टपे pour मण्टपम् [9] A : तत्तन्नेत्रम् pour तत्तन्मन्त्रम्

[10] A : सहसा वेष्ट्य [11] A : अथ क्रमात् pour अनुक्रमात् [12] A omet le *śloka* 10

[13] Les mss. C, D et E omettent le *śloka* 11

[14] Cf. *Kāmikāgama*, II, 61, 15b-17 :

"कुम्भस्थापनं पूर्ववन्नयेत्। देवस्य ब्रह्मणो विष्णोः शिरोदेशे घटत्रयम्॥
न्यस्त्वा तु शिवकुम्भस्य चोत्तरे वर्धनीं न्यसेत्। तत्तद्रूपं तु तत्रैव ध्यात्वा गन्धादिभिर्यजेत्॥
तत्त्वमूर्त्यादिविन्यासं तेषां कुर्याद्यथोदितम्।

cf. *Kāraṇāgama*, II, 66, 8-9a et 10-12a :

पूर्वोक्तयागशालां च नवभागं प्रकीर्तितम्। मध्ये वेदिं प्रकल्प्याथ दशकुम्भान्न्यसेत्ततः॥
परिवारघटान्न्यस्य पूर्ववन्मण्डपे यजेत्।.... देवकुम्भे समभ्यर्च्य आसनं मूर्तिमर्चयेत्॥
प्रणवं पूर्वमुच्चार्य लकारं तु ततः परम। क्षींकारं तु ततः पश्चात्त्रिमूर्त्यात्मन्नमोऽन्तकम्॥
अर्चयेद्विधिवत्पश्चात् पञ्चावरणमार्गतः। तोरणादीन्प्रपूज्याथ"

[15] A : कुम्भौ प्रक्षिप्याधिपौ तत्र [16] E : दक्षिणेतरयोर्न्यस्त्वा

अभितः कलशानष्टौ [1]वैद्येशान्विन्यसेत्ततः । पूर्वोक्तलक्षणोपेतान्सर्वांस्तान्परिकल्पयेत् ॥ १३ ॥
ब्रह्मविष्णुमहेशांस्तु[2] कुम्भेषु त्रिषु पूर्ववत् । आवाहनादिकं कृत्वा गन्धपुष्पादिभिः क्रमात् ॥

[होमः[3]]

[4]संपूज्य च क्रमात्तांश्च होमयेत्तदनन्तरम् । कृत्वा केवलवद्धोमं देवस्य तदनन्तरम् ॥ १५ ॥
[5]तत्संख्ययापि होमं च कृत्वा पूर्वोक्तवत्क्रमात् । प्रधानकुण्डे[6] मूलेन [7]ब्रह्मविष्ण्वोर्यथाक्रमम्॥
अङ्गैरपि तथा षड्भिः कृत्वा स्पर्शाहुतिं तयोः । [8]समाप्येत्थं च कुम्भेषु देवानां च हविः क्रमात्॥

[प्रातः करणीयकृत्यानि[9]]

दत्त्वा तु रात्रिशेषं तु नीत्वा प्रातः समाहितः । कृतनित्यो गुरुः सार्धं साधकैरथ होतृभिः ॥
[10]नवाम्बरोत्तरीयश्च बद्धपश्चाङ्गभूषणः । [11]कृतविद्यातनुर्मन्त्री देवान्पूर्ववदर्चयेत् ॥ १९ ॥
पूर्णाहुतिं त्रिमूर्तीनां मूलमन्त्रैर्यथाक्रमम् । अन्येष्वपि च कुण्डेषु [12]पूर्णा [13]सर्वात्मना भवेत्॥
ततो देवान्समुत्थाप्य स्नानवेद्यां तु विन्यसेत् । ततः कूर्चादिकं त्यक्त्वा[14] तत्तद्धृदयमुच्चरन् ॥

---

1 A : विद्येशानष्ट न्यसेत्ततः

2 C : महेशास्तु pour महेशांस्तु

3 Cf. *Kāmikāgama*, II, 66, 18-20a :
अग्निकुण्डादिसंस्कारं कृत्वा होमं तु कारयेत् । तिलसर्षपमुद्गांश्च माषशिम्बाकवैणवैः ॥
पलाशोदुम्बराश्वत्थन्यग्रोधाः प्राग्दिगादितः । शम्यपामार्गश्रीवृक्षप्लक्षाश्चाग्नेयकोणतः ॥
प्रधाने तु पलाशः स्यात्स च सर्वत्र वा मतः ।

4 A : संपूज्य चक्रवर्तींश्च ; C : संपूज्य च क्रमात्तां च ; D : संपूज्य चक्रवर्तिं च

5 A : तैः संख्यैः संख्यया चापि होमं कृत्वा पुरस्ततः : C : तैः संख्ययापि होमं कृत्वा पुराकृतः ; D : तैः संख्यैः संख्यया चापि होमं कृत्वा पुरोक्ततः

6 A : कुण्डं pour कुण्डे

7 A : ब्रह्मविष्णुर् pour ब्रह्मविष्ण्वोर् ; C : ब्रह्मविष्णु॰ ; E : ब्रह्मविष्णू

8 A : समाप्य योनिकुण्डेषु ; C : समाप्य योनिं कुम्भे च

9 Cf. *Kāmikāgama*, II, 61, 20b-21 :
ततो द्वितीयदिवसे देवकुम्भाग्नितर्पणम् । पूजितो वस्त्रहेमाद्यैर्मूर्तिपाद्यैः समन्वितः ॥
संप्राप्तदशनिष्कादिदक्षिणस्तुष्टधीर्गुरुः ।

10 A : शुक्र pour नव

11 D : कृतविद्यातनुं मन्त्री

12 D : पूर्णाः pour पूर्णा

13 C : सर्वात्मनो भवेत्

14 A : न्यस्त्वा pour त्यक्त्वा

शुद्धिं कृत्वाथ देवानामुक्तैर्द्रव्यैर्विशेषतः । गन्धोदकेन संस्नाप्य तत्तद्धृदयमुच्चरन् ॥ २२ ॥

[स्थापनम्[1]]

मन्त्रन्यासं ततः [2]कुर्यात्कुम्भानानीय पूर्वतः । प्रथमं तु शिवे कुर्याद्ब्रह्मविष्ण्वोरनन्तरम् ॥
सर्वेषां हृदि [3]मूलं तदङ्गान्यङ्गेषु विन्यसेत् । क्रमेण [4]कुम्भैस्तान्देवान् [5]स्नापयेद्ब्रह्मपञ्चकैः ॥
[6]वैद्येशैश्च ततः [7]कुम्भैर्देवदेवेऽभिषेचयेत् । देवस्य पूर्ववन्मन्त्रान्न्यस्याथ[8] ब्रह्मकृष्णयोः ॥२५॥
[9]मूलमङ्गानि गायत्रीं मातृकाश्चापि पूर्ववत् । विन्यस्य गन्धतोयेन सर्वानप्यभिषेचयेत्॥२६॥
वस्त्राभरणमालादींस्तत्तन्मूलेन[10] दापयेत् । प्रभूतं च हविर्दत्त्वा ताम्बूलं च निवेदयेत् ॥ २७॥
सब्रह्मकेशवस्यैवं[11] देवस्य स्थापनं भवेत् । एकत्र रत्नन्यासं तु शयनं [12]चैकमेव हि ॥ २८ ॥
[13]लिङ्गोद्भवप्रतिष्ठायामपि तद्वद्विधीयते । एवं स्थाप्य सुरेशानं प्रत्यहं समभर्चयेत् ॥ २९ ॥

---

[1] Cf. *Kāmikāgama*, II, 61, 22-26 :
मन्त्रन्यासं ततः कुर्यान्न्यस्त्वा बिम्बपुरो घटान् । कुम्भान्मनुं समादाय देवस्य हृदि विन्यसेत् ॥
वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत् । ब्रह्मविष्णुघटाद्बीजं हृत्वा तद्धृदि विन्यसेत् ॥
आदाय बीजमन्येभ्यः पीठस्य परितो न्यसेत् । तत्तत्कुम्भजलैश्चैव तत्तद्देशेऽभिषेचयेत् ॥
स्नपनं चोत्सवं कुर्याद् भूरि नैवेद्यमेव च । अनुक्तमत्र संग्राह्यं तत्तदध्यायचोदितम् ॥
प्रतिष्ठेयं कृता येन त्रिमूर्तीनां नरेण तु । इह लोके सुखं प्राप्य याति सोऽन्ते परं शिवम् ॥

cf. *Kāraṇāgama*, II, 66, 13-14 :
समुहूर्ते सुलग्ने च स्थापयित्वा विशेषतः । कुम्भाद्बीजं समादाय बिम्बे संयोजयेत्ततः ॥
ब्राह्मणान्भोजयेत्तत्र आचार्यं पूजयेत्ततः । एवं समाराधनतः स राजा विजयी भवेत् ॥

[2] E : कृत्वा pour कुर्यात्

[3] A : मूलान्तादङ्गान्यङ्गेषु ; C : मूलादि अङ्गान्यङ्गेषु ; E : मूलं च अङ्गान्यङ्गेषु

[4] A : कुम्भस्थान्देवान्  [5] C, D : स्थापयेद् pour स्नापयेद्  [6] A : विद्येशैश्च

[7] A : कुम्भैर्द्वौ देवावभिषेचयेत् C, D : कुम्भैर्देवदेवाभिषेचयेत् ;

[8] A : मन्त्रान्न्यस्त्वाथ ; C : मन्त्री न्यस्त्वाथ ; E : मन्त्रं न्यस्त्वाथ

[9] C : मूलमन्त्रं च ; E : मूलमङ्गं च  [10] A : मन्त्रेण pour मूलेन

[11] E omet एवं  [12] A : चैवमेव हि

[13] Cf. *Kāmikāgama*, II, 50, 8-30a :
" प्रतिष्ठाविधिरुच्यते । कालश्च पूर्ववद्ग्राह्यस्तद्वदेवाङ्कुरार्पणम् ॥
पश्चान्मण्टपनिर्माणं कृत्वा तत्रैव कल्पयेत् । कुण्डानि परितोऽश्राणि नवपञ्चैकसंख्यया ॥
दिगश्राण्यथ वृत्तानि रत्नन्यासोऽत्र नास्ति हि । नयनोन्मीलनं पश्चाद्बेरशुद्धिमनन्तरम् ॥
प्रदक्षिणं पुरादीनां जले चैवाधिवासनम् । भूषणं मण्टपस्यैव वास्तुहोममतः परम् ॥
भूपरिग्रहमादौ वा पूर्ववत्कारयेद्बुधः । वेद्यूर्ध्वे स्थण्डिलं कृत्वा शयनं कल्पयेत्ततः ॥
जलादुद्धार्य देवं तु प्रतिमां शोधयेत्ततः । कृत्वा कौतुकबन्धं तु शाययेच्छयनोपरि ॥
नयनोन्मीलनाद्यं तु ब्रह्मविष्ण्वोस्तु कल्पयेत् । ब्रह्माणं दक्षिणे चैव विष्णुं वामे तु शाययेत् ॥
वस्त्रैश्चैव तु संवेष्ट्य गन्धाद्यैरर्चयेत्ततः । प्रधानकुम्भं तेषां तु शिरोभागे तु विन्यसेत् ॥

सर्वान्कामान्स संप्राप्य[1] गच्छेच्छिवपुरं सुधीः ॥ ३० ॥

[2]इत्यजिताख्ये [3]महातन्त्रे [क्रियापादे] [4]सब्रह्मकेशवशम्भु-
स्थापनविधिर्द्विचत्वारिंशः पटलः ॥

---

वर्धनीं विन्यसेद्धीमाञ्शिवकुम्भस्य चोत्तरे । अभितश्च घटानष्टौ न्यस्य विद्येश्वरात्मकान् ॥
लक्षणोदितरूपं तु ध्यायेत्स्वहृदि देशिकः । रूपसंस्थानभावैस्तु पूजयित्वा यथाविधि ॥
देवस्य ब्रह्मणो विष्णोस्तत्त्वमूर्त्यादिकं न्यसेत् । प्राग्वद्देवस्य तत्त्वाद्याः कविष्ण्वोस्तु यथोदितम् ॥
ततो होमं प्रकुर्वीत मूर्तिपैः सह देशिकः । समिदाज्यान्नलाजैश्च तिलसर्षपवैणवैः ॥
पलाशोदुम्बराश्वत्थप्लक्षाः पूर्वादिदिक्षु च । शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ॥
प्रधानस्य पलाशस्तु स च सर्वत्र वा मतः । द्रव्यैरेभिः क्रमाद्धुत्वा ब्रह्माणं विष्णुमेव च ॥
गुरुः प्रधानकुण्डे तु तर्पयेत्समिदादिभिः । रात्रिशेषं व्यपोह्याथ प्रभाते विमले ततः ॥
देशिकः सुविशुद्धात्मा मूर्तिपैः सह तत्त्ववित् । बिम्बानुद्धृत्य संपूज्य कुम्भान्कुण्डेषु पावकान् ॥
देशिकादींश्च संपूज्य दक्षिणां दापयेत्ततः । मुहूर्तनाडिकापूर्वे मन्त्रन्यासं समाचरेत् ॥
वेद्याः कुम्भान्समुद्धृत्य तदग्रे स्थण्डिले न्यसेत् । कुम्भाद्बीजं समादाय देवस्य हृदि विन्यसेत् ॥
वर्धन्या बीजमादाय पाददेशेऽभिषेचयेत् । विद्येशेभ्यस्तथा न्यस्य तज्जलैः स्नापयेत्प्रभुम् ॥
ब्रह्मविष्ण्वोः स्वबीजं तु तद्वन्न्यस्याभिषेचयेत् । स्नपनं पूजनं कुर्यादन्ते चोत्सवसंयुतम् ॥
बिम्बान्संस्थापयेत्पश्चाद्ब्रह्माणं दक्षिणे गुरुः । वामभागे तु देवस्य विष्णुं संस्थापयेद्गुरुः ॥
अनुक्तमत्र सामन्यप्रतिमास्थापनोक्तवत् । लिङ्गोद्भवप्रतिष्ठां तु कुर्यादेवं हि यो नरः ॥
इहैव धनवान्धीमान् सोऽन्ते सायुज्यमाप्नुयात् ।

[1] C, D : सुसंप्राप्य pour स संप्राप्य

[2] E : इत्यजिते pour इत्यजिताख्ये [3] E omet महातन्त्रे

[4] A : सब्रह्मकेशवस्थापनविधिः षट्त्रिंशः पटलः ; C : सब्रह्मकेशवशम्भुस्थापनविधिपटलः ; D : सब्रह्मकेशवशम्भुस्थापनविधिपटलः । ग्रन्थं २८ ; E : सब्रह्मकेशवदेवप्रतिष्ठाविधिपटलः ॥

## [त्रिचत्वारिंशः पटलः]

### [1][सोमाश्रीविष्णुपद्मजस्थापनविधिः[2]]

[3]अथ वक्ष्ये विशेषेण [4]सोमाश्रीविष्णुपद्मजम् । [5]स्थापनं तु महेशस्य सर्वकामार्थसाधनम् ॥ १ ॥

[रत्नन्यासः[6]]

[7]रत्नन्यासः प्रकर्तव्यः सर्वेषां कारयेत्पृथक् । शिवयोः पूर्ववत्कुर्यात्तयोर्विष्णुविरिञ्चयोः ॥ २ ॥
पञ्चरत्नानि मध्यादि विन्यसेदुत्तरान्तकम् । [8]माणिक्यं मुक्ता वैडूर्यमिन्द्रनीलं प्रवालकम्॥३॥
पञ्चरत्नमिति प्रोक्तं मध्यस्थं व्योमबीजकम् । पृथिव्याद्यैस्तु [9]बीजानि प्रागादिषु च विन्यसेत्॥
तथैव स्याच्छ्रियश्चापि ;

[नेत्रोन्मीलनम्, बेरशुद्धिश्च[10]]

नेत्रोन्मीलनमप्यथ । हैमया शिल्पिना सूच्या [11]वर्तयित्वाक्षिमण्डलम्॥ ५ ॥

---

[1] Ce paṭala se trouve dans les mss. A, C et D seulement.

[2] Voir *Kāmika* I, 68 (प्रतिमाप्रतिष्ठाविधि), II, 58 (कल्याणमूर्तिप्रतिष्ठा), *Kāraṇa* I, 78, II, 56 et *Dīpta* 35 (वैवाह्यस्थापन), *Vīra* 62 (सृष्टिमूर्तिप्रतिष्ठा) et *Santānasaṃhitā* 21 (प्रतिमास्थापन).

[3] Cf. *Kāraṇāgama*, I, 78, 1-2a :
अथ संस्थापनं वक्ष्ये वरं वैवाह्यमूर्तिनः । ईशानं माधवं चाजं गौरीं च जातवेदसम् ॥
कृत्वा तु विधिना सम्यक् तत्तत्स्थापनमारभेत् ।

[4] A : सोम pour सोमा     [5] A : स्थापनस्य pour स्थापनं तु

[6] Cf. *Kāraṇāgama*, I, 78, 4-9 :
रत्नन्यासं ततः कुर्यान्मण्टपे समलंकृते । स्थण्डिलं कारयेद्धीमान्प्रत्येकं शालिभिः क्रमात् ॥
तन्मध्ये विन्यसेद्देवान्पूर्वाभिमुखसंस्थितान् । पूजयित्वा यथान्यायं गन्धादिभिर्यजेद्बुधा ॥
पद्मे वा भद्रपीठे वा रत्नन्यासं तु कारयेत् । इन्द्रनीलं न्यसेदैन्द्रे वैडूर्यं वह्निगोचरे ॥
याम्ये मरतकं प्रोक्तं स्फटिकं नैर्ऋते न्यसेत् । वारुणे मौक्तिकं प्रोक्तं प्रवालमनिले न्यसेत् ॥
पुष्यरागं तु सौम्यायामैशान्यां चन्द्रकान्तकम् । माणिक्कं मध्यमे चैव न्यसेद्दिक्पालमन्त्रकैः ॥
ब्रह्मजज्ञानमन्त्रेण ब्रह्मस्थाने तु विन्यसेत् । एवमेव न्यसेद्विष्णोरन्येषां कनकं न्यसेत् ॥

[7] A : रत्नन्यासं प्रकर्तव्यं     [8] C, D : माणिक्य pour माणिक्यं     [9] C : पूजानि pour बीजानि

[10] Cf. *Kāraṇāgama*, I, 78, 10-16 :
अक्षिद्वययुतर्क्षे तु कारयेन्नेत्रमोक्षणम् । मण्टपे स्थण्डिलं कुर्यात्प्रत्येकं खारिशालिभिः ॥
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि । कार्शैः पुष्पैस्तथा लाजैर्विकिरेत्समलंकृतम् ॥
तन्मध्ये स्थापयेद्बिम्बं पूर्वस्याभिमुखस्थितम् । देवस्य दक्षिणे भागे ब्रह्माणं हरिमुत्तरे ॥
गौर्याश्च दक्षिणे भागे लक्ष्मीं चैव तु विन्यसेत् । गन्धादिभिः समभ्यर्च्य तत्तद्धृदयमन्त्रतः ॥
हेमसूचिप्रहाराभ्यां पक्ष्मरेखां समालिखेत् । असितं मण्डलं लिख्य ज्योतिर्मण्डलमालिखेत् ॥
एवं क्रमेण सर्वेषां कारयेच्छिल्पवित्तमः । शिल्पिनं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥
दक्षिणां दापयित्वा तु कुर्याच्छिल्पिविसर्जनम् । वह्नेस्तु रत्नविन्यासं नेत्रमोक्षं न कारयेत् ॥

[11] A : वरयित्वा pour वर्तयित्वा

[1]शिवादिसर्वदेवानां स्थितानां स्थण्डिलोपरि । उद्वास्य शिल्पिनं पश्चात्स्थण्डिलेऽन्ये[2] निवेश्य तान् ॥
शिवयोः पूर्ववत्कृत्वा ततो विष्णुविरिञ्चयोः । [3]श्रियश्चापि न्यसेन्मन्त्री [4]दक्षिणेतरनेत्रयोः ॥
सूर्यसोमावजस्यात्र [5]न्यासः प्रतिमुखं स्मृतः । सर्वेषां [6]स्वस्वगायत्र्या मधुना पयसापि च ॥८॥
सुवर्णदूर्वया [7]कुर्यात्तर्पणं दृष्टिमण्डले । पृथग्यवनिकापाये सर्वेषां ब्राह्मणांश्च गाम् ॥ ९ ॥
स्वस्वगायत्रिमन्त्रेण दर्शयेद्देशिकोत्तमः । [8]पञ्चमृत्पञ्चगव्येन सर्वेषां शुद्धिरुच्यते ॥ १० ॥
[9]तत्तद्गायत्रिमन्त्रेण सेचयेद्गन्धवारिणा । सहैव पूर्ववत्कुर्याद्ग्रामादीनां प्रदक्षिणम्[10] ॥ ११ ॥

[जलाधिवासः[11]]

जलाधिवासनं कुर्यान्नद्यादिषु[12] विशेषतः । तीरे समतले [13]देवान्प्राङ्मुखान्स्थाप्य देशिकः ॥१२

[1] Cf. *Kāraṇāgama*, I, 78, 17-26a :
स्थण्डिलाग्रे विशेषेण पूर्ववत्स्थण्डिलं कुरु । स्थण्डिले तु नयेद्देवान्प्रोक्षयेत्पुरुषेण तु ॥
अभितः कलशानष्टौ ससूत्रानुदकपूरितान् । सकूर्चान्सापिधानांश्च सवस्त्रान्स्थापयेत्क्रमात् ॥
लोकपालान्समभ्यर्च्य एवं प्रत्येकमाचरेत् । नवाम्बरधरोष्णीषो हेमाङ्गुलीयशोभितः ॥
दिव्यगन्धानुलिप्ताङ्गः पुष्पमालाधरो गुरुः । नेत्रमन्त्रेण नेत्रेषु प्रोतसौवर्णकैर्नखैः ॥
तर्पयेन्मधुसर्पिर्भ्यां सौवर्णदूर्वया ततः । मधुवाता ऋतायेति मधुना तर्पयेद्गुरुः ॥
हैमे वा राजते ताम्रे अथवा कांस्यपात्रके । मधुना च घृतेनैव एकैकं प्रस्थपूरितम् ॥
यन्मधुनो मधव्येति मधुपात्रं प्रदर्शयेत् । घृतं प्रदर्शयेन्मन्त्री नेष्टाविद्धमिति स्मरन् ॥
गौर्धेनुहव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् । ब्राह्मणान्दर्शयेत्पश्चाद्ब्रह्मजज्ञानमन्त्रतः ॥
दशबीजेन मन्त्रेण धान्यराशिं प्रदर्शयेत् । प्रच्छन्नपटमावर्ज्य मर्त्यसङ्घान्प्रदर्शयेत् ॥
एवमेवं तु सर्वेषां कारयेत्तु पृथक् पृथक् ।

[2] La forme grammaticale correcte est अन्यस्मिन्

[3] A : श्रियश्च विन्यसेन्मन्त्री [4] A : दक्षिणोत्तर pour दक्षिणेतर [5] A : न्यासं

[6] A, D : स्वस्य pour स्वस्व [7] A : कुर्यादर्पणं ; C : कुर्यार्द्दर्पणं

[8] Cf. *Kāraṇāgama*, I, 78, 26b-28 :
स्नापयेत्पञ्चगव्यैश्च पञ्चब्रह्ममनुं स्मरन् । मृदाम्भसा तु संस्नाप्य शुद्धैरुद्धैरिति ब्रुवन् ॥
स्थापितैः कलशैर्देवान्स्नापयेत्पुरुषेण तु । तत्तदीशानमन्त्रेण गन्धपुष्पादिभिर्यजेत् ॥
वस्त्रैराभरणैर्माल्यैर्भूषयेत्तु पृथक् पृथक् ।

[9] D : तत्तद्गायत्रिमुच्चार्य

[10] Cf. *Kāraṇāgama*, I, 78, 29-31a :
रङ्गे वा शिबिकायां वा सर्वानारोप्य देशिकः । सर्वालंकारसंयुक्तं सर्वातोद्यसमायुतम् ॥
वितानच्छत्रपिञ्छैश्च नृत्तगेयसमाकुलम् । चामरैश्च ध्वजोपेतं ब्रह्मघोषसमायुतम् ॥
नानाभक्तजनैः सार्धं कुर्याद्ग्रामप्रदक्षिणम् ।

[11] Cf. *Dīptāgama*, 35, 24–26 :
नद्यां वापि तटाके वा प्रपां कृत्वातिसुन्दराम् । तत्तीरे प्रतिमां स्थाप्य पवमानेन सेचयेत् ॥
वस्त्रेण वेष्टयेत्सर्वान्कुशैश्च परिवेष्टयेत् । जलमध्ये चतुर्मात्रं कृत्वा तत्रैव शाययेत् ॥
प्राक्शिरश्चोर्ध्ववक्त्रं तु कण्ठदघ्नजले बुधः । पञ्चरात्रं त्रिरात्रं वा एकरात्रमथापि वा ॥

[12] A : नन्द्यादिषु pour नद्यादिषु [13] A : कुर्यात् pour देवान्

पुण्याहं वाचयित्वादौ तत्तोयैरभिषेचयेत्[1] ।

[कुम्भाभिषेकः[2]]

प्रणवेन शिरस्यर्घ्यं दत्त्वा देवस्य मन्त्रवित् ॥ १३ ॥
देवीं च तद्वत्संचिन्त्य [3]तद्वत्कूर्चाम्भसा न्यसेत् । अर्घ्यं देव्याश्च [4]दत्त्वाथ दर्शयेत्तु मनोरमाम् ॥
ततो विष्णुं ततः स्थाप्य [5]चक्रमुद्रां प्रदर्शयेत् । लक्ष्मीं [6]चैव तथा स्थाप्य दर्शयेच्छशकर्णिकाम्॥
ब्रह्माणं च तथा स्थाप्य पद्ममुद्रां प्रदर्शयेत् । पावकं च प्रतिष्ठाप्य शक्तिमुद्रां प्रदर्शयेत् ॥१६॥
एवं देवान्प्रतिष्ठाप्य [7]यथास्वैः कलशैश्च तैः । [8]स्वस्वगायत्रिमुच्चार्य शिवादीनभिषेचयेत् ॥१७॥

[मन्त्रन्यासः]

वैद्येशैः [9]स्नाप्य देवेशं ततो मन्त्रान्क्रमान्न्यसेत् । प्रणवं मूर्ध्नि विन्यस्य गायत्रीं वदने न्यसेत्॥

---

[1] Les rites qui doivent venir après le *jalādhivāsa*, शयनाधिवास, कुम्भस्थापन, कुम्भपूजा, होम, प्रातःकरणीयकृत्य, पूर्णाहुति, प्रतिमाशुद्धि etc., qui correspondent à ceux décrits dans le *paṭala* 40 *śloka* 38 à 105, ne figurent dans aucun des manuscrits utilisés pour cette édition.

[2] Cf. *Kāraṇāgama*, I, 78, 119b-133a :

उद्धृत्य शयनाद्बिम्बान्स्नानश्वभ्रे न्यसेत्पृथक् । घृतं शिरोऽर्पणं कुर्यात् प्रागुक्तविधिना सुधीः ॥
देवस्यैव कलान्यासं मकुटादिक्रमान्न्यसेत् । तत्तत्कुम्भस्थतोयैश्च तत्तद्देवाभिषेचनम् ॥
अथ पुष्पादिभिर्बिम्बं पूजयेद्धृदयेन तु । गौरीकला न्यसेद्गौर्यामन्येषामक्षरं न्यसेत् ॥
सर्वातोद्यसमायुक्तं नृत्तगेयसमाकुलम् । सर्वालंकारसंयुक्तं स्थण्डिलाद्धोतृभिः सह ॥
कुम्भानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् । कृत्वा बिम्बाग्रके चैव स्थण्डिलोपरि विन्यसेत् ॥
मुहूर्ते समनुप्राप्ते गुरवे संनिवेदयेत् । प्राणप्रकृतियोगं तु ज्ञात्वा संस्थापनं कुरु ॥
कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् । तत्कुम्भस्थजलैश्चैव स्नापयेत्परमेश्वरम् ॥
वर्धनीबीजमादाय पीठाब्जे मध्यमे न्यसेत् । तज्जलैः स्नापयेत्पीठं गन्धपुष्पादिभिर्यजेत् ॥
विष्णुमूर्तेर्हृदि न्यस्त्वा विष्णुबीजं विशेषतः । ब्रह्मबीजं तथा न्यस्त्वा तत्तद्रूपं तु भावयेत् ॥
गौरीकुम्भात्समादाय बीजं गौरीहृदि न्यसेत् । श्रीबीजं विन्यसेत्पश्चात्पङ्कजं हृदि देशिकः ॥
मध्यमायां शिखायां तु वह्निबीजं तु विन्यसेत् । देवस्यैव तु पीठाब्जे विद्येशानां स्वबीजकैः ॥
इन्द्रादिषु क्रमान्न्यस्त्वा कुम्भोदैः स्नापयेत्परम् । गौरीपीठाब्जके चैव वामादीनां स्वबीजकैः ॥
इन्द्रादीशानपर्यन्तं क्रमेणैव तु विन्यसेत् । तत्तत्कुम्भस्थतोयैश्च गौरीं चैवाभिषेचयेत् ॥
गन्धपुष्पादिभिर्बिम्बान्पूजयेद्धृदयेन तु । स्नपनं कारयेदन्ते पूर्वोक्तविधिना सह ॥

[3] A : तत्तत् pour तद्वत्  [4] A : तद्दत्त्वाथ pour दत्त्वाथ

[5] C omet le passage qui va de चक्रमुद्रां प्रदर्शयेत् à ब्रह्माणं च तथा स्थाप्य (16a) et lit : ततो विष्णुं ततः स्थाप्य पद्ममुद्रां प्रदर्शयेत्

[6] A : चैतत्तथा

[7] A : यथास्थैः  [8] C : स्वस्वगायत्रीमुच्चार्य  [9] A : स्थाप्य pour स्नाप्य

मूलमन्त्रं हृदि [1]न्यस्य चाङ्गान्यङ्गेषु विन्यसेत् । अस्त्रं च [2]दोर्द्वये न्यस्य मातृकाः पूर्ववन्न्यसेत्॥
[3]एवमेवान्यदेवानां [4]स्वस्वमूलाङ्गमन्त्रयुक् । प्रणवेन च गायत्र्या विन्यसेन्मातृकास्ततः ॥२०॥
ततोऽभिषिच्य सर्वांस्तान्गन्धचन्दनवारिणा । [5]पाद्यमाचमनं चार्घ्यं गन्धं पुष्पं च [6]धूपकम् ॥
[7]दीपं चैव निवेद्यं च स्वस्वमूलेन मन्त्रवित् । प्रभूतं च हविर्दद्यात्[8] सर्वेषां च यथाक्रमम्॥२२॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] सोमाश्रीविष्णुपद्मज-
[9]स्थापनविधिस्त्रिचत्वारिंशः पटलः ॥

---

[1] A : न्यस्त्वा pour न्यस्य [2] C, D : दोर्द्वयोर्न्यस्त्वा pour दोर्द्वये न्यस्य

[3] A : एवं पाद्यं च देवानां ; C : एवं वाद्यं च देवानां [4] A : स्वस्वमूलानि मन्त्रयुक्

[5] Cf. *Kāraṇāgama*, I, 78, 133b-137a :
गन्धपुष्पादिभिश्चैव पूजयेत्तु विशेषतः । मण्टपे विन्यसेद्बिम्बान्स्थण्डिलोपरि विन्यसेत् ॥
वस्त्रैराभरणैर्माल्यैर्मकुटाद्यैर्विभूषयेत् । फलानि दापयित्वा तु पायसान्नं निवेदयेत् ॥
ताम्बूलं दापयेत्पश्चान्मुखवाससमन्वितम् । यागोपयोगद्रव्याणि देशिकाय प्रदापयेत् ॥
सुमुहूर्ते सुलग्ने तु तद्दिने वापरे दिने । कुर्याद्दैवाह्यकार्यं तु दिवाकालेऽर्धरात्रके ॥

[6] A : दीपकम् [7] A : धूपं चैव [8] C, D : दत्त्वा pour दद्यात्

[9] A : स्थापनविधिः सप्तत्रिंशः पटलः ; C : स्थापनविधिपटलः समाप्तः ; D : स्थापनपटलः । ग्रन्थं २१

## [चतुश्चत्वारिंशः पटलः]

### [[1]हर्यर्धप्रतिष्ठाविधिः[2]]

विष्ण्वर्धस्य महेशस्य प्रतिष्ठामधुना शृणु । पूर्वोक्तलक्षणोपेतां[3] [4]रुद्रनारायणात्मिकाम् ॥ १ ॥
प्रतिमां पूर्वमापाद्य गोमयेनोपलेपिते । कुट्टिमे [5]स्थण्डिलं कृत्वा [6]प्राङ्मुखं तु निवेशयेत् ॥२॥

[रत्नन्यासः[7]]

तत्र पीठं समादाय प्रोक्षयित्वा शिवाम्भसा । रत्नानि नव [8]वा पश्च विन्यसेत्पूर्ववत्सुधीः ॥३॥
देवं तदूर्ध्वे संस्थाप्य सुश्लिष्टं कारयेत्सुधीः ।

[नयनोन्मीलनम्[9]]

नेत्रोन्मीलनमप्यस्य कुर्यात्तद्विधिरुच्यते ॥ ४ ॥
शिल्पिकर्मणि निर्वृत्ते नेत्रेषु च यथा पुरा । अन्यत्र स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः ॥५॥
तत्र देवं समानीय तस्याग्रे विन्यसेन्मधु । सर्पिषा पयसा चैव पृथक्पात्रस्थितं तथा ॥ ६ ॥
तेषु हैमं विनिक्षिप्य कमलं स्वर्णदूर्वया । स्थण्डिले स्थाप्य [10]तत्पार्श्वे नेत्रयोर्दक्षिणान्ययोः ॥

[1] Ce *paṭala* se trouve dans les manuscrits A et D seulement.

[2] Voir *Kāmika* I, 68 (प्रतिमाप्रतिष्ठाविधि), II, 60 (विष्णूमार्धस्थापन), *Kāraṇa* II, 62 (हर्यर्धप्रतिष्ठा), *Dīpta* 42 (हर्यर्धस्थापन), *Sahasra* 33 (हरिहरस्थापन) et *Suprabheda* I, 37 (सकलस्थापन) ; A : विष्ण्वर्धस्थापनम् pour हर्यर्धप्रतिष्ठाविधिः

[3] A : उपेतान् pour उपेतां

[4] A : रुद्रनारायणादिकान्

[5] A : स्थण्डिले

[6] A : प्रतिमां च निवेदयेत्

[7] Cf. *Dīptāgama*, 42, 7b-9 :
माणिक्यं पद्मरागं च वैडूर्यं च प्रवालकम् । मौक्तिकं स्फटिकं वज्रमिन्द्रनीलं च पुष्पकम् ॥
माणिक्यं मध्यमे चैव पूर्वादीशं प्रदक्षिणम् । न्यस्त्वा रत्नान्यशेषाणि नवबीजसमन्वितम् ॥
सुस्निग्धं कारयित्वा तु ततः कुर्वक्षिमोक्षणम् ।

[8] A : पञ्चानि pour वा पञ्च

[9] Cf. *Dīptāgama*, 42, 10-16 :
मण्डिते मण्डपे कुर्यात्स्थण्डिलं मण्डलान्वितम् । तिलदर्भैः परिस्तीर्य मूर्तिमन्त्रेण विन्यसेत् ॥
लोकपालाधिदैवत्यान्कलशानभितो यजेत् । ससूत्रान्सापिधानांश्च सवस्त्रान्वारिपूरितान् ॥
गन्धादिभिः समभ्यर्च्य शिल्पिनं पूजयेत्ततः । तरङ्गेणाथ वेष्ट्याथ चाक्षिमोक्षणमारभेत् ॥
पक्ष्मरेखां पुरालिख्य हैमसूच्याभिमन्त्रितः । असितमण्डलमालिख्य दृष्टिमण्डलमालिखेत् ॥
हिरण्यनखयुक्ताभिरङ्गुलीभिर्विशेषतः । तत्र नेत्रमनुस्मृत्य सुप्रोतं मधुना सह ॥
मधुवाता ऋतायेति मधुपात्रं प्रदर्शयेत् । घृतमिक्षेति मन्त्रेण घृतपात्रं प्रदर्शयेत् ॥
कपिलां दर्शयेत्पश्चाद्गौर्धेनु इति मन्त्रतः । पुण्याहं वाचयेत्तत्र स्वस्तिसूक्तसमन्वितम् ॥

[10] D : तान्पश्चाद् pour तत्पार्श्वे

मधुना पयसा चैव तर्पयेत्सोमसूर्ययोः । मन्त्रमुच्चारयन्मन्त्री [1]ललाटे सर्पिषा ततः ॥ ८ ॥
[2]वह्निबीजमनुस्मृत्य पूर्ववत्स्वर्णदूर्वया । एवं कृत्वापनीयात्र सद्यो यवनिकां सुधीः ॥ ९ ॥
गोब्राह्मणांश्च शैवादीन्दर्शयेद्देशिकः स्वयम् ।

[प्रतिमाशुद्धिः, ग्रामप्रदक्षिणं च[3]]

पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कुर्यात्ततो बुधः ॥ १० ॥
प्रणवेनैव मन्त्रेण ततः शुद्धोदकेन च[4] । अभिषिच्य ततो नीत्वा ग्रामादौ वा प्रदक्षिणम् ॥

[जलाधिवासः[5]]

ततो जलाधिवासाय जलतीरे[6] निवेशयेत्[7] । [8]प्राङ्मुखां प्रतिमां तत्र कुर्यात्पुण्याहमेव च ॥
[9]ततस्तत्तीर्थतोयेन देवं समभिषेचयेत् । कूर्चेन नववस्त्रेण वेष्टयेत्प्रतिमां शनैः ॥ १३ ॥
[10]प्राक्शिरस्तूर्ध्ववक्त्रं तु शाययेत्पूर्ववत्सुधीः । परितस्तु दिगस्त्राणि साधिपानि समर्चयेत् ॥

[स्नानमण्टपानयनम्[11]]

उक्तं कालं तु तत्रैव नीत्वा तस्माज्जलाशयात् । स्नानमण्टपमानीय मध्यमे संनिवेशयेत्॥१५॥

---

[1] A : ललाटं
[2] A : वाह्नि pour वह्नि
[3] Cf. *Dīptāgama*, 42, 17-19a :
प्रतिमाशुद्धिं कुर्वीत पञ्चमृत्पञ्चगव्यकैः । विष्णुसूक्तै रुद्रसूक्तैरभिषेकं समाचरेत् ॥
शुद्धैरुद्धैः समुच्चार्य शुद्धतोयेन सेचयेत् । वस्त्राभरणमालाभिरलंकृत्य विशेषतः ॥
शनैः प्रदक्षिणं कृत्वा शङ्खभेर्या रवैः सह ।
[4] A : तु pour च
[5] Cf. *Kāraṇāgama*, I, 80, 21-25a :
जलाशयं ततः प्राप्य तत्तीरे स्थण्डिलं कुरु । प्रतिमां स्थण्डिले स्थाप्य गन्धादिभिर्यजेद्बुदा ॥
नववस्त्रेण संवेष्ट्य लम्बकूर्चसमन्वितम् । कण्ठदघ्नजले चैव प्रपां कृत्वा तु सुन्दराम् ॥
वितानध्वजसंयुक्तां दर्भमालाभिरावृताम् । प्रतिमां शाययेन्मध्ये प्राक्शिरश्चोर्ध्ववक्त्रकाम् ॥
अभितः कलशानष्टौ सूत्रादिभिः समन्वितान् । पूर्वादिषु न्यसेत्स्थित्वा इन्द्रादीन्संयजेद्बुदा ॥
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् ।
[6] A : तीरं pour तीरे
[7] L'ordre des *śloka* dans le ms. D est le suivant : 12a, 16, 12b à 15, 17 etc.
[8] A : प्राङ्मुखं
[9] A : ततस्तु pour ततस्तत्
[10] D : प्राक्शिरस्योर्ध्ववक्त्रं तु
[11] Cf. *Kāraṇāgama*, I, 80, 30b-40 :
उद्वास्य तक्षकं पश्चाद्गोमयेनानुलेपयेत् । मण्टपं मण्डयित्वा तु भूसुरान्भोजयेत्ततः ॥
उच्छिष्टं तु ततोद्वास्य गोमयेनानुलेपयेत् । प्राक्कुण्डे वेदिकामध्ये वास्तुहोमं तु कारयेत् ॥
पर्यग्निकरणं तेन वह्निना मण्टपं कुरु । पुण्याहं वाचयित्वा तु प्रोक्षयेत्पञ्चगव्यकैः ॥
वेद्यूर्ध्वे स्थण्डिलं कृत्वा चाष्टद्रोणैश्च शालिभिः । तदर्धैस्तण्डुलैश्चैव तदर्धैश्च तिलैरपि ॥
तन्मध्येऽब्जं समालिख्य साष्टपत्रं सकर्णिकम् । लाजैर्दर्भैश्च पुष्पैश्च विकिरेत्समलंकृतम् ॥
स्थण्डिले तु यजेद्गन्धं पुष्पैस्तत्पुरुषेण तु । द्वारपूजादिकं सर्वं स्थापनक्रमवद्बुधः ॥

प्राङ्मुखां प्रतिमां [1]मन्त्री तत्र वस्त्रादिकं त्यजेत् । ततो गन्धाम्बुना देवमभिषिच्य [2]हरीशयोः॥
[3]गायत्र्याभ्यर्चनं चापि पुण्याहं तत्र कारयेत् । बध्वा प्रतिसरं हैमं सव्यहस्ते हृदा तदा॥१७॥

[शयनाधिवासः]

ततश्च कूर्चवस्त्राभ्यां वेष्टयेत्प्रतिमां सुधीः । केवलोक्तप्रकारे तु मण्टपे संस्कृते सुधीः ॥ १८ ॥
मध्यमे वेदिकायास्तु स्थण्डिले लक्षणान्विते । शयने पूर्ववत्क्लृप्ते प्रोक्षिते तु शिवाम्भसा ॥
शाययेत्प्राक्शिरस्कां तां प्रतिमामूर्ध्ववक्त्रकाम् । ततः पीताम्बरेणापि रक्तेनाप्यथ वेष्टयेत् ॥
शिवगायत्रिमुच्चार्य विष्णुगायत्रिमेव च । पूजयेद्गन्धपुष्पाद्यैः

[कुम्भस्थापनम्[4]]

कलशान्विन्यसेत्ततः ॥ २१ ॥
पूर्वोक्तलक्षणोपेतान्हेमरत्नादिसंयुतान् । प्रतिमायाः शिरोभागे [5]रुद्रनारायणात्मकम् ॥ २२ ॥
कुम्भमेकं न्यसेत्पश्चात्परितोऽष्टौ[6] घटानपि । विद्येश्वरसमायुक्तान्न्यस्य[7] पुण्याहमारभेत् ॥२३॥
ततश्च पूजयेद्धीमान्देवताध्यान[8]संयुतम् । आवाहनादिभिर्मन्त्रैर्मूलमन्त्रं समुच्चरन् ॥ २४ ॥
प्रधानकुम्भे पश्चात्तु विद्येशानभितो[9] यजेत् । [10]चक्रवर्तीननन्तान्तं ततो होमं समारभेत्॥२५॥

[होमः [11]]

कुण्डानां संस्थितिं तत्र कल्पयेत्केवले यथा । कुण्डेषु मूर्तिद्रव्याणि तद्वदेव प्रकल्पयेत्॥ २६ ॥

---

तन्मध्ये शयनं कल्प्य चर्मजाद्यैरनुक्रमात् । शयनं गन्धपुष्पाद्यैर्वामदेवेन पूजयेत् ॥
जलादुत्तीर्य बिम्बं तु स्नानश्वभ्रे तु विन्यसेत् । वस्त्रादीनि व्यपोह्याथ पूर्ववच्छुद्धिमाचरेत् ॥
गन्धपुष्पादिभिश्चैव ईशानेन तु पूजयेत् । अस्त्रेणैव तु मन्त्रेण कौतुकं बन्धयेत्सुधीः ॥
आरोप्य सुमुहूर्ते तु शयने हृदयेन तु । तत्रैव शाययेद्बिम्बं प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥
वस्त्रेणैव तु संवेष्ट्य गन्धपुष्पैर्यजेद्धृदा ।

[1] A : तत्र तत्र pour मन्त्री तत्र [2] A : हरिं शयेत् [3] D : गायत्रीभ्यां ततश्चापि

[4] Cf. *Dīptāgama*, 42, 33-35 :
ईशानशक्रयोर्मध्ये शिवकुम्भं च वर्धनीम् । अभितः कलशानष्टौ स्थापयेद्वसुदेवतान् ॥
द्रोणार्धतोयसंपूर्णान्सवस्त्रान्वारिपूरितान् । सकूर्चान्सापिधानांश्च हेमपङ्कजसंयुतान् ॥
तत्तत्कुम्भे तु तद्बीजं न्यस्त्वा देवं तु भावयेत् । पूजयित्वा स्वनाम्ना तु नैवेद्यान्तं विशेषतः ॥

[5] A : रुद्रान् pour रुद्र [6] D : अष्ट pour अष्टौ

[7] A : न्यस्त्वा pour न्यस्य [8] A : देवाज्ञपध्यान pour देवताध्यान [9] D : परितो pour अभितो

[10] A : चक्रवर्तिरनन्तान्तं ; la forme grammaticale correcte est चक्रवर्तिनोऽनन्तान्तं

[11] Cf. *Dīptāgama*, 42, 36-46 :
तत्तन्मूर्तिं दिशाकुण्डे ध्यात्वा होमं समाचरेत् । अर्कश्च खादिराश्वत्थोदुम्बराः प्लक्ष एव च ॥
न्यग्रोधश्चैव मायूरः समिधः संप्रकीर्तिताः । शिवाग्नौ चैव पालाशमर्घ्यपात्रादि निक्षिपेत् ॥
समिदाज्यचरूंल्लाजांस्तच्चूर्णं गुलसर्षपान् । नीवारं तण्डुलं मुद्गं होमयेत्तु विधानतः ॥
शोधनं क्षालनं चैव शोषणं पाचनं तथा । कुण्डसंस्कारकं सर्वमग्निकार्योक्तमाचरेत् ॥
शिवाग्निं जनयेत्सर्वं दिशाहोममतः परम् । शिवाग्नौ समिधो हुत्वा ईशानेन तु मन्त्रतः ॥

प्रधानकुण्डे तद्रूपं [1]रुद्रनारायणात्मकम् । ध्यात्वा संपूज्य गन्धाद्यैस्तत्र होमं प्रकल्पयेत् ॥२७॥
ततो [2]मूलेन चाङ्गैश्च पूर्ववद्धोममाचरेत् । द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यमतन्द्रितः ॥२८॥
प्रतिमां होतृभिः सार्धं हृदयादिषु संस्पृशेत् । तत्तदङ्गैः क्रमेणैव ततो होमं समाचरेत् ॥२९॥
होमकाले प्रयुञ्जीत चतुर्दिक्षु ऋगादिभिः । वेदैरध्ययनं चास्त्रजपमीशानगोचरे ॥ ३० ॥
ततः कुम्भगतानां तु देवानां च यथाविधि । हविर्दत्त्वाधिवासं तं समाप्यैवं पुरोक्तवत् ॥३१॥

[अधिवासानन्तरकृत्यम्[3]]

प्रभाते होतृभिः सार्धं कृतनित्यक्रियस्तदा । प्रविश्य मण्टपं तत्र कुण्डस्थानर्चयेत्क्रमात् ॥३२॥
कृतविद्यातनुर्मन्त्री[4] ततः पूर्णां सुवाहुतिम् । सर्वत्र मूलमुच्चार्य दापयेद्देशिकोत्तमः ॥ ३३ ॥

[कुम्भाभिषेकः[5]]

सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते । देवमुत्थाप्य संस्थाप्य स्नानवेद्यां समाहितः ॥ ३४ ॥

---

समिधो जुहुयाद्दिक्षु त्र्यम्बकनाममन्त्रतः । शन्नो देवीति मन्त्रेण विदिक्षु जुहुयात्ततः ॥
शतमर्धं तदर्धं वा तन्मन्त्रेण घृतं हुनेत् । शिवाङ्गैश्चैव विद्याङ्गैः शिवबीजेन होमयेत् ॥
लाजांश्च रुद्रमन्त्रेण सक्तु चैव हृदा हुनेत् । गणानां त्वा गुलं हुत्वा कद्रुद्रायेति सर्षपम् ॥
इमां रुद्राय नीवारमिदं विष्णिवति वै तिलम् । आपो राजेति मन्त्रेण मुद्गं हुत्वा विचक्षणः ॥
घृतमिक्षेति मन्त्रेण घृतहोमं समाचरेत् । अन्नं प्राणेति मन्त्रेण हविर्हुत्वा विचक्षणः ॥
द्रव्यान्ते व्याहृतिं हुत्वा हृदा पूर्णाहुतिं ददेत् । एवं जागरणं रात्रौ प्रभाते स्थापनं भवेत् ॥

[1] A : रुद्रं pour रुद्र
[2] A : मूले तदङ्गैश्च
[3] Cf. *Dīptāgama*, 42, 47-50 :
स्नानत्रयं पुरा कृत्वा देशिको मूर्तिपैः सह । दिक्कुम्भान्मूर्तिपांश्चैव अग्निमूर्तिं च होमयेत् ॥
ब्रह्माङ्गैर्बीजमुख्यैश्च दशबीजैश्च होमयेत् । जयादिरभ्याधानं च राष्ट्रभृत्स्विष्टं होमयेत् ॥
वस्त्रहेमाङ्गुलीयैश्च यज्ञसूत्रैश्च हैमकैः । स्वर्णैश्च धनधान्यैश्च देशिकं पूजयेत्क्रमात् ॥
मूर्तिपान्पूजयेत्तत्र अध्येतॄंश्च प्रपूजयेत् । भक्तानां परिचाराणां दैवज्ञमपि पूजयेत् ॥
[4] D : तनुं मन्त्री pour तनुर्मन्त्री
[5] Cf. *Dīptāgama*, 42, 51-60a :
उत्थाप्य शयनाद्देवं शकुने सुमुहूर्तके । स्नानश्वभ्रे विशेषेण कल्पयेदासनत्रयम् ॥
स्नानवेद्यां समानीय स्थापयेद्विष्टरोपरि । आनीय शिवकुम्भं तु वर्धनीमूर्तिकुम्भकैः ॥
नृत्तगेयसमायुक्तं सर्वातोद्यसमन्वितम् । ब्रह्मघोषसमायुक्तं स्वस्तिमङ्गलवाचकैः ॥
अष्टत्रिंशत्कलान्यासमङ्गैरङ्गानि कल्पयेत् । मुहूर्तं निरीक्ष्य दैवज्ञो गुरवे तन्निवेदयेत् ॥
शिवकुम्भात्समादाय शिवबीजं हृदि न्यसेत् । वर्धन्या बीजमादाय गौर्याश्च हृदि विन्यसेत् ।
अभिषिच्य हृदा मन्त्री मूर्तिकुम्भैर्यथाक्रमम् । स्नपनं कारयेदन्ते शुभदेशेषु यत्नतः ॥
पाद्यैराचमनीयार्घ्यैर्गन्धपुष्पैश्च धूपकैः । वस्त्राभरणमालाभिरर्चनोक्तं समर्चयेत् ॥
नैवेद्यं पायसं दद्यात्पुनराचमनं ददेत् । ताम्बूलं दापयित्वा तु हृदा मन्त्रं समुच्चरन् ॥
उत्सवं कारयेदन्ते पूर्वोक्तविधिना सह । सर्वलोकहितं पुण्यं सर्वकामार्थसाधकम् ॥
इत्यर्धस्थापनं प्रोक्तम् "

वस्त्रकूर्चादिकं सर्वमस्त्रमन्त्रेण चोत्सृजेत् । पञ्चगव्येन तां पश्चात्प्रतिमामभिषेचयेत् ॥ ३५ ॥
ततः शुद्धोदकेनापि प्रणवेनैव मन्त्रवित् । ततः कुम्भान्समुद्धृत्य कृत्वा [1]धामप्रदक्षिणम्॥३६॥
प्रतिमाग्रे समानीय [2]संस्थाप्य च यथा पुरा । तद्रूपं हृदि कृत्वाथ ततः कुम्भाम्भसि स्थितम्॥
कृत्वा कूर्चाम्भसा मन्त्री तयोर्मूलमनुस्मरन् । प्रतिमायास्तु हृद्देशे मन्त्ररूपं न्यसेत्सुधीः॥३८॥
कुम्भाम्भसा च संस्नाप्य क्रमेण स्वस्वमन्त्रतः । ततो [3]बेरे न्यसेन्मन्त्री मन्त्रानेताननुक्रमात्[4]॥

[मन्त्रन्यासः]

[5]प्रणवं मूर्ध्नि विन्यस्य गायत्रीं वदने न्यसेत् । मूलमन्त्रं हृदि [6]न्यस्य चाङ्गान्यङ्गेषु च क्रमात्॥
अस्त्रं च दोर्द्वयोर्न्यस्य[7] मातृकाः पूर्ववन्न्यसेत् । ततः शुद्धोदकेनापि प्रणवेनाभिषेचयेत् ॥ ४१
मालाभरणवस्त्राद्यैः कृत्वा पूजामनुक्रमात् । [8]प्रभूतं च हविर्दत्त्वा ताम्बूलं च प्रदापयेत् ॥४२॥
उत्सवं च ततः कुर्याद्ग्रामादिषु यथाविधि ॥ ४३ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [9]हर्यर्धप्रतिष्ठाविधिश्चतु-

श्चत्वारिंशः पटलः ॥

---

[1] A : ग्राम pour धाम
[2] D : संस्थायाप्य
[3] A : बेरं pour बेरे
[4] A : अनुस्मरन् pour अनुक्रमात्
[5] A : प्रणवाम्भसि विन्यस्य
[6] A : न्यस्त्वा pour न्यस्य
[7] A : न्यस्त्वा pour न्यस्य
[8] A : प्रभूताय pour प्रभूतं च
[9] A : हर्यर्धप्रतिष्ठाविधिरष्टत्रिंशः पटलः ; D : हरिरर्चाप्रतिष्ठापटलः । ग्रन्थं ४३.

## [पञ्चचत्वारिंशः पटलः]

### [[1]अर्धनारीश्वरप्रतिष्ठाविधिः[2]]

गौर्यर्धस्य महेशस्य प्रतिष्ठाविधिमप्यथ । शृणु सर्वं समासेन वक्ष्यमाणं मयाधुना ॥ १ ॥

[[3]रत्नन्यासः]

पूर्वोक्तलक्षणोपेतां प्रतिमां काञ्चनादिभिः । [4]विधाय रत्नन्यासं तु पूर्ववत्परिकल्पयेत् ॥ २ ॥

[नयनोन्मीलनम्[5]]

नयनोन्मीलनं पश्चात्कुर्यात्तद्विधिरुच्यते । शिल्पिकर्मविनिर्मुक्ते तन्नेत्रे च यथा पुरा ॥ ३ ॥
अन्यत्र स्थण्डिलं कृत्वा विधिवत्तस्य मध्यमे । संस्थाप्य प्राङ्मुखं पश्चात्तस्याग्रे [6]तु घृतं मधु ॥
पयश्च [7]पात्रे निक्षिप्य पृथक्पृथगतन्द्रितः[8] । [9]अभ्युक्षणं ततो मन्त्री तर्पयेत्स्वर्णदूर्वया ॥ ५ ॥
दक्षिणेतरयोरक्ष्णोर्मधु दुग्धमथोर्ध्वके । नेत्रे तु सर्पिर्मन्त्रान्तैः[10] सोमसूर्याग्निपक्ष्मकैः ॥ ६ ॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A et D seulement.

[2] Pour अर्धनारीश्वरप्रतिष्ठा voir *Kāmika* I, 68 et II, 60, *Kāraṇa* I, 80 et II, 63, *Dīpta* 41, *Vīra* 63 et *Suprabheda* I, 37 ; A : गौर्यर्धप्रतिष्ठा

[3] Cf. *Kāraṇāgama*, I, 80, 3-7 :

प्रागुक्तविधिना पश्चादङ्कुराण्यर्पयेद्बुधः । मण्डिते मण्टपे चैव रत्नन्यासं समारभेत् ॥
तन्मध्ये स्थण्डिलं कृत्वा शालिभिर्विमलैस्ततः । पीठं तस्योपरि न्यस्त्वा माणिक्यं मध्यमे न्यसेत् ॥
इन्द्रनीलं न्यसेदैन्द्रे वैडूर्यं वह्निगोचरे । याम्ये चैव महानीलं मौक्तिकं चैव नैर्ऋते ॥
स्फटिकं वारुणे देशे वायव्ये पुष्यरागकम् । सौम्ये चैव प्रवालं तु ईशान्यां चैव वज्रकम् ॥
दिक्पालानां च मन्त्रैश्च क्रमेणैव तु विन्यसेत् । तस्योपरि न्यसेद्बिम्बं सुस्निग्धं सुदृढं कुरु ॥

[4] D : विधानरत्नन्यासे तु

[5] Cf. *Dīptāgama*, 41, 9-14 :

शालिभिः स्थण्डिलं कृत्वा तिलदर्भैः परिस्तरेत् । तन्मध्ये विन्यसेद्देवमभितोऽष्ट घटान्न्यसेत् ॥
सकूर्चान्वसुदैवत्यान्सवस्त्रान्वारिपूरितान् । पूजयित्वा स्वनाम्ना तु धूपदीपसमन्वितम् ॥
अक्षिद्वययुते ऋक्षे नेत्रमोक्षणमारभेत् । हेमसूचीप्रहाराभ्यां पक्ष्मरेखां समालिखेत् ॥
कृष्णमण्डलमालिख्य ज्योतिर्मण्डलमालिखेत् । नेत्रमन्त्रं समुच्चार्य प्रोतहैमनखेन तु ॥
नेत्राणि मधुना तर्प्य मधुवातेति मन्त्रतः । स्वर्णया दूर्वया विद्वांस्तर्प्य नेत्रे घृतं हृदा ॥
गौर्धेनुभव्यमन्त्रेण सवत्सां गां प्रदर्शयेत् । ब्रह्मजज्ञानमन्त्रेण ब्राह्मणानपि दर्शयेत् ॥

[6] D : सघृतं pour तु घृतं

[7] A : पार्श्वे pour पात्रे

[8] D : अतन्वतः pour अतन्द्रितः

[9] D : अभ्युक्षणान्ततो

[10] A : मन्त्रान्ते pour मन्त्रान्तैः

[बेरशुद्धिः[1]]

पूर्ववद्ब्राह्मणादींश्च दर्शयेत्प्रणवेन तु । पञ्चमृत्पञ्चगव्यैस्तु[2] कृत्वा शुद्धिं च पूर्ववत् ॥ ७ ॥

[ग्रामप्रदक्षिणम्, जलाधिवासश्च[3]]

पुण्याहं वाचयित्वात्र नीत्वा ग्रामप्रदक्षिणम् । जलाधिवासनं तत्र कुर्यात्तद्विधिरुच्यते ॥ ८ ॥
जलतीरे समादाय प्रतिमां प्राङ्मुखां सुधीः । पुण्याहं वाचयित्वाथ तज्जलैरभिषेचयेत् ॥ ९ ॥
अर्घ्यं तन्मूर्ध्नि विन्यस्य प्रणवं समुदाहरन् । संवेष्ट्य कूर्चवस्त्राभ्यां प्रतिमां हृदयाणुना ॥ १० ॥
पूर्ववज्जलमध्ये तु शाययेत्फलकोपरि । तत्रोक्तमपि तं कालं नीत्वा देशिकसत्तमः ॥ ११ ॥

[शयनाधिवासः[4]]

पूर्वोक्तलक्षणोपेते मण्टपे संस्कृते शुभे । स्नानवेद्यां समानीय प्रतिमां स्थाप्य मन्त्रवित् ॥१२॥
व्यपोह्य वस्त्रकूर्चं च दत्त्वार्घ्यं प्रणवेन तु । पञ्चगव्यैस्ततोऽर्चां तामभिषिच्य तथा बुधः॥१३॥
गन्धतोयेन पश्चात्तु ब्रह्मपञ्चकमुच्चरन् । अभिषिच्य ततश्चापि वेष्टयेन्नववाससा ॥ १४ ॥
सकूर्चेन शिवाभ्यां तु ततः कृत्वा नमस्कृतिम् । पुण्याहं वाचयित्वाथ बन्धयेत्कौतुकं हृदा ॥
देवस्य दक्षिणे हस्ते पूर्ववत्परिकल्पयेत् । शयने शाययेदर्चां पूर्ववद्देशिकोत्तमः ॥ १६ ॥

[कुम्भस्थापनम्[5]]

ततः कुम्भांश्च तत्रैव स्थापयेच्च यथा पुरा । पूर्वोक्तलक्षणोपेतान् गन्धोदपरिपूरितान् ॥ १७ ॥

---

[1] Cf. *Dīptāgama*, 41, 15-16a :
शुद्धिं कृत्वा विशेषेण पञ्चगव्यकषायकैः । पञ्चब्रह्म समुच्चार्य पञ्चगव्याभिषेचनम् ॥
कषायं हृदयेनैव चन्दनोदकसंयुतम् ।

[2] D : च pour तु

[3] Cf. *Dīptāgama*, 41, 16b-19a :
सुवस्त्रभूषणैर्भूष्य कुर्याद्ग्रामप्रदक्षिणम् । नानातोद्यसमायुक्तं नानादीपसमाकुलम् ॥
नानापिञ्छसमायुक्तं नृत्तगेयसमाकुलम् । कण्ठदघ्ने जले धीमान्प्रपां कृत्वातिसुन्दराम् ॥
वितानध्वजमालाभिर्दर्भमालासमाकुलाम् । तन्मध्ये विन्यसेद्देवं नववस्त्रेण वेष्टयेत् ॥

[4] Cf. *Dīptāgama*, 41, 19b-24 :
प्रासादस्याग्रतः कुर्यान्मण्टपं दशहस्तकम् । षोडशस्तम्भसंयुक्तं प्रत्येकं स्यात्त्रयाङ्गुलम् ॥
नाभियोनिसमायुक्तं विस्तारं हस्तमात्रकम् । मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ॥
हस्तमात्रप्रविस्तारं मेखलात्रयभूषितम् । स्थण्डिलं कारयेद्धीमानष्टद्रोणैश्च शालिभिः ॥
तदर्धैस्तण्डुलैर्भूष्य तदर्धैश्च तिलैरपि । मध्यमे शयनं कल्प्य चर्मजाद्यैरनुक्रमात् ॥
नवशक्तिं न्यसेत्तस्मिन्प्रतिमां विन्यसेत्क्रमात् । जलादानीय देवेशं वस्त्रेण परिवेष्टितम् ॥
पूजयेद्धृदयेनैव "

[5] Cf. *Dīptāgama*, 41, 24b-29 :
" शिवकुम्भं तु विन्यसेत् । बिम्बस्य वामभागे तु वर्धनीं च क्रमान्न्यसेत् ॥
सकूर्चौ सापिधानौ च सवस्त्रौ रत्नहेमकौ । शिवबीजं शिवकुम्भे शिवरूपं च विन्यसेत् ॥

सक्रूर्चान्हेमवस्त्राढ्यान्पल्लवाढ्यान्मनोरमान् । गौर्यर्धदेवं पूर्वोक्तं ध्यात्वावाह्य यथाविधि॥१८॥
स्थापयेन्मध्यमे कुम्भे तन्मूलं [1]समनुस्मरन् । गन्धाद्यैश्च ततोऽभ्यर्च्य विद्येशानष्टदिक्ष्वपि॥१९॥
पूर्वादिषु क्रमाद्देवानर्चयेद्देशिकः सुधीः । ततो होमं च कुर्वीत केवलोक्तप्रकारतः ॥ २१ ॥

[होमः[2]]

प्रधाने शिवयोरङ्गैः समूलैर्होममाचरेत् । [3]शेषकर्म तथा सर्वं केवलोक्तवदाचरेत् ॥ २१ ॥

[कुम्भाभिषेकः[4]]

प्रभाते विमले पश्चात्कृतनित्यक्रियो गुरुः । मूर्तिपैः [5]होतृभिः सार्धं मण्टपं संप्रविश्य च॥२२॥
देवान् गन्धादिभिः पूज्य सुमुहूर्ते सुलग्नके । सर्वत्र मूलमन्त्रैस्तैः पूर्णां कृत्वा विचक्षणः ॥२३॥

---

गौरीबीजं तु वर्धन्यां न्यस्त्वा रूपं तु भावयेत् । अर्चयित्वा विधानेन तत्तन्मन्त्रमनुस्मरन् ॥
अभितः कलशानष्टौ अष्टविद्येश्वरात्मकान् । द्रोणार्धतोयसंपूर्णान्सवस्त्रान्सापिधानकान् ॥
विद्येशबीजसंयुक्तान्बीजयित्वा यथाविधि । नैवेद्यं दापयेद्धीमान्प्रत्येकं प्रतिमां तथा ॥
पुनराचमनं दद्यात्ततो होमं समारभेत् ।

[1] A : समनुचरन्

[2] Cf. *Kāraṇāgama*, I, 80, 49-56a :
देशिको मूर्तिपैः सार्धं होमकर्म समारभेत् । अग्न्याधानादिकं सर्वं प्रागुक्तविधिनाचरेत् ॥
समिदाज्यचरूँल्लाजसक्तुमाषतिलानपि । सिद्धार्थं यवशाली च होमयेत्तु विशेषतः ॥
पलाशखदिराश्वत्थवटाः पूर्वादिदिक्षु च । शम्यर्कोदुम्बराः प्लक्षो विदिक्षु परिकीर्तिताः ॥
प्रधानस्य पलाशस्तु सर्वेषामिध्ममेव च । सद्यादिनेत्रपर्यन्तं मन्त्रैश्चैव क्रमाद्धुनेत् ॥
प्रत्येकं शतमर्धं वा तदर्धं वापि होमयेत् । द्रव्यान्ते व्याहृतिं हुत्वा स्पर्शाहुतिमथाचरेत् ॥
मकुटं वदनं कण्ठं बाहू चैव स्तनद्वयम् । पादौ चैव क्रमात्ते तु मन्त्रैर्हुत्वा क्रमात्स्पृशेत् ॥
महेशस्यैव मूलेन अष्टोत्तरशतं हुनेत् । आज्येन जुहुयात्प्राग्वद्गौरीबीजेन सुव्रत ॥
स्तुत्वा स्तोत्रैरनेकैश्च रात्रिशेषं व्यपोह्य च ।

[3] D omet le demi-*śloka* 21b

[4] Cf. *Kāraṇāgama*, I, 80, 56b 63 :
देशिको मूर्तिपैः सार्धं विधिना स्नानमाचरेत् । अङ्गन्यासकरन्यासं प्रागुक्तविधिनाचरेत् ॥
अष्टत्रिंशत्कलान्यासं मकुटादिक्रमान्न्यसेत् । गन्धपुष्पादिभिश्चैव हृदयेनैव पूजयेत् ॥
सर्वातोद्यसमायुक्तं मुक्तालंकारशोभितम् । पूजयेद्देशिकं सम्यक् पूर्वोक्तविधिना सह ॥
शिरसा वाहयित्वा तु कुम्भानुद्धृत्य मूर्तिपैः । कृत्वा प्रदक्षिणं हर्म्यं बिम्बाग्रे स्थापयेद्घटान् ॥
मुहूर्ते समनुप्राप्ते मन्त्रन्यासं समारभेत् । कुम्भाद्बीजं समादाय महेशांशे हृदि न्यसेत् ॥
वर्धन्या बीजमादाय उमांशे हृदि विन्यसेत् । ताभ्यां संस्नापयेद्देवमष्टविद्येश्वरान्क्रमात् ॥
पीठे शक्रादिषु न्यस्त्वा तज्जलैः स्नापयेत्प्रभुम् । गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु ॥
स्नपनं कारयेत्पश्चादर्चनोक्तं समर्चयेत् ।

[5] A : स्तोतृभिः pour होतृभिः

ततश्चार्चां समुत्थाप्य सर्वातोद्यसमन्वितम्[1] । स्नानवेद्यां [2]समाधाय वस्त्रकूर्चादिकं हृदा ॥२४॥
व्यपनीय शिरस्यर्घ्यं दत्त्वा [3]तारं समुच्चरन् । पुण्याहं वाचयित्वाथ कुम्भानुत्थाप्य मन्त्रवित्॥
एवं प्रदक्षिणं कृत्वा देवाग्रे संनिवेश्य च । कृतविद्यातनुर्मन्त्री[4] [5]तद्रूपध्यानपूर्वकम् ॥ २६ ॥
[6]कुम्भान्तस्थं ततो देवं कूर्चाग्रोद्धृतवारिणा । तन्मन्त्रोच्चारणपूर्वं [7]प्रतिमाहृदि विन्यसेत् ॥२७॥
अभिषिच्याथ कुम्भेन सर्वात्मानं समुच्चरन् । पाद्याद्यैरर्चयित्वाथ दीपान्तं मूलमुच्चरन् ॥२८॥
प्रभूतं च हविर्दत्त्वा ताम्बूलं च निवेदयेत् । उत्सवं च ततः कुर्यान्नवस्वेकं विधानतः ॥२९॥
एवं यः कारयेन्मर्त्यो देव्यर्धस्थापनं परम् । त्रिसप्तकुलसंयुक्तः [8]शिवलोके महीयते ॥ ३० ॥

[आचार्यदक्षिणा[9]]

दक्षिणान्ता[10] क्रिया सर्वा सफलत्वमवाप्नुयात् । क्रिया [11]शरीरमित्युक्तं दक्षिणा जीव उच्यते॥
क्रिया दक्षिणया हीना निर्जीवा निष्फला भवेत् । [12]क्रियाणां सर्वफलदां दक्षिणां दापयेत्ततः॥
आढ्योऽपि दक्षिणां दत्त्वा क्षुद्रां [13]हस्ते दरिद्रवत्।[14]सोऽप्यन्यो डाम्भिको नैव यथोक्तफलमाप्नुयात्
[15]अधमा पञ्चनिष्का[16]स्यादाचार्याय तु दक्षिणा । त्रिगुणा मध्यमा प्रोक्ता षड्गुणा चोत्तमा भवेत्॥
[17]तस्माद्दशांशं होतॄणामध्येतॄणां तदर्धतः । जापिनां होतृवत्तस्य दैवज्ञे त्रिगुणं भवेत् ॥ ३५ ॥
सकलस्य प्रतिष्ठायां दक्षिणा संप्रकीर्तिता । निष्कलस्य [18]प्रतिष्ठायां तस्मात्त्रिगुणिता[19] भवेत् ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] अर्धनारीश्वर[20]प्रतिष्ठाविधिः
पञ्चचत्वारिंशः पटलः ॥

---

[1] D : समन्वितः pour समन्वितम् [2] A : समादाय [3] A : सारं pour तारं
[4] D : तनुं मन्त्री pour तनुर्मन्त्री [5] D : तद्रूपं ध्यानपूर्वकम्
[6] A : कुम्भान्तरं ततो [7] A : प्रतिमां हृदि
[8] D : शिवलोकेऽत्र पूज्यते
[9] Cf. *Suprabhedāgama*, I, 37, 89b-93 :
आचार्यं पूजयेत्पूर्वं वस्त्राङ्गुलीयकादिभिः । हेमपुष्पोपवीतं च कुण्डलं कटकं तथा ॥
दासीदासांश्च गा भूमिमाचार्याय प्रदापयेत् । कन्यसं दशनिष्कं च द्विगुणं त्रिगुणं तथा ॥
दक्षिणा कन्यसादीनि देशिकस्य विधीयते । प्रत्येकं मूर्तिपान्पूज्य देशिकस्याष्ट भागतः ॥
दैवज्ञं वास्तुहोतारं मूर्तिपांस्त्रिगुणेन वै । मूर्तिपस्य त्रिपादेन अध्येतॄंश्च पृथक् पृथक् ॥
तेषां हेमाङ्गुलीयं च वस्त्रयुग्मं च दापयेत् ।
[10] D : दक्षिणान्तां [11] D : शरीर इत्युक्त्वा
[12] D : क्रियां सफलतामिच्छेद्दक्षिणां दापयेत्तदा [13] A : हस्तदरिद्रवत्
[14] A : सोप्यन्ये साम्बिकं चैव यथोपलमवाप्नुयात् [15] Cf. *Ajitāgama*, Vol. I, p. 168.
[16] A : अधमं पञ्चनिष्कं स्याद् [17] D omet le *śloka* 35.
[18] A : प्रतिष्ठां तु [19] A : त्रिगुणतो pour त्रिगुणिता
[20] A : प्रतिष्ठाविधिरेकोनचत्वारिंशः पटलः ; D : प्रतिष्ठाविधिपटलः । ग्रन्थं ३५

[षट्चत्वारिंशः पटलः]

[[1]वृषेन्द्रप्रतिष्ठाविधिः[2]]

[3]उत्पत्तौ[4] तौ तदा देवौ [5]वाहनत्वमुपागतौ । एवमुत्पत्तिरुद्दिष्टा मन्त्रं तत्स्थापनोचितम् ॥१॥

[वृषभमन्त्राः[6]]

मूलाख्यं सषडङ्गं च वक्ष्ये [7]गायत्रियान्वितम् । [8]सप्तमस्वरसंयुक्तलकारान्तं जनार्दन ॥ २ ॥
बिन्दुनादसमायुक्तं मूलबीजं [9]च कथ्यते । वृषभाय नमश्चान्ते तारं तत्स्थस्य तस्य तु ॥ ३ ॥
योजयेन्मूलमन्त्रस्य ततोऽङ्गानि च पूर्ववत् । वकारेण [10]समायुक्तहृदयादीनि कल्पयेत् ॥ ४ ॥

[वृषगायत्री[11]]

तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि । तन्नो [12]वृषः प्रचोदयादिति गायत्रिमुच्चरेत्[13]॥ ५ ॥

---

[1] Ce paṭala se trouve dans les manuscrits A et D seulement.

[2] Pour वृषेन्द्रप्रतिष्ठाविधि voir *Kāmika* I, 74 et II, 62, *Kāraṇa* I, 60 et II, 59 et 87, *Dīpta* 37 et 68, *Vīra* 63 et 72, *Santānasaṃhitā* 24, et *Suprabheda* I, 37 et 40.

[3] Voir le légende de Dharma et Viṣṇu obtenant par leur *tapas* de devenir de Śiva dans *Skāndamahāpurāṇa, dakṣakāṇḍa, adhyāya* 20.

[4] D : इत्युक्तौ pour उत्पत्तौ

[5] A : वाहनं समुपागतौ

[6] Cf. *Kāmikāgama*, I, 74, 69b-70 :
सप्तवर्गाच्चतुर्थान्तं सप्तस्वरविभूषितम् । बिन्दुनादसमायुक्तमादौ प्रणवसंयुतम् ॥
वृषभाय नमश्चान्ते तस्मिन्ब्रह्माङ्गकल्पना ।

[7] La forme grammaticale correcte et गायत्र्या ; mais le mètre ne serait pas respecté.

[8] D : सप्तमं स्वरसंयुक्तं

[9] A : चतुर्थके pour च कथ्यते

[10] A : समायुक्तं हृदयादीनि

[11] Cf. *Kāraṇāgama*, I, 91, 7-9a :
तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि । तन्नो वृषः प्रचोदयात् ॥
चतुर्वेदाय विद्महे समपिण्डाय धीमहि । तन्नो वृषः प्रचोदयात् ॥
गायत्री चैव सावित्री वृषस्य समुदाहृते ।

cf. *Śivaliṅgapratiṣṭhāvidhi* vol. II, p. 193 :
" वेदपादाय विद्महे दीर्घशृङ्गाय धीमहि । तन्नो नन्दिः प्रचोदयात् " इति केचित् ॥

[12] D : वृषभः pour वृषः

[13] A : उच्चरन् pour उच्चरेत्

[रत्नन्यासः[1]]

एवं मन्त्राः समुद्दिष्टाः स्थापनं तु ततः शृणु । रत्नन्यासं पुरा कुर्यात्स्थण्डिले शालिनिर्मिते॥६॥
तन्मध्ये पीठमादाय स्थापयेद्धृदिना[2] ततः । [3]माणिक्यादीनि नवकं मध्यादिष्वपि विन्यसेत्॥
पीठे तु नवशक्तीनां मन्त्रैस्तत्र [4]वृषं ततः । सम्यगारोप्य नीरन्ध्रं कृत्वा पीठसमन्वितम् ॥८॥
वृषेन्द्रमूलमन्त्रेण प्रोक्षयेद्गन्धवारिणा । [5]रत्नन्यास इति प्रोक्तो नेत्रोन्मीलनमुच्यते ॥ ९ ॥

[नेत्रोन्मीलनम्[6]]

तादृशे स्थण्डिले देवं संस्थाप्य शिवसंनिधौ । देशिकः शिल्पिना तत्र कारयेन्नेत्रमण्डलम्॥१०॥
तस्य कर्मसमाप्तौ तु नेत्रयोर्देशिकः सुधीः । विन्यस्य सोमसूर्याभ्यां नेत्रयोस्तु पुनः पुनः ॥
सर्पिर्दुग्धं च संतर्प्य दक्षिणेतरयोः क्रमात् । स्वर्णदूर्वाङ्कुराभ्यां तु वृषगायत्रिमन्त्रतः॥१२॥
प्रच्छन्नपटमावर्ज्य ब्राह्मणान्गां च दर्शयेत् ।

[बेरशुद्धिः]

शुद्धिं कृत्वा ततो मन्त्री पञ्चमृत्पञ्चगव्यकैः ॥ १३ ॥
वृषगायत्रिमन्त्रेण गन्धतोयेन सेचयेत् । तत्र तस्योचितैर्द्रव्यैः शुद्धिं कृत्वा पुनः पुनः ॥१४॥

---

[1] Cf. *Vīrāgama*, 72, 12b-14 :
शैलजे मृण्मये लोहे रत्नन्यासं तु कारयेत् । वज्रं वैडूर्यकं चैव पद्मरागं तथैव च ॥
इन्द्रनीलं च रत्नानि पूर्वादिकचतुर्दिशि । प्रवालं मध्यमे स्थाप्य सुस्निग्धं कारयेत्ततः ॥
वृषभं क्षालयेद्विद्वान्पुण्याहं वाचयेत्ततः ।

cf. *Kāmikāgama*, I, 74, 65b-66a :
रत्नन्यासं प्रकर्तव्यं शैलजे लोहजेऽप्यथ । रत्नार्थं हेमपद्मं वा मृण्मयादौ विसर्जयेत् ॥

cf. *Dīptāgama*, 68, 21a :
रत्नन्यासं प्रकर्तव्यं हैमं वा तत्र निक्षिपेत् ।

[2] La forme grammaticale correcte est हृदा

[3] La forme grammaticale correcte est माणिक्यादीनां नवकं mais le métre ne serait pas respecté.

[4] A : शिवं pour वृषं

[5] A : रत्नन्यासमिति प्रोक्तं

[6] Cf. *Dīptāgama*, 68, 21b-24a :
नेत्रद्वययुते ऋक्षे कारयेदक्षिमोक्षणम् । पक्ष्मरेखां पुरा कृत्वा कृष्णमण्डलमालिखेत् ॥
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन् । तर्पयेद्धृदयेनैव देशिको मधुसर्पिषा ॥
स्नापयेत्पञ्चगव्येन पवमानमुदीरयन् । शुद्धोदकेन संस्नाप्य शुद्धैरुद्धेति मन्त्रतः ॥

[जलाधिवासः[1]]

अलंकारं[2] वृषे कृत्वा नीत्वा ग्रामप्रदक्षिणम् । जलेऽधिवासयेत्पश्चाद्वृषं संवेष्ट्य वाससा॥१५॥
[3]मालाकूर्चसमायुक्तं वृषगायत्रिमन्त्रतः । ततस्तस्मात्समानीय स्नानमण्टपमध्यमे ॥ १६ ॥

[शयनाधिवासः[4]]

पञ्चगव्यादिना स्नाप्य वृषगायत्रिमुच्चरन् । सौवर्णं कौतुकं तस्य सव्यशृङ्गे तु बन्धयेत् ॥१७॥
वेष्टयेत्कूर्चवस्त्राभ्यां तनुत्राणं समुच्चरन् । [5]पूर्वोक्तलक्षणोपेतमण्टपादिषु कल्पयेत् ॥ १८ ॥
कुण्डानि परितस्तत्र चतुरश्रार्धचन्द्रके । वृत्तं त्रिकोणकं चैव [6]शांकरे पद्ममेव च ॥ १९ ॥
गोमयेनोपलिप्याथ पुण्याहं च प्रयोजयेत् । स्थण्डिलं विधिना कृत्वा पद्ममालिख्य तत्र वै ॥
शयनं पूर्ववत्कृत्वा यथापूर्ववदर्चयेत् । सर्वात्मनाणुनाभ्युक्ष्य वृषेन्द्रं तत्र शाययेत् ॥ २१ ॥
प्रत्यग्द्वारा समानीय शयने [7]पुष्पकीर्णके । शङ्खदुन्दुभिनिर्घोषैः सामवेदसमीरणैः ॥ २२ ॥

[कुम्भस्थापनम्[8]]

पूर्वोक्तलक्षणोपेतं प्रधानं तोयपूरितम् । हेमकूर्चसुवस्त्राढ्यं[4] गन्धचन्दनचर्चितम् ॥ २३ ॥

---

[1] Cf. *Vīrāgama*, 72, 16-17 :
जलाधिवासनं कुर्यान्नववस्त्रेण वेष्टयेत् । वृषगायत्रिमन्त्रेण जले चैवाधिवासयेत् ॥
अभितः कलशानष्टौ लोकपालसमन्वितान् । जलादुत्तीर्य पूर्वेद्युः प्रविशेदालयं प्रति ॥

cf. *Kāraṇāgama*, I, 60, 94b-96a :
लोहजं शैलजं चेत्तु कुर्याज्जलाधिवासनम् । जलमध्ये प्रपां कृत्वा चतुर्गात्रसमन्विताम् ॥
वस्त्रेणावेष्ट्य बिम्बानि कण्ठमात्रे जले ततः । शाययेत्तु त्रिरात्रं वा एकं वा युगयामकम् ॥

[2] A : अलंकारे pour अलंकारं    [3] A : मालार्चन pour मालाकूर्च

[4] Cf. *Kāraṇāgama*, I, 60, 97b-101 :
मण्टपं भूषयेत्पश्चाद्वितानाद्यैर्विशेषतः । पुण्याहं वाचयेत्तत्र स्वस्तिसूक्तं तु वाचयेत् ॥
स्थण्डिलं कारयेद्वेद्यामष्टद्रोणैस्तु शालिभि. । लाजपुष्पतिलैर्दर्भैर्विकिरैः समलंकृतम् ॥
जलादुत्तीर्य बिम्बानि शुद्धिं कृत्वा तु पूर्ववत् । कौतुकं बन्धयेत्पश्चात्सद्यमन्त्रेण देशिकः ॥
शयनं वस्त्रकाशाभ्यां कल्पयेत्स्थण्डिलोपरि । शाययेत्तत्र बिम्बं तु प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥
वस्त्रेणाच्छाद्य बिम्बं तु पूजयेद्धृदयेन तु ।

cf. *Vīrāgama*, 72, 18-22a :
शिवाग्रे मण्डपं कुर्यात्परितः कुण्डमुच्यते । चतुर्दिक्षु च ईशान्यां वृत्तकुण्डमिहोच्यते ॥.......
वेदिमध्ये न्यसेच्छालिं तण्डुलं च तिलं न्यसेत् । तदूर्ध्वे विन्यसेद्विप्र पञ्चभिः कम्बलैर्युतम् ॥
शयने शाययेद्विप्र मूलमन्त्रेण देशिकः ।

[5] D : पूर्वोक्तलक्षणोपेतं    [6] A : शंकरे    [7] D : पुष्पकण्ठके

[8] Cf. *Vīrāgama*, 72, 22b-25a :
प्रच्छन्नपटसंयुक्तमभितः कलशान्न्यसेत् । वृषभस्यैशदिग्भागे वृषकुम्भं प्रतिष्ठितम् ॥
वृषगायत्रिमन्त्रेण विन्यसेद्देशिकोत्तमः । सवस्त्रं पञ्चरत्नं च वृषभस्तत्र देवता ॥
अष्टविद्येश्वरान्बाह्यकलशस्याधिदैवतान् । अर्चयेद्गन्धपुष्पाद्यैः पायसान्नं निवेदयेत् ॥

[1]ककुत्पार्श्वे न्यसेद्धीमान्वृषगायत्रिमन्त्रतः । ततश्च परितः पश्चादष्टौ कुम्भांश्च भाजितान् ॥
तदर्धपरिमाणांश्च न्यसेद्दिक्षु विदिक्षु च । तेषु चाष्टौ [2]दिशाधीशाः शक्राद्याः संस्थिताः क्रमात्॥

[कुम्भपूजा]

ततस्तु देशिकः शान्तो नवाम्बरधरः शुचिः । धृतपञ्चाङ्गभूषश्च सोष्णीषः सोत्तरीयकः ॥
मौनी [3]देहं शिवीकृत्य प्रसन्नः प्रियदर्शनः । वृषेन्द्ररूपं स्मृत्वा तु हृदि पङ्कजगह्वरे ॥ २७ ॥
प्राणायामसमायुक्तं [4]हृदयाग्रेसरं वृषम् । पुष्पैरञ्जलिमापूर्य कुम्भाम्भसि मनोरमे ॥ २८ ॥
आवाहनादिकं सर्वं कृत्वा पूर्वोक्तवत्सुधीः । मूलमन्त्रं न्यसेत्साङ्गं प्रथमे वृषमर्चयेत् ॥ २९ ॥
गन्धपुष्पादिभिः सर्वैर्लोकपालांश्च पूजयेत् । वृषेन्द्रस्य तु मुद्गान्नमन्येषां शुद्धमुच्यते ॥ ३० ॥

[होमः[5]]

ततो होमं प्रकुर्वीत देशिकः साधकैः सह । अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम् ॥
पूर्वादिष्विन्द्रकीनाशपाशिसोमान्क्रमेण तु । प्रधाने वृषभेन्द्रं च समावाह्यार्चयेत्ततः ॥ ३२ ॥

---

cf. *Kāmikāgama*, I, 74, 71-74a :
मध्यकुम्भे वृषः प्रोक्तः परितोऽष्टसु लोकपाः । अथ विद्येश्वरान्वापि वृषस्य परितो न्यसेत् ॥
उक्षा च गोपतिश्चापि शङ्कुकर्णस्तथैव च । तीक्ष्णशृङ्गस्तथा नन्दी विषाणी पशुभृत्तथा ॥
महोदरोऽष्टमश्चैतान्स्वस्वबीजेन विन्यसेत् । संपूज्य गन्धपुष्पाद्यैर्मुद्गान्नं तु निवेदयेत् ॥
चरुकल्पे तथैव स्यात्तत्त्वमूर्त्यादिकं न्यसेत् ।

[1] A : तत्तत्पार्श्वे
[2] D : दिशामीशाः
[3] A : संहतीकृत्य pour देहं शिवीकृत्य
[4] A : हृदयाग्रे घरं
[5] Cf. *Dīptāgama*, 68, 34-38a :
ततो होमं प्रकुर्वीत शास्त्रदृष्टेन कर्मणा । पलाशौदुम्बराश्वत्थवटाः पूर्वादितः क्रमात् ॥
समिदाज्यचरूँल्लाजांस्तिलसिद्धार्थमाषकान् । प्रत्येकं जुहुयाद्धीमाञ्शतमर्धार्धमेव च ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् । तत्तद्बीजं समुच्चार्य हुनेद्ध्यानविशेषतः ॥
आज्यादि माषपर्यन्तं जुहुयाद्धृदयादिभिः । द्रव्यान्ते व्याहृतिं हुत्वा द्रव्यान्ते तु त्रियम्बकम् ॥
एवं जागरणं रात्रौ "
cf. *Vīrāgama*, 72, 25b-28 :
ततो होमं प्रकुर्वीत पलाशसमिधा सह । समिदाज्यचरूँल्लाजान्सर्षपेण समन्वितान् ॥
ईशानादीनि सद्यान्तं क्रमान्मन्त्रमिहोच्यते । वृषगायत्रिमन्त्रेण आज्येनैव शताहुतिः ॥
वृषं स्पृष्ट्वा तु द्रव्यान्ते व्याहृतिं जुहुयात्ततः । गौर्धेनुभव्यमन्त्रेण चरुं हुत्वा शताहुतिम् ॥
हव्यवाहादिमन्त्रेण पूर्णाहुतिमथाचरेत् ।
cf. *Kāraṇāgama*, II, 87, 15b-16 :
अग्निकार्यं समाराध्य होमं कृत्वा विशेषतः । मूलमन्त्रेण हुत्वा तु गायत्र्या होमयेत्ततः ॥
प्रायश्चित्ताहुतिं कृत्वा घटे संयोजयेत्ततः ।

समिदाज्यचरूँल्लाजांस्तिलनिष्पावमुद्गकान् । साङ्गेन मूलमन्त्रेण जुहुयात्क्रमशः[1] पुनः ॥३३॥
[2]प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात् । प्रधाने तु [3]पलाशश्च समिदित्थं प्रकल्पयेत्॥३४॥
द्रव्यान्ते व्याहृतिं हुत्वा तत्तन्मन्त्रैः स्पृशेद्वृषम् । वृषगायत्रिमन्त्रेण प्रतिकुण्डं च सर्पिषा ॥
[4]दशाहुतिं ततो हुत्वा परिषिच्य समापयेत् । होमकाले प्रयुञ्जीत दिक्ष्वध्ययनमुत्तमम् ॥३६॥
[5]शांकरेऽस्त्रजपः कार्यः[6] सर्वातोद्यसमन्वितम् । एवं कृत्वाधिवासं तु त्यक्त्वा रात्रिं तु [7]जागरात्॥

[कुम्भाभिषेकः[8]]

प्रभाते विधिवत्स्नात्वा नित्यकर्म समाप्य च । प्रविश्य मण्टपं तत्र कुम्भस्थानर्चयेत्सुरान्॥३८॥
पूर्णाहुतिं च [9]मूलेन सर्वत्र जुहुयात्क्रमात् । सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ॥ ३९ ॥
[10]तदर्थं वृषमुत्थाप्य स्नानवेद्यां तु विन्यसेत्[11] । वस्त्रकूर्चादिकं सर्वमपनीय विचक्षणः ॥४०॥
अर्घ्यं दत्त्वा वृषेन्द्रस्य मूलमन्त्रेण मूर्धनि । वृषगायत्रिमन्त्रेण [12]गन्धोदमभिषेचयेत् ॥ ४१ ॥
ततः कुम्भान्समादाय कृत्वा धाम्नि प्रदक्षिणम् । वृषाग्रे स्थण्डिलं कृत्वा पूर्ववत्पूजयेत्ततः ॥
[13]प्रधानकुम्भसंस्थं च ध्यात्वा च वृषभेश्वरम् । तस्मात्कूर्चाम्भसा मूर्ध्नि [14]स्रवता मूलमुच्चरन्॥
वृषेन्द्रमन्त्रदेहं तु विन्यसेच्छान्तमानसः । अङ्गानि च तदङ्गेषु हृदयादीनि विन्यसेत् ॥४४॥
लोकपालघटैश्चापि [15]तत्रस्थैरभिषेचयेत् । अर्घ्यादिभिश्च संपूज्य नैवेद्यान्तैर्यथाक्रमम् ॥ ४५ ॥

---

[1] D : कर्मशः pour क्रमशः [2] A : प्लक्षोदुम्बरमश्वत्थवटौ [3] A : पलाशं च

[4] On attend दशाहुतीः ; le mot दशाहुतिं peut s'expliquer seulement comme मध्यमपदलोपिकर्मधारय avec le sens दशसंख्याकाहुतिं॰

[5] A : शंकरे pour शांकरे [6] A : जपं कार्यं pour जपः कार्यः [7] A : जागरम्

[8] Cf. *Kāraṇāgama*, I, 60, 116b-125a :
व्यपोह्य रात्रिशेषं तु प्रभाते विमले ततः । आचार्यो मूर्तिपैः सार्धं स्नानं कृत्वा विशेषतः ॥
कुम्भं च प्रतिमां चैव पूजयेयुर्हृदा तथा । जयादिरभ्याधानं च राष्ट्रभृज्जुहुयुः क्रमात् ॥
मूलमन्त्रैश्च जुहुयुः प्रत्येकं शतसंख्यया । आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥
निष्कत्रयं ददेद्धीमान्प्रत्येकं तु विशेषतः । पूजयेन्मूर्तिधारांश्च भक्तान्संपूजयेत्ततः ॥
मुहूर्तनाडिकापूर्वे स्थापनं तु समारभेत् । प्रासादाभ्यन्तरे तत्तन्मानुषप्रतिमां न्यसेत् ॥
सुस्निग्धं कारयित्वा तु पुण्याहं वाचयेत्ततः । पूर्णाहुतिं च शिरसा यदस्येति तदन्तिके ॥
जुहुयुर्वै क्रमेणैव पश्चादग्निं विसर्जयेत् । मुहूर्ते समनुप्राप्ते स्थापकः स्था[स्ना?]पनं कुरु[चरेत्?] ॥
तत्तत्कुम्भं समुद्धृत्य स्थाप्य बिम्बाग्रकेषु च । न्यासं क्रमेण विन्यस्य पञ्चब्रह्मषडङ्गकान् ॥
बीजान्यादाय कुम्भेभ्यो न्यसेयुर्बिम्बहृत्सु च । यजेयुर्गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदा क्रमात् ॥

[9] A : कुण्डे तु pour मूलेन [10] A : ततस्तं pour तदर्थं

[11] A ajoute पूर्णाहुतिं तु मूलेन सर्वत्र जुहुयात्क्रमात् ; voir *śloka* 39a

[12] D : गन्धोदेनाभिषिच्य च [13] A : प्रधानं कुम्भसंस्थं च

[14] A : स्रुवता [15] D : मन्त्रैस्तान् pour तत्रस्थैर्

[चलस्याचलस्य वृषारूढमूर्तिसंविधस्थस्य च वृषस्य स्थापने विशेषः][1]

मालाभरणवस्त्राद्यैरलंकृत्य वृषेश्वरम् । चलं चेत्स्थापयेदग्रे[2] दिव्यलिङ्गस्य देशिकः ॥ ४६ ॥
अचले [3]स्थापितस्यैव मन्त्रन्यासं समाचरेत् । वृषस्तिष्ठति वा यत्र देवेन सह विष्टरे ॥ ४७ ॥
[4]सहाक्ष्युन्मीलनादीनि कृत्वा कर्माणि मन्त्रवित् । प्रधानकुण्डे तस्यापि होमं मूलेन कारयेत्॥
[5]अङ्गैश्चाद्यैर्नवैकेन प्रत्येकं तु [6]शताहुतिम् । कुम्भन्यासश्च कर्तव्यो देवकुम्भसमीपके[7] ॥ ४९ ॥
[8]शेषं कर्म च कुर्वीत देवदेव्योरनन्तरम् । एवं संस्थाप्य विधिवद्वृषेन्द्रं पुत्रवृद्धिदम् ॥ ५० ॥
सर्वान्कामांश्च संप्राप्य देहान्ते तु शिवं व्रजेत् ॥ ५१ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [9]वृषेन्द्रप्रतिष्ठाविधिः
षट्चत्वारिंशः पटलः ॥

---

[1] Cf. *Kāmikāgama*, I, 74, 1b-3 ; 7 ; 9b-11 ; 77 :
अन्तर्द्वारस्य पूर्वस्मिन्कल्पयेत्प्रथमं वृषम् । द्वितीयं मण्टपाग्रे तु पीठात्पूर्वे तृतीयकम् ॥
पीठे पीठे विशेषेण पश्चिमे वृषभस्थितिः । पीठार्धं वा समं तत्र द्विगुणं त्रिगुणं तु वा ॥
त्यक्त्वा चतुर्गुणं वापि तस्याग्रे स्थापयेद्वृषम् ।...........
लोहजं संयजेद्द्वारे परिवारे तु शैलजम् । पीठाग्रे मृण्मयं प्रोक्तं शैलं वा तत्र संमतम् ॥........
अथ सामान्यलिङ्गस्य पुरस्ताद्वृषभो मतः । स्वयम्भुबाणलौहाख्यं रौद्रलोके प्रपूजितम् ॥
लोकपालाङ्कितं सिद्धं शतसाहस्रलिङ्गकम् । मुखलिङ्गं च बेरं च विशिष्टं लिङ्गमीरितम् ॥
तदन्यत्र वृषः प्रोक्तस्तत्रापि कथितस्तु वा । ...............
चलं चेद्वृषभस्थानं वेद्यन्ते च स्वदेशके । मूलमन्त्रेण संस्थाप्य गन्धपुष्पादिभिर्यजेत् ॥
cf. *ibid*, II, 62, 15-33 :
कालेऽङ्कुरार्पणं रत्नन्यासं संप्रोक्षणं नयेत् । वृषस्य नेत्रमोक्षं तु शुद्धिं ग्रामप्रदक्षिणम् ॥
जलाधिवासनं कृत्वा मण्टपं पूर्ववन्नयेत् । कुण्डानि नवपञ्चैकसंख्यया तत्र कल्पयेत् ॥
चतुरश्राणि वृत्तानि तद्दिगश्राणि तानि वा । पश्चाच्छिलिपनमुद्वास्य तस्मिन्विप्रांस्तु भोजयेत् ॥
पुण्याहप्रोक्षणं कृत्वा स्थण्डिलं शयनं नयेत् । स्नपनं कौतुकं कुर्याद्वृषेऽपि च यथोदितम् ॥
आरोप्य शयने पश्चात्कुम्भान्संस्थापयेत्ततः । शिवस्य च शिरोदेशे शिवकुम्भं च वर्धनीम् ॥
यदि भिन्नो वृषो देवपादमूले तु शाययेत् । दक्षमस्तकसंयुक्तां शय्यां संकल्प्य वै पृथक् ॥
वृषमस्तकदेशे तु वृषकुम्भं तु विन्यसेत् । परितोऽष्टघटान्न्यस्त्वा विद्येशांस्तत्र पूजयेत् ॥
गन्धपुष्पादिभिर्धीमान्नैवेद्यान्तैर्गुरूत्तमः । तत्त्वमूर्त्यादिविन्यासं कृत्वा देवे वृषेऽपि च ॥
अग्निकुण्डादिसंस्कारं कृत्वा होमं समाचरेत् । समिदाज्यान्नलाजादितिलसर्षपमाषकैः ॥
पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च । शम्यपामार्गश्रीवृक्षमायूरोत्था भवन्ति हि ॥
प्रधानेऽपि पलाशः स्यात्तर्पयेत्तत्र वै वृषम् । ततो द्वितीये संतर्प्य देवान्कुम्भांश्च पावकान् ॥

समूर्तिपो गुरुः सम्यग्वस्त्रहेमादिपूजितः । संप्राप्तदक्षिणः पश्चान्मन्त्रन्यासं समाचरेत् ॥
घटान्न्यस्त्वा तु देवाग्रे स्थण्डिले तु गुरुः क्रमात् । कुम्भाद्बीजं समादाय देवस्य हृदि विन्यसेत् ॥
वर्धन्या मनुमादाय तस्य पीठे तु विन्यसेत् । सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत् ॥
वृषकुम्भान्मनुं हृत्वा वृषस्य हृदि विन्यसेत् । अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत् ॥
विभिन्नपीठा देवी चेत्प्रतिष्ठां पृथगाचरेत् । कल्याणं कारयेत्पश्चात्तद्विधानेन देशिकः ॥
उत्सवं स्नपनं भूरि नैवेद्यं कारयेन्न वा । अनुक्तमत्र संग्राह्यं सामान्यस्थापनोदितम् ॥
इत्याख्याता प्रतिष्ठेयं वृषवाहनमूर्तिनः । घनो वाप्यघनो वापि वृषभः स च संमतः ॥
प्रतिष्ठानुष्ठिता येन भक्त्या भावनया सह । लभते संपदं शैवीं भुक्त्वा भोगान्यथेच्छया ॥

[2] A : इष्टैः pour अग्रे
[3] A : स्थापिते ह्येवं
[4] A : सहाक्षीज्वलानादीनि
[5] D : अङ्गैश्चाद्यैर्नवे केन
[6] Voir p. 138 note 4
[7] D : समीपगे pour समीपके
[8] A : शेषकर्म च
[9] A : वृषेन्द्रप्रतिष्ठाविधिश्चत्वारिंशः पटलः ; D : वृषेन्द्रप्रतिष्ठापटलः । ग्रन्थं ५१

## [सप्तचत्वारिंशः पटलः]

### [[1]ब्रह्मप्रतिष्ठाविधिः[2]]

प्रतिष्ठां ब्रह्मणो वक्ष्ये धर्मकामार्थमोक्षदाम्[3] ।

[कुण्डकल्पनम्[4]]

मण्टपे पूर्ववत्क्लृप्ते [5]पूर्वादिचतसृष्वपि ॥ १ ॥

दिक्षु कुण्डानि कुर्वीत चतुरश्रार्धचन्द्रके[6] । [7]वृत्तं त्रिकोणकं चैव पद्ममीशानगोचरे ॥ २ ॥

सर्वकर्म ततः कुर्यात्तस्य संस्कारपूर्वकम्[8] । [9]ब्राह्ममर्चां ततः कुर्यान्नीत्वा च [10]स्नानमण्टपम् ॥

[नेत्रोन्मीलनम्[11]]

नेत्रोन्मीलनकर्माद्याः पूर्ववत्परिकल्पयेत् । चतुर्ष्वपि मुखेष्वेषु नयनेष्वष्टसु क्रमात् ॥ ४ ॥

पूर्ववन्मधुसर्पिर्भ्यां तर्पयेन्मन्त्रवित्तमः । नेत्रयोः प्रतिवक्त्रं तु सूर्यसोमाणुमुच्चरन् ॥ ५ ॥

---

[1] Ce paṭala se trouve dans les manuscrits A et D seulement ; A : ब्रह्मप्रतिष्ठा

[2] Pour ब्रह्मप्रतिष्ठाविधि voir *Kāmika* I, 72, *Kāraṇa* I, 60 et *Vimala* 30

[3] Cf. *Vimalāgama*, 30, 1-3a :
अथातः संप्रवक्ष्यामि ब्रह्मस्थापनमुत्तमम् । पवित्रं परमं पुण्यं पूज्यं पापविनाशनम् ॥
सर्वसिद्धिकरं नृणां शिवालयशुभावहम् । ब्राह्मणानां स्थिरं नित्यं राजराष्ट्रशुभंकरम् ॥
वीरभद्र विशेषेण शृणु साधु समाहितः ।

[4] Cf. *Vimalāgama*, 30, 10b-15a :
प्रासादस्योत्तरे भागे मण्टपं चतुरश्रकम् । अष्टद्वयस्तम्भयुतं चतुर्द्वारं सुतोरणम् ॥
वितानध्वजसंयुक्तं नानालंकारसंयुतम् । दशायुधसमायुक्तमष्टमङ्गलशोभितम् ॥
दर्भमालासमायुक्तं कारयेत्सुप्रयोगतः । तन्मध्ये वेदिकां कुर्यादुपवेदिसमन्विताम् ॥
प्रधानं वृत्तकुण्डं तु चतुरश्रं तु पूर्वके । त्रिकोणं यमदिग्भागे पश्चिमे पद्ममेव च ॥
उत्तरे योनिकुण्डं तु कारयेत्क्रमशः सुधीः । ब्राह्मणान्भोजयेत्तत्र पुण्याहं वाचयेत्ततः ॥

[5] D : पूर्वादिषु चतसृष्वपि

[6] D : चन्द्रकम् pour चन्द्रके

[7] A : वृत्तत्रिकोणकं

[8] A : पूर्ववत् pour पूर्वकम्

[9] A : ब्रह्ममर्चां ; on attend ब्राह्मीमर्चां

[10] A : स्नानमण्टपे

[11] Cf. *Kāraṇāgama*, I, 60, 91b-93a :
नयनमोक्षणं कुर्यान्नेत्रद्वययुते दिने । पक्ष्मरेखां पुरा कृत्वा ततो वै कृष्णमण्डलम् ॥
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन् । लेपयेद्धृदयेनैव मधुना च घृतेन च ॥

[बेरशुद्धिः[1]]

पूर्ववच्छेषकर्माणि तत्र कुर्याद्विचक्षणः । [2]ततस्तां प्रतिमां मृद्भिः पञ्चभिः पञ्चगव्यकैः ॥ ६ ॥
शोधयेत्क्षालयेत्पश्चाद्ब्रह्मगायत्रिमुच्चरन् । पुण्याहं वाचयित्वात्र [3]मालाकूर्चसमावृतम् ॥ ७ ॥

[जलाधिवासः[4]]

बेरं नवाम्बरेणैव वेष्टयित्वा जलाशयम् । नीत्वा तज्जलमध्ये तु [5]नाभिदघ्ने जले सुधीः ॥ ८ ॥
प्राक्छिरस्कां तु तां तत्र शाययेत्प्रतिमां ततः । तत्रापि पूर्ववन्नीत्वा [6]कालं बेरं समानयेत् ॥

[शयनाधिवासः[7]]

स्नानमण्टपमध्ये तु नालावटसमन्विते । वेदिकायां तु तां [8]न्यस्य [9]त्यक्त्वा कूर्चादिकं ततः ॥
गायत्र्या प्रणवेनापि गन्धोदेनाभिषेचयेत् । पुण्याहं वाचयित्वात्र बन्धयेत्कौतुकं हृदा ॥ ११ ॥
मालाभिर्लम्बकूर्चेन वेष्टयेत्प्रतिमां ततः । ततो मण्टपवेद्यां तु[10] स्थण्डिलं तत्र कल्पयेत् ॥ १२ ॥
[11]पूर्ववच्छयनं चापि पुण्याहं तत्र कारयेत् । वास्तुहोमादिकं सर्वं पूर्ववत्परिकल्पयेत् ॥ १३ ॥
ततो देवं समानीय पश्चिमेनोत्तरेण [12]वा । द्वारेण तत्र शय्यायां शाययेत्प्रणवेन तु ॥ १४ ॥
ततो बेरं समाच्छाद्य पीतेनाहतवाससा । अर्घ्यं दत्त्वाथ शिरसि प्रणवं समुदाहरन् ॥ १५ ॥

[कुम्भस्थापनम्[13]]

ब्रह्मकुम्भं तदा तत्र द्रोणपूरं मनोरमम् । वेष्टितं सितसूत्रेण गन्धोदपरिपूरितम् ॥ १६ ॥

---

[1] Cf. *Kāraṇāgama*, I, 60, 93b-94a :
मृदम्भसा तु संस्नाप्य गव्यैनैवाभिषेचयेत् । पुण्याहं वाचयित्वा तु प्रोक्षयेत्पुरुषेण तु ॥

[2] A : तत्रस्थां
[3] D : मालां कूर्चसमावृतम्

[4] Cf. *Vimalāgama*, 30, 8b-10a :
ग्रामं प्रदक्षिणीकृत्य सर्ववैभवसंयुतम् । नृत्तगीतप्रवाद्यैश्च स्तोत्रमङ्गलवाचकैः ॥
नद्यां वापि तटाके वा पुण्यतीर्थे विशेषतः । जलाधिवासनं कुर्याद्वेदघोषैः समन्वितम् ॥

[5] A : नाभिमग्नजले
[6] A : कालबेरं

[7] Cf. *Vimalāgama*, 30, 15b-18a :
जलादुत्तीर्य लोकेशं प्रच्छादनपटेन च । संवेष्ट्य दिव्यसर्वाङ्गं कूर्चयुग्मेन बन्धयेत् ॥
शालिभिस्तुण्डुलैश्चैव दर्भैः पुष्पैश्च कम्बलैः । कारयेत्पञ्चशयनं तन्मध्ये प्रतिमां न्यसेत् ॥
प्राक्शिरश्चोर्ध्ववक्त्रं च गन्धपुष्पैः समर्चयेत् । कौतुकं बन्धयेद्धीमान्ब्रह्मजज्ञानमन्त्रतः ॥

[8] A : न्यस्त्वा pour न्यस्य
[9] A : नीत्वा pour त्यक्त्वा
[10] A : वेद्यास्तु pour वेद्यां तु
[11] A : पूर्ववच्छयनाच्चापि
[12] D : च pour वा

[13] Cf. *Vimalāgama*, 30, 18b-20 :
प्रतिमायाः शिरोदेशे ब्रह्मकुम्भं प्रकल्पयेत् । तिसृभिः शक्तिसंयुक्तां कारयेद्वर्धनीं ततः ॥
ततो दिव्यऋषीन्सप्त सप्तकुम्भेषु पूजयेत् । दिक्पालानष्टकुम्भेषु पूजयेत्क्रमशस्तथा ॥
रक्तैर्वस्त्रैः फलैः कूर्चैः पुष्पैः कुम्भान्प्रपूजयेत् ।

हिरण्यपद्मसंयुक्तं सकूर्चं सापिधानकम् । आवेष्टयाहतवस्त्राभ्यां [1]स्थापयेद्वेदिमध्यमे ॥ १७ ॥
परितश्च ततः कुम्भांस्तादृशानपि विन्यसेत् । [2]तदर्धपरिमाणांश्च तदर्थेषु यजेत्क्रमात् ॥ १८ ॥

[कुम्भपूजा]

[3]चतुर्भुजं चतुर्वक्त्रमासीनं कमलासने[4] । बद्धपद्मासनं देवं हेमाभं शुभ्रवाससम् ॥ १९ ॥
वरदाभयहस्तं च कमण्डल्वक्षधारिणम् । ध्यात्वा [5]कुम्भाम्भसि स्थाप्य मूलमन्त्रं समुच्चरन्॥२०
आवाहनादिकं कृत्वा गन्धपुष्पादिभिर्यजेत् । लोकपालान्यथास्थानं तत्तन्मन्त्रैः समर्चयेत् ॥

[होमः[6]]

ततो होमं प्रकुर्वीत कुण्डेषु परितः क्रमात् । अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम् ॥
[7]तत्तदाशाधिपान्कुम्भेष्वभितः पूजयेत्ततः । ब्रह्माणं तु प्रधानेऽत्र साङ्गं संपूजयेत्ततः ॥ २३ ॥
समिदाज्यचरूंश्चापि तिलवेणुयवानपि । माषं च क्रमतो मन्त्रैरङ्गैर्मूलादिभिर्बुधः ॥ २४ ॥
जुहुयाच्छतमर्धं वा तदर्धं वा पृथक् पृथक् । [8]पुक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात् ॥२५॥
[9]पलाशस्तु प्रधानस्य समिदित्थं प्रकल्पयेत् । एवं कृत्वा [10]तु सर्वेषु गायत्र्या होममाचरेत्॥२६॥
[11]आज्येनैकेन तत्संख्यां पूर्ववत्परिकल्पयेत् । ततो होमं समाप्यैवं परिषिच्य च पावकम् ॥२७॥
दद्यात्कुम्भस्थितानां तु हविस्तत्र दिवौकसाम् । रात्रिशेषं ततो नीत्वा प्रातरुत्थाय देशिकः॥२८॥

[ अधिवासनानन्तरकृत्यम् ]

[12]कृतनित्यक्रियः शान्तो मूर्तिपैः सह मन्त्रवित् । प्रविश्य मण्टपं [13]तत्र धृतपञ्चाङ्गभूषणः॥२९॥
सोष्णीषः सोत्तरीयश्च कृत्वा मन्त्रात्मिकां [14]तनुम् । देवान्संपूज्य तत्रस्थान् स पूर्णां तत्र दापयेत्॥
व्याहृत्यन्तेन मूलेन परिषिच्य च पावकम् । उत्थाप्य शयनाद्देवं[15] नीत्वा धाम्नि प्रदक्षिणम्॥
[16]रथादिभिः प्रविश्यान्तो दत्त्वार्घ्यं प्रतिमाहृदि । [17]नवरत्नादि विन्यस्य पूर्ववत्पीठिकावटे ॥३२

---

[1] D : स्थापयेदेव मध्यमे
[2] A : तदर्धपरिमाणं च
[3] A : चतुर्मुखं
[4] A : कमलासनम्
[5] A : कुम्भमपि
[6] Cf. *Vimalāgama*, 30, 21-25a :
अथाचार्यः प्रसन्नात्मा होमकर्म समारभेत् । पलाशैर्ब्रह्मपुष्पैश्च बिल्वैरश्वत्थपुष्पकैः ॥
दूर्वाभिश्च हुनेन्मन्त्री ब्रह्मजज्ञानमन्त्रतः । पायसेन तिलैर्मुद्गैर्लाजैश्च सर्षपैः क्रमात् ॥
ब्रह्मजज्ञानमन्त्रेण गायत्र्या च हुनेत्क्रमात् । पञ्चब्रह्मषडङ्गैश्च विष्णु[विधि?]मन्त्रेण होमयेत् ॥
प्रत्येकं शतमर्धं वा हुनेच्छक्त्या ततः क्रमात् । द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेद्बिम्बं समन्त्रकम् ॥
एवं जागरणं कृत्वा "
[7] A : तत्तद्देशाधिपान्
[8] A : प्लक्षोदुम्बरमश्वत्थवटं
[9] A : पलाशं तु
[10] A : तु षष्ठे तु pour तु सर्वेषु
[11] A : आज्येन तेन pour आज्येनैकेन
[12] A : कृतनित्यकृताशान्तो
[13] D : पश्चात् pour तत्र
[14] A : मन्त्राकृतिं pour मन्त्रात्मिकां
[15] D : देवान् pour देवं
[16] A : धारादिभिः
[17] A : नवरत्नानि

तत्र वागीश्वरीं पूज्य पीठपार्श्वे [1]स्थात्ततः । [2]अवतीर्णां तदा तत्र प्रतिमां स्थापयेत्सुधीः ॥ ३३ ॥
मूलमन्त्रं समुच्चार्य मूलस्याभिमुखं तथा । [3]पूर्ववत्पीठविश्लेषसंधिं कृत्वा विचक्षणः ॥ ३४ ॥
[4]शिल्पिकर्माणि निष्पाद्य [5]विसृज्यैनं सपर्यया । [6]कृतस्नानस्ततो मन्त्री कृत्वा मन्त्रात्मिकां [7]तनुम्
देवान्कुम्भेषु संपूज्य समुद्धृत्याथ तान्क्रमात् । प्रदक्षिणक्रमादन्तर्भवनं संप्रविश्य च ॥ ३६ ॥
यथास्थानं घटानग्रे स्थण्डिले स्थाप्य पूजयेत् । गन्धपुष्पादिभिः पश्चादर्चां शुद्धोदकेन च ॥३७॥
पञ्चामृतपञ्चगव्यैश्च शोधयित्वाभिषिच्य च । पुण्याहं वाचयित्वा तु [8]मन्त्रन्यासं [9]समर्चयेत् ॥
उत्तराभिमुखः सम्यगासीनः सुखमासने । हृदयादीनि चाङ्गानि विन्यसेद्धस्तयोर्द्वयोः ॥३९॥
अङ्गुष्ठादिकनिष्ठान्ते[10] नेत्रान्तं तु तलद्वयोः । अस्त्रं विन्यस्य चाङ्गेषु [11]हृदयादि हृदादिषु ॥
विन्यसेत्क्रमशो मन्त्री मूलं हृन्मध्यमे न्यसेत् । एवं मन्त्रात्मिकां कृत्वा तनुं देवं विचिन्तयेत् ॥

[ प्रतिष्ठा[12] ]

ततः कुम्भार्चितं देवं मूलमन्त्रं समुच्चरन् । प्रतिमाहृदि विन्यस्य पूर्ववन्मन्त्रवित्तमः ॥ ४२ ॥
अङ्गेष्वङ्गानि चाप्यस्य विन्यसेद्धृदयादिषु । ततो मूलं समुच्चार्य गन्धपुष्पादिभिर्यजेत् ॥४३॥
प्रभूतं च हविर्दत्त्वा ताम्बूलं च प्रदापयेत् ॥ ४४ ॥

इत्यजिताख्ये महातन्त्रे [ क्रियापादे ] [13]ब्रह्मप्रतिष्ठाविधिः
[14]सप्तचत्वारिंशः पटलः ॥

---

[1] A : स्वरान्ततः [2] A : अवत्तीर्णं [3] A : पूर्ववच्चापि pour पूर्ववत्पीठ
[4] A : शिल्पकर्मणि [5] A : विसर्ज्यैनं [6] A : कृतज्यादष्टतो मन्त्री
[7] A : मन्त्रादिकां [8] D : मन्त्रं न्यासं [9] A : समापयेत्
[10] A : नेत्रान्तं नयनद्वयोः [11] A : हृदयादिषु विन्यसेत्
[12] Cf. *Vimalāgama*, 30, 25b-30 :
" प्रातः संस्थापनं कुरु । जीवन्यासं ततः कुर्यात्प्रतिष्ठातन्त्रवित्तमः ॥
बिम्बे प्राणं प्रतिष्ठाप्य कुम्भतोयेन पूजयेत् । मूलमन्त्रेण गन्धाद्यैरलंकृत्य पितामहम् ॥
अन्नं चतुर्विधं भूरि नैवेद्यं च निवेदयेत् । पाद्याचमनताम्बूलमुखवासादिकं कुरु ॥
ततो नीराजनं कुर्याद्द्वित्रैश्च परिचारकैः । आचार्यपूजनं पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥
गोभूतिलहिरण्यादिदशदानादि कारयेत् । एवं दिव्यऋषीणां च प्रतिष्ठां कारयेत्क्रमात् ॥
एवं यः कुरुते मर्त्यो याति ब्रह्मपदं परम् ।
cf. *Kāmikāgama*, I, 72, 9b-11 :
ततः प्रभाते बिम्बाद्यं कुम्भानग्नींश्च पूजयेत् । दक्षिणां दापयेत्पश्चादाचार्यादेर्विधानतः ॥
निष्कादिदशनिष्कान्ता गुरावन्येषु पूर्ववत् । मुहूर्तनाडिकापूर्वं मन्त्रन्यासं समारभेत् ॥
कुम्भाद्बीजं समादाय विन्यसेत्स्वस्वदेशके ।
[13] D : ब्रह्मप्रतिष्ठाविधिपटलः । ग्रन्थं ४४ [14] A : एकचत्वारिंशः पटलः

## [अष्टचत्वारिंशः पटलः]

## [[1]मातृकास्थापनविधिः[2]]

[मातृकास्थापनोचितस्थानानि]

[3]मातृणां सगणानां तु स्थापनं कथ्यतेऽधुना । शिवालयेषु याम्ये स्याद्ग्रामादिष्वीशगोचरे॥१॥
सौम्ये वा तत्प्रशस्तं स्यान्नद्यादीनां च तीरके । उद्याने च वने रम्ये [4]पर्वते वा मनोरमे ॥२॥
विजने यत्र कुत्रापि स्थापयेद्देशिकोत्तमः । शिवालयेषु ग्रामादौ [5]स्थाप्या मध्ये तु वैष्णवी॥३॥
अन्यत्र मध्ये चामुण्डां स्थापयेद्विधिना [6]पुमान् ।

[मातृणामुत्पत्तिः[7]]

मातरो लोकरक्षार्थं ब्राह्म्याद्या [8]निर्मिताः पुरा ॥ ४ ॥
ब्रह्माणी ब्रह्मणा सृष्टा महेशेन महेश्वरी । कौमारी षण्मुखेनैव वैष्णवी विष्णुना तथा ॥ ५ ॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A et D seulement.

[2] Pour मातृकास्थापनविधि voir *Kāmika* I, 72, *Kāraṇa* I, 60, *Dīpta* 68, *Vīra* 74, *Santānasaṃhitā* 26 et *Suprabheda* I, 42 ; A : मातृकास्थापनम्

[3] A : सप्तानां मातृकाणां तु

[4] A : पञ्चस्थाने pour पर्वते वा

[5] A : स्थाप्य मध्ये तु वैष्णवीम्

[6] A : पुरा pour पुमान्

[7] Cf. *Mārkaṇḍeyapurāṇa*, 88, 12-22 :
ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः । शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥
यस्य देवस्य यद्रूपं यथा भूषणवाहनम् । तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥
हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥
माहेश्वरी वृषारूढा त्रिशूलवरधारिणी । महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥
कौमारी शक्तिहस्ता च मयूरवरवाहना । योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥
तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता । शङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥
यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः । शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥
नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः । प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥
वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता । प्राप्ता सहस्रनयना यथा शक्रस्तथैव च ॥
ततः परिवृतस्ताभिरीशानो देवशक्तिभिः । हन्यन्तामसुराः शीघ्रं मम प्रीत्याह चण्डिकाम् ॥
ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा । चण्डिका शक्तिरत्युग्रा शिवाशतनिनादिनी ॥

cf. *Suprabhedāgama*, I, 42, 1-7 :
अथातः संप्रवक्ष्यामि मातृणां स्थापनं परम् । नैर्ऋतस्य वधार्थाय ब्रह्मणा चापि निर्मिताः ।
ब्रह्माणीं ब्रह्मवत्कुर्यान्माहेशीमीश्वरोपमाम् । कुमारवच्च कौमारीं विष्णुवद्वैष्णवीं तथा ॥
क्रोडाननां तु वाराहीं वामिनीं तु हलायुधाम् । शक्राणीं शक्रवत्कुर्याच्चामुण्डीमुग्ररूपिणीम् ॥
सुविकीर्णजटाभारां श्यामवर्णां चतुर्भुजाम् । कपालशूलहस्तां च चामुण्डीं कारयेत्ततः ।
वरदाभयहस्तास्तु तत्तदायुधधारिणः । तत्तद्वर्णसमायुक्ता वाहनध्वजसंयुताः ॥
चतुर्भुजास्तु सर्वाश्च नलिनस्थाश्च संस्थिताः । वीरभद्रं तु पूर्वे तु विघ्नेशं पश्चिमे दिशि ॥
वीरासनस्थं वीरेशं विघ्नेशं च तथा कुरु । मृद्दारुशैललोहैर्वा कृत्वा तु प्रतिमा बुधः ॥

[8] D : रेमिताः पुरा

[1]वाराही यज्ञवाराहेणेन्द्राणीन्द्रेण चासृजत् । [2]कालरात्रिमुमा चैव [3]रूपवाहनचिह्नकैः ॥ ६ ॥
तैस्तैर्देवैः समाः सर्वाश्चामुण्डा चातिभीषणा । भ्रुकुटीकुटिला सा च [4]समस्तारिष्टमर्दनी ॥
[5]त्रिणेत्रा चतुर्भुजा चैव पिशाचध्वजवाहना । मातुरुत्पत्तिरुद्दिष्टा शृणु [6]मन्त्रानतः परम् ॥

[मातॄणां गणानां च मन्त्राः[7]]

यकारादिसकारान्तान्[8] ब्राह्म्यादीनां तु कल्पयेत् । बिन्दुनादसमायुक्तान्मूलमन्त्रानतः परम् ॥
तत्तन्नाम चतुर्थ्यन्तं नमस्कारेण योजयेत् । हकारं वीरभद्रस्य गणेशस्य गकारकम् ॥ १० ॥
एवं [9]मूलांश्च संकल्प्य चाङ्गान्येभ्यश्च[10] कल्पयेत् । पूर्ववद्धृदयादीनि प्रतिष्ठाविधिरुच्यते ॥

[मण्टपः, कुण्डानि च[11]]

तदर्थं मण्टपं कुर्यात्पूर्वोक्तविधिना सह । तन्मध्ये वेदिकां चापि [12]परितोऽग्निनिकेतनम् ॥
योन्याकारं तु सर्वासु दिक्षु कुण्डं प्रकल्पयेत् । ईशानशक्रगौ[13] कुण्डौ वृत्तवेदाश्रकौ मतौ ॥
शक्रशंकरयोर्मध्ये पद्मकुण्डं प्रकल्पयेत् । मण्टपस्याथ संस्कारमलंकारं च पूर्ववत् ॥ १४ ॥

---

[1] A : वाराही इन्द्रमेणैव इन्द्राणीन्द्रेण तत्सृजा [2] A : कालरात्री उमा चैव [3] D : रयि pour रूप
[4] A : सप्तम pour समस्त [5] A : त्रिणेत्राश्चतुर्भुजाश्चैव [6] A : मन्त्रान्यतः
[7] Cf. *Virāgama*, 74, I5-16 :
यरलवशषसहगकारं गणपतिं तथा । मायानलसमायुक्तं बिन्दुनादसमायुतम् ॥
मूलमन्त्रमिदं प्रोक्तं सर्वकामफलप्रदम् । ह्रस्वा ब्रह्म समाख्याता दीर्घा ह्यङ्गानि चोच्यते ॥
cf. *Kāraṇāgama*, I, 60, 110b-112 :
कार्यकारणसंयुक्ताः सर्वे मन्त्राः प्रजापते । तेषामाद्यक्षरेणैव ब्रह्माङ्गानि प्रकल्पयेत् ॥
पञ्च ब्रह्माणि ह्रस्वाश्च षडङ्गाश्चैव दीर्घकाः । अस्त्रं विसर्गसंयुक्तं सानुस्वारं तु नेत्रकम् ॥
प्रणवादिनमोऽन्ताश्च मन्त्राः सर्वे प्रकीर्तिताः ।
[8] A : सकारान्ता pour सकारान्तान्
[9] La forme grammaticale correcte est मूलानि [10] A : अभ्यर्च्य pour एभ्यश्च
[11] Cf. *Virāgama*, 74, 19b-22 :
पूर्ववन्मण्डपं कुर्यात्पूर्वोक्तेनैव मार्गतः । तन्मध्ये वेदिकां कुर्यात्परितः कुण्डमुच्यते ॥
चतुरश्रं योनिकुण्डमर्धचन्द्रं त्रिकोणकम् । वर्तुलं पञ्चकोणं च पद्मं चैवाष्टकोणकम् ॥
पूर्वादीनि क्रमान्न्यस्य कुण्डान्येतानि विन्यसेत् । इन्द्रईशानयोर्मध्ये सप्ताश्रं तु गणाधिपम् ॥
पुण्याहं वाचयेत्तत्र पवमानेन प्रोक्षयेत् ।
cf. *Santānasaṃhitā*, 26, 6b-9a :
पूर्वोक्तमण्टपे रम्ये मध्यमे वेदिका भवेत् । पूर्वे तु चतुरश्रं तु योनिमग्नौ प्रकल्पयेत् ॥
याम्यायामर्धचन्द्रं तु नैर्ऋत्यां तु त्रिकोणकम् । वृत्तकुण्डं तु वारुण्यां वायव्यां तु षडश्रकम् ॥
सोमे च पद्मकुण्डं स्यादीशान्यामष्टकोणकम् । इन्द्रईशानयोर्मध्ये वृत्तकुण्डं गणाधिपम् ॥
[12] D : परितो वै निकेतनम् [13] A : शक्रकौ pour शक्रगौ

[नेत्रोन्मीलनम्, बेरशुद्धिश्च]

नेत्रोन्मीलनकर्माणि[1] [2]पृथगेव प्रकल्पयेत् । शिल्पिनाथ गुरुस्तासां मधु दुग्धं च नेत्रयोः ॥
तत्तन्नयनमन्त्रेण दक्षिणेतरयोरपि । कल्पयेद्धैमया सम्यग्दूर्वया[3] कल्पवित्तमः ॥ १६ ॥
नेत्रत्रययुतानां तु लोचने तु ललाटके । सर्पिषा तर्पयेत्पश्चादग्निबीजं समुच्चरन् ॥ १७ ॥
हिरण्यनख[4]संप्रोतैरङ्गुल्यग्रैस्त्रिभिस्ततः । [5]तत्तन्नेत्रेषु सूर्येन्दुवह्निबीजानि विन्यसेत् ॥ १८ ॥
[6]अन्यासां सोमसूर्यौ च विन्यसेल्लोचनद्वये । ततश्च पञ्चगव्येन तत्तद्धृदयमुच्चरन् ॥ १९ ॥
अभिषिच्याथ मृद्भिश्च पञ्चभिस्ताश्च शोधयेत् । गन्धतोयेन पश्चात्तु पञ्चब्रह्मजपेन तु ॥२०॥

[जलाधिवासः[7]]

अभिषिच्य पृथक् पश्चात्पुण्याहं वाचयेत्सुधीः । ततस्ताः प्रतिमाः सर्वाः कूर्चमालाभिवेष्टिताः ॥
[8]वेष्टयेद्वाससा मन्त्री विशुद्धेन नवेन च । पृथक् पृथक् [9]ततो मन्त्री तासामर्घ्यं शिरस्सु च ॥
तत्तद्धृदयमुच्चार्य दद्यात्पश्चाद्रथादिभिः[10] । [11]ग्रामादि परितो नीत्वा गत्वा चैव जलाशयम् ॥
[12]स्थापनक्रमतः सर्वा जलमध्ये [13]तु शाययेत् । परितो [14]दिक्पतींश्चास्त्रान्[15] गन्धाद्यैरर्चयेत्ततः॥
जलाधिवासकालस्तु पूर्वमेव प्रदर्शितः ।

[स्नानमण्टपानयनम्]

ततस्ताः प्रतिमाः सर्वा विघ्नाद्यन्ताः[16] क्रमेण वै ॥ २५ ॥

उद्धृत्यारोप्य साये तु स्यन्दनादींस्तथैव च[17] । स्नानमण्टपमानीय स्नानवेद्यां तु विन्यसेत् ॥
क्रमेण वस्त्रकूर्चादीनपनीय च देशिकः । पञ्चामृतपञ्चगव्यैश्च [18]शुद्धिं पूर्ववदाचरेत् ॥ २७ ॥

---

[1] A : पूर्वायां pour कर्माणि  [2] A : पृथक्केवलकल्पयेत्  [3] D : पूर्वया pour दूर्वया
[4] D : संप्रोक्तैर् pour संप्रोतैर्  [5] A : तत्तन्नेत्रेन्दुसूर्येषु वह्निबीजांश्च
[6] D omet le demi-*śloka* 19a
[7] Cf. *Vīrāgama*, 74, 18b-19a :
जलाधिवासनं कुर्यात्पूर्वोक्तेन विधानतः । जलादुत्तीर्य पूर्वेद्युः प्रविशेदालयं प्रति ॥
cf. *Santānasaṃhitā*, 26, 9 b : त्रिरात्रं पञ्चरात्रं वा जले चैवाधिवासयेत् ।
[8] D : वेष्टयेद्वा यथा मन्त्री  [9] A : तथा pour ततो
[10] D : पश्चात्तु मन्त्रकैः pour पश्चाद्रथादिभिः  [11] D : ग्रामादौ pour ग्रामादि
[12] D : स्थापनं क्रमतः सर्वं  [13] D : यथा शयेत् pour तु शाययेत्  [14] D : दिक्पतींश्चापि
[15] Le mot अस्त्र se trouve dans ce texte au masculin au lieu du neutre.
[16] " विघ्नाद्यन्ताः " " वीरभद्रादिविघ्नेश्वरान्ताः "  [17] D : ततोऽपि च pour तथैव च
[18] D : शुद्धिपुण्याहमाचरेत्

[शयनाधिवासः[1]]

ततः पुण्याहमादौ तु कृत्वा तासां शिरस्सु च । अर्घ्यं दत्त्वा क्रमेणैव पूर्ववन्मन्त्रवित्तमः ॥
कौतुकं बन्धयेत्तासां बीजेन हृदयेन तु । वेदिकायां यथापूर्वं कल्पिते स्थण्डिले सुधीः॥२९॥
शयने पृथगास्तीर्णे प्रतिमास्ता यथाक्रमम् । वीरादिविघ्नपर्यन्ताः शाययेदष्टदिक्षु च ॥ ३० ॥
[2]या वात्र मध्ये संस्थाप्या तां तन्मध्ये निवेशयेत् । प्राक्शिरश्चोर्ध्ववक्त्रास्ताः[3] सर्वाश्च परिकीर्तिताः॥
तासामुपरि कूर्चं तु पुष्पवस्त्रसमन्वितम् । [4]कुशान् [5]गन्धं न्यसेन्मन्त्री तत्तद्धृदयमुच्चरन् ॥३२॥

[कुम्भस्थापनम्[6]]

वस्त्रैरावेष्ट्य सद्यस्तास्ततः कुम्भान्निवेशयेत् । द्रोणपूर्णान्दृढान्द्रव्यैः काञ्चनाद्यैश्च निर्मितान् ॥
सितसूत्रविचित्रांस्तान्[7] गन्धोदपरिपूरितान् । सकूर्चान्वस्त्रहेमाढ्यान् गन्धचन्दनचर्चितान्॥३४॥
[8]सितवस्त्रैः सुसंवेष्ट्य [9]पिहितांश्च पिधानकैः । [10]शिरसि दक्षिणे तासां मध्यात्प्रभृति विन्यसेत्॥
पुण्याहं वाचयित्वात्र प्रोक्षयेद्ब्रह्मपञ्चकैः । [11]ततस्तान्पूजयेत्सर्वान् पूजाविधिरथोच्यते ॥३६॥

[कुम्भपूजा]

वेद्या दक्षिणपार्श्वे तु सुखासीन उदङ्मुखः । प्राणायामत्रयं कृत्वा रेचकादिक्रमेण तु ॥ ३७ ॥

---

[1] Cf. *Virāgama*, 74, 23-26a :
शालिना विकिरेद्वेदीं तण्डुलं च तिलं न्यसेत् । शयनं पञ्चभिः कुर्यात्तस्योपरि न्यसेत्ततः ॥
ब्रह्माणीं मध्यमे स्थाप्य पूर्वे माहेश्वरीं न्यसेत् । कौमारीं वह्निदेशे तु वैष्णवीं दक्षिणे न्यसेत् ॥
वाराहीं नैर्ऋते चैव इन्द्राणीं पश्चिमे न्यसेत् । चामुण्डीं वायुदेशे तु उत्तरे वीरभद्रकम् ॥
ईशाने गणपतिं न्यस्य प्रच्छन्नपटसंयुतम् ।

[2] D : या येत्र pour या वात्र
[3] D : वक्त्राश्च pour वक्त्रास्ताः
[4] D : तासां pour कुशान्
[5] A : मन्त्री pour गन्धं

[6] Cf. *Virāgama*, 74, 26b–28a :
तस्यैव वामभागे तु कुम्भान्विन्यस्य देशिकः । अर्चयेद्गन्धपुष्पाद्यैः स्वस्वमन्त्रेण देशिकः ॥
वस्त्रेण वेष्टयेद्विद्वान्सुवर्णेनैव संयुतान् । हविर्निवेदयेत्पश्चात्ताम्बूलं दापयेत्ततः ॥

cf. *Santānasaṃhitā*, 26, 12b-13 :
प्रतिमावामपार्श्वे तु कलशं विन्यसेत्ततः । स्वस्वमन्त्रेण देवेशि अर्चयेद्गन्धपुष्पकैः ॥
नवरत्नेन संयुक्तं वस्त्रैरावेष्ट्य सर्वशः ।

[7] D : विचित्रांश्च pour विचित्रांस्तान्
[8] D : सितवस्त्रैश्च संवेष्ट्य
[9] A : विहितांश्च विधानकैः
[10] A : शिरसो pour शिरसि
[11] A : ततस्ताः पूजयेत्सर्वाः

दहनं [1]प्लावनं तत्र भूतशुद्धिं च कल्पयेत् । मध्यस्थायां च मूले तु करशाखासु विन्यसेत् ॥
हृदयाद्यस्त्रपर्यन्तं कनिष्ठाङ्गुष्ठकान्तकम् । नेत्रं हस्ततले [2]न्यस्य मूलं [3]सर्वासु विन्यसेत्॥३९॥
एवं कृत्वा करन्यासमङ्गन्यासमथाचरेत् । [4]हृदयादिषडङ्गानि यथास्थानं [5]प्रयोजयेत् ॥४०॥
ततो मध्यस्थितां देवीं ध्यात्वा हृत्पद्ममध्यमे। [6]तां घटस्थां घटे देवीं मूलमन्त्रं समुच्चरन्॥४१॥
आवाह्य शेषितं कर्म सर्वं पूर्ववदाचरेत् । तत्तदङ्गानि [7]विन्यस्य यथास्थानं समर्चयेत् ॥ ४२ ॥
एवं क्रमेण पूर्वादि [8]न्यस्य ध्यात्वा [9]तु पूजयेत् । ततो होमं तु कुर्वीत तद्विधानमथोच्यते ॥

[होमः[10]]

अग्निकार्योक्तमार्गेण स्थाप्य कुण्डेषु पावकम् । प्रधानकुण्डे तां देवीं मध्यास्त्रान्तं पृथग्यजेत् ॥
प्रागादिषु ततः [11]शेषा वीराद्याश्च क्रमाद्यजेत् । देशिकः स्यात्प्रधानस्य होता शेषेषु चाष्टसु ॥
कुण्डेषु साधकाः प्रोक्ता होतारः [12]पुत्रकास्तु वा । पलाशौदुम्बराश्वत्थवटप्लक्षमयूरकाः ॥४६॥
शमीखदिरबिल्वाश्च वीरादीनां यथाक्रमम् । [13]समिद्वृक्षाः समुद्दिष्टाः शेषद्रव्यमथोच्यते ॥
आज्यं चरुं तथा [14]लाजतिलसर्षपमेव च । एतानि सर्वकुण्डेषु होमयेद्धृदयादिभिः ॥ ४८ ॥
[15]तन्मूलेन समिद्धोमं सर्वत्र प्रथमं हरेत् । तत्तदङ्गैर्यथाहोमं [16]तत्तत्कुण्डेषु होमयेत् ॥ ४९ ॥

---

[1] D : धावनं pour प्लावनं

[2] A : न्यस्त्वा pour न्यस्य

[3] A : पूर्वासु pour सर्वासु

[4] D : हृदयानि षडङ्गानि

[5] D : प्रकल्पयेत्

[6] A : तान् घटस्थान् घटान् देवीमूलमन्त्वान् समुच्चरन्

[7] D : पूर्वेऽस्मिन् pour विन्यस्य

[8] A : न्यस्त्वा pour न्यस्य

[9] A : च pour तु

[10] Cf. *Vīrāgama*, 74, 28b-31 :

ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् । पलाशसमिधा युक्तं प्रत्येकं तु शताष्टकम् ॥
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । मुद्गं माषं च बिल्वं च कदलीफलसंयुतम् ॥
पञ्चब्रह्मषडङ्गैश्च प्रत्येकं तु शताहुतिः । घृतमिक्षेतिमन्त्रेण पञ्चविंशति होमयेत् ॥
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ।

cf. *Santānasaṃhitā*, 26, 14-18 :

ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् । समिदाज्यचरूंश्चैव सर्षपं च यवं तथा ॥
पलाशखदिराश्वत्थप्लक्षन्यग्रोधमेव च । शमीबिल्वमपामार्गमौदुम्बरसमित्क्रमात् ॥
तत्र मूलेन होतव्यं प्रासादेन तु संयुतम् । सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा ॥
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः । हुत्वा हुत्वा स्पृशेद्वेरान्स्वस्वमूलेन मन्त्रतः ॥
सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् । स्विष्टमग्नेति मन्त्रेण जुहुयात्तदनन्तरम् ॥

[11] D : शेषवीराद्याश्च [12] A : पुत्रकैस्तु वा [13] A : समित्प्लक्षाः [14] A : लाजं pour लाज

[15] D : तन्तन्मूले pour तन्मूलेन [16] A : तत्कुण्डेषु च pour तत्तत्कुण्डेषु

प्रतिद्रव्यावसाने तु [1]व्याहृत्यन्ते स्पृशेद्गुरुः । तत्तदङ्गेषु तन्मन्त्रं सर्वासां होतृभिः सह ॥
एवं होमे तु निर्वृत्ते देवतास्ताः समर्चयेत् । परिषिच्य ततस्तेषु कुण्डेष्वग्निं यथाविधि ॥ ५१ ॥
देवतानां हविः पश्चाद्दद्यात्सम्यग्यथाविधि[2] । नीत्वा रात्रिं च तच्छेषां प्रभाते होतृभिः सह ॥

[अधिवासानन्तरक्रिया[3]]

कृत्वा नित्यक्रियां सर्वां संप्रविश्याथ मण्टपम् । कुम्भस्था देवताः सर्वाः समभ्यर्च्य यथाविधि ॥
कुण्डेषु तास्तथा यष्ट्वा[4] तत्तन्मूलेन [5]दापयेत् । पूर्णाहुतिं [6]ततस्तत्र प्रतिमास्ताः समर्चयेत् ॥५४॥
[7]तत उद्धृत्य ताः सर्वाः क्रमेण प्रतिमाः शनैः । अपनीय च वस्त्राद्यं तत्तद्धृदयमुच्चरन् ॥
तत्तच्छिरसि दत्त्वार्घ्यं मध्यमां प्रतिमां ततः । प्रदक्षिणं समानीय [8]प्रासादान्तः प्रविश्य च ॥

[रत्नन्यासः[9]]

रत्नानि विधिवन्न्यस्य[10] बीजानि [11]सहृदानि च । अभ्यर्च्य देवीं तत्रैव मूलमन्त्रेण तच्छिरः॥

[प्रतिमास्थापनम्[12]]

संस्पृश्य [13]स्थापयेद्देवीं शिल्पिवर्यसमन्वितः । शेषाश्च सगणाः सर्वा [14]मातृस्तेष्वपि तेषु च ॥

---

[1] D : व्याहृत्यंशे

[2] D : शुचिः pour विधि

[3] Cf. *Virāgama*, 74, 32-33 :
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । ततो वासनहोमं तु समिदाज्येन संयुतम् ॥
मूलमन्त्रेण विप्रेन्द्र प्रत्येकं तु शताहुतिः । हुत्वान्ते तु स्पृशेद्बिम्बं द्रव्यं प्रति विशेषतः ॥

[4] La forme grammaticale correcte est इष्ट्वा

[5] A : पातयेत् pour दापयेत्

[6] A : तत्र कृत्वा pour ततस्तत्र

[7] A : तत्तदुद्धृत्य

[8] D : प्रासादेऽन्तः

[9] Cf. *Virāgama*, 74, 17 a :
रत्नन्यासमिदं प्रोक्तं सर्वासां पञ्चरत्नकम् ।

[10] A : न्यस्त्वा pour न्यस्य

[11] La forme grammaticale correcte est सहृदयानि ou सहृन्दि

[12] Cf. *Virāgama*, 74, 34-35a :
स्थापयेत्प्रतिमां तत्र वीरं पश्चिमतोमुखम् । उत्तराभिमुखीर्देवीः स्थापयेद्देशिकोत्तमः ॥
पूर्वाभिमुखमेवं तु विघ्नेशं स्थापयेत्ततः ।
cf. *Santānasaṃhitā*, 26, 19 :
ततः प्रभाते विमले सुमुहूर्ते सुलग्नके । स्थापयेत्सप्तमातृश्च वीरभद्रं गणाधिपम् ॥

[13] A : स्नापयेद् pour स्थापयेद्

[14] A : मातृस्थेष्वपि तेषु च

पृथग्रत्नादियुक्तेषु सव्यवामक्रमेण तु । स्थापयेत्पूर्ववद्धीमान् सर्वांश्च स्वस्वमूलतः ॥ ५९ ॥
उत्तराभिमुखाः सर्वा वीरेशः पश्चिमोन्मुखः । विघ्नेशः प्राङ्मुखस्तत्र स्थापने तु प्रकीर्तिताः ॥

[कुम्भाभिषेकः[1]]

ततः स्नात्वा गुरुर्धाम्नि पुण्याहं [2]तत्र वाचयेत् । पञ्चब्रह्मभिरभ्युक्ष्य बहिर्निष्क्रम्य देशिकः ॥
सुमुहूर्ते सुलग्ने तु कुम्भानुद्धृत्य तान्क्रमात् । प्रदक्षिणमुपावृत्य [3]प्रासादान्तः प्रविश्य च ॥
तत्तदग्रेषु तान्कुम्भान् स्थण्डिलोपरि विन्यसेत् । पूर्ववन्मन्त्रिताङ्गस्तु धृतपञ्चाङ्गभूषणः ॥६३॥
सोष्णीषः सोत्तरीयश्च तत्तत्कुम्भान्पुरोक्तवत् । मन्त्रन्यासं ततः कुर्यात्स्थापनक्रमशो बुधः ॥
पृथक् पृथक् समभ्यर्च्य कलशैरभिषेचयेत् । तेषु मध्यस्थितां तस्या वामाद्याः परितः स्थिताः॥
ततश्चन्दन[4]गन्धोदकर्पूरागरुगन्धिना । आलिप्य प्रतिमाः सर्वा वस्त्राभरणभूषिताः[5] ॥ ६६ ॥
प्रभूतं च हविर्दत्त्वा पृथक् तासां यथाविधि । ताम्बूलं मुखवासेन दद्यात्तासां पृथक् पृथक् ॥

[चलाचलादिप्रतिमास्थापने विशेषः]

अचलस्थापनं ह्येवं [6]मृच्छिला मृण्मयास्तु वा । [7]चित्राभासाश्च यास्तासां [8]रत्नन्यासादिकाः क्रियाः॥
यथायुक्त्या प्रयुञ्जीत चलेष्वपि तथा नयेत् । [9]आभासमृण्मयानां तु पीठमग्रे तु[10] कल्पयेत् ॥
तासां पूजाविधिं कुर्यादन्यत्रैव शिवालये । [11]मातृतन्त्रोक्तमार्गेण मातृमन्त्रकृताग्निके ॥ ७० ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [12]मातृकास्थापनविधिरष्टचत्वारिंशः पटलः ॥

---

[1] Cf. *Vīrāgama*, 74, 35b-36 :
प्रतिष्ठाकुम्भमादाय स्नापयेत्स्वस्वमन्त्रतः । हविर्दद्याद्विशेषेण ताम्बूलं दापयेत्ततः ॥
ब्राह्मणान्भोजयेत्तत्र सप्तकन्याश्च भोजयेत् ।

cf. *Santānasaṃhita*, 26, 20 :
स्वस्वमूलेन मन्त्रेण स्नापयेत्कलशं तथा । पञ्चवर्णं हविर्दद्यात्ताम्बूलं दापयेत्ततः ॥

cf. *Suprabhedāgama*, I, 42, 9b-10a :
स्थापयेत्सुमुहूर्ते तु स्वनामाद्यैश्च मन्त्रतः । मातॄणां हविषं दत्त्वा मातृगायत्रिमन्त्रतः ॥

[2] D : वाचयेत्सुधीः pour तत्र वाचयेत्

[3] D : प्रासादेऽन्तः

[4] D : गन्धेन pour गन्धोद

[5] A : भूषितः pour भूषिताः

[6] A : माला pour मृच्छिला

[7] A : चित्रहासाश्च

[8] A : रत्नं चासादिकां क्रियाम्

[9] A : आभासं pour आभास

[10] A : अग्रेषु pour अग्रे तु

[11] Cf. *Suprabhedāgama*, I, 42, 10b : यामलोक्तक्रमेणैव मातृयागं समाचरेत्

[12] A : मातृकास्थापनविधिः द्विचत्वारिंशः पटलः ; D : मातृस्थापनपटलः

## [एकोनपञ्चाशः पटलः]

### [[1]विनायकस्थापनविधिः[2]]

विनायकस्य [3]वक्ष्यामि तदुत्पत्तिपुरस्सरम् । स्थापनं तस्य मन्त्रं च शृणु मत्तः समासतः॥१॥

[विनायकोत्पत्तिः[4]]

[5]पुरा ममोमया सार्धं क्रीडतः सरसस्तटे । मानसस्य गजान्दृष्ट्वा करिणीवरसंयुतान् ॥ २ ॥
[6]क्रीडतश्च यथाकामं तटे तस्मिन्मनोरमे । ततो [7]रम्यमृगे चैव वामेऽप्यत्र जलाशये ॥ ३ ॥
गजरूपधरौ भूत्वा प्रीत्यर्थं पुत्रमुत्तमम् । गजास्यं तु समुत्पाद्य [8]मनसा सह तेन च ॥ ४ ॥
[9]क्रीडावोऽथ यथाकाममित्युक्तोऽहं च [10]यत्तदा । [11]यदुक्तं कर्म तत्सर्वं क्षणेन कृतवानहम् ॥५
[12]ततश्चिराद्गजक्रीडां [13]कृत्वा विरमितस्तदा । [14]देवकार्यं विचिन्त्येह जगतां च हितेच्छया॥६॥
देवारिसूदनं पुत्रमुमया जगतस्तदा । चतुर्दशविधस्यास्य कृतवानग्रनायकम्[15] ॥ ७ ॥
तेनैव तस्य नामापि [16]विनायक इति श्रुतम् । दत्तवानस्मि तस्याहमष्टादशगणेशताम् ॥ ८ ॥
विघ्नानामीश्वरत्वं च [17]स्वस्वामित्वमतुल्यताम् । ततस्तं सर्वदेवाश्च पुरन्दरपुरोगमाः ॥ ९ ॥
स्वप्रयोजनसिद्ध्यर्थं [18]कर्मारम्भेष्वपूजयन् । एवमुत्पत्तिरुद्दिष्टा तस्य मन्त्रमथ[19] शृणु ॥१०॥

---

1 Ce *paṭala* se trouve dans les manuscrits A et D seulement.

2 Pour विनायकस्थापनविधि voir *Acintyaviśvasādākhya* 53, *Kāmika* II, 45, *Kāraṇa* I, 57 et II, 92, *Dīpta* 74, *Yogaja* 3, *Vīra* 58, *Santānasaṃhitā* 27 et *Suprabheda* I, 43.

3 D : व्याख्यामि

4 Cf. *Suprabhedāgama*, I, 43, 1-4a :
अथातः संप्रवक्ष्यामि विघ्नेशस्थापनं परम् । आदौ त्वहमुमासार्धं क्रीडार्थं हिमवद्वने ॥
करेणुश्च गजेन्द्रेण संभोगमकरोत्ततः । यदृच्छया तु तं दृष्ट्वा तदाकारमगामहम् ॥
करेणोराकृतिं चोमां तदाक्रीडमहं भृशम् । तस्यां तु गर्भमदधात्तस्मिन्काले ततोऽभवत् ॥
महेश्वरसहस्रांशाद्दशांशं तत्तद्रूपकम् ।

5 D : पुरोमया मया

6 A : क्रियान्तं च pour क्रीडतश्च

7 D : रम्यमुग्रं चैव

8 D : मानसा सह

9 A : क्रीडाबोधयथाकामं

10 D : यं तथा

11 D : यत्र यत्कर्म

12 A : ततश्चरन् pour ततश्चिराद्

13 A : क्रीडया pour कृत्वा

14 A omet les demi-*śloka* 6b et 7a :

15 D : अग्रयायिकम् pour अग्रनायकम्

16 A : विनायकमिति

17 A : स्वामिस्वामिमतुल्यताम्

18 A : कर्मारम्भेषु पूजयेत्

19 D : अतः pour अथ

[विनायकमन्त्राः[1]]

[2]प्रथमस्वरसंयुक्तः खपरो मूलमुच्यते । बिन्दुनादसमायुक्तश्चतुर्थ्यन्तगणेशयुक् ॥११॥
नमस्कारान्तसंयुक्तः सर्वसिद्धिप्रदो भवेत् । हृदयादीनि चाङ्गानि पूर्ववत्परिकल्पयेत् ॥१२॥
[3]गायत्री च भवेदेषा सर्वकामफलप्रदा । गणेश्वराय विद्महे हस्तिवक्त्राय धीमहि ॥१३॥
तन्नो [4]दन्ती प्रचोदयादिति गायत्रिमुच्चरेत्[5] । एवं [6]साङ्गः सगायत्रीमन्त्र एष उदीरितः॥१४॥

[प्रतिष्ठायोग्यस्थानम्[7]]

तस्य [8]प्रतिष्ठायोग्यं यत्स्थानं देवालयेषु च । ग्रामादौ पश्चिमे भागे दक्षिणे वा प्रकल्पयेत् ॥

---

[1] Cf. *Kāmikāgama*, II, 45, 50b-53 :
द्वितीयस्य तृतीयं यदाद्यस्वरसमन्वितम् । बिन्दुनादसमायुक्तं बीजं विघ्नेश्वरस्य तु ॥
त्रयोदशान्तसंभिन्नमथवा परिकल्पयेत् । कवर्गस्य तृतीयं तु वह्निमायासमन्वितम् ॥
हृल्लेखासंपुटोपेतं बीजं स्यात्त्र्यक्षरं द्विजाः । श्रीवाग्बीजसमायुक्तमथवा परिकल्पयेत् ॥
पञ्चब्रह्मषडङ्गानि मूलमन्त्रवशान्नयेत् ।
cf. *Kāraṇāgama*, I, 57, 52-53 :
खान्तं सान्तसमायुक्तं यान्तं मायासमन्वितम् । त्रयोदशान्तसंयुक्तं षष्ठस्वरसमन्वितम् ॥
मूलमन्त्रमिदं प्रोक्तं विघ्नेशस्य प्रजापते । खान्तेनैव समायुक्तं ब्रह्माङ्गानि प्रकल्पयेत् ॥

[2] A omet la portion entre le premier pāda du *śloka* 11a et le second pāda du *śloka* 12a et lit : प्रथमस्वरसंयुक्तं सर्वसिद्धिप्रदो भवेत् ।

[3] Cf. *Suprabhedāgama*, I, 43, 7b-8a :
आखुध्वजाय विद्महे इत्युक्त्वा तत्तदा गुरुः । दन्तिहस्ताय धीमहि तन्नो दन्ती प्रचोदयात् ॥
cf. *Kāmikāgama*, II, 45, 120b-121 :
" वक्रतुण्डाय विद्महे । इत्युक्त्वा हस्तिवक्त्राय धीमहीति पदं ततः ॥
तन्नो दन्तिपदं पश्चात्पदमुक्त्वा प्रचोदयात् ॥

[4] A : दन्तिः pour दन्ती [5] A : उच्चरन् pour उच्चरेत् [6] A : योगः pour साङ्गः

[7] Cf. *Acintyaviśvasādākhya*, 53, 6 :
आरामे चालये वापि पुण्यदेशे मनोरमे । आत्मार्थं च परार्थं च स्थापनं च विधीयते ॥
cf. *Kāraṇāgama*, I, 57, 2b-3 ; 6b-10 :
ग्रामे च नगरे चैव पत्तने खेटकेऽपि च । पुरे वा कुब्जके वापि विशेषाद्राजधानिके ॥
एतेषु कल्पयेद्धीमान्विघ्नेशस्यालयं क्रमात् ।.... वीथ्यग्रे वीथिमध्ये वा चैत्यवृक्षादिकेषु वा ॥
कुर्याद्विघ्नेशरूपं तु सर्वसंपत्सुखप्रदम् । ऐन्द्रे तु सुखदं प्रोक्तमाग्नेय्यां धनदं विदुः ॥
याम्यायां भयनाशार्थं नैरृत्यां पुत्रवर्धनम् । वारुण्यां सस्यसंपत्तिर्वायव्यां पुष्टिवर्धनम् ॥
सौम्यायां धान्यराशिः स्यादीशान्यां सर्वकामदम् । वीथ्यग्रे शान्तिकं प्रोक्तं मध्ये दुःखहराय वै ॥
चैत्यवृक्षादिके चैव गवां वृद्धिकरं भवेत् । एवमेवं यथास्थाने न्यस्तव्यं तु गणाधिपम् ॥
cf. *Virāgama*, 58, 4 :
ग्रामे वा नगरे वापि पत्तने खेटकेऽपि वा । प्रासादं कारयेत्तत्र शास्त्रदृष्टेन कर्मणा ॥

[8] A : प्रतिष्ठां योभ्यस्य pour प्रतिष्ठायोग्यं यत्

लिङ्गस्थापनयोग्यं [1]यत्स्थानं पूर्वमुदाहृतम्[2] । तत्रापि स्थापनं कुर्यान्मण्टपं चतुरश्रकम् ॥१६॥

[मण्टपः[3]]

दक्षिणे चोत्तरे वापि [4]तत्पूर्वं मण्टपं भवेत्। [5]कुण्डानि परितो दिक्षु विदिक्षु परितः सुधीः ॥१७॥
चतुरश्रं धनुर्वृत्तं त्रिकोणं च यथाक्रमम् । विदिक्षु चतुरश्राणि कुण्डानि परिकल्पयेत् ॥१८॥
[6]शक्रशांकरयोर्मध्ये प्रधानं पद्ममेव हि । [7]संपत्तौ नवभिर्होमैरलाभे पञ्चभिर्भवेत् ॥१९॥
स्थापनं पञ्चहोमे स्यादैशान्यां तत्प्रधानकम् । मण्टपे पूर्ववत्सर्वं संस्कारं संप्रकल्पयेत् ॥२०॥

[नेत्रोन्मीलनम् , बेरशुद्धिश्च[8]]

ततोऽक्ष्युन्मीलनं कुर्यान्मण्टपे समलंकृते । मण्टपे स्थण्डिले स्थाप्य प्राङ्मुखं शिल्पिना ततः ॥

---

[1] A : यत्स्थापनं pour यत्स्थानं

[2] Cf. *Ajitāgama*, paṭala 6.

[3] Cf. *Kāraṇāgama*, I, 57, 32b-39 :
भवनस्याग्रतः कुर्यान्मण्टपं चतुरश्रकम् । धर्मरन्ध्राष्टहस्तं वा कलास्तम्भसमन्वितम् ॥
मण्टपं तु त्रिधा भज्य मध्यभागे तु वेदिकाम् । रत्निमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ॥
कुण्डानि कल्पयेत्पश्चान्मानुषे तु पदे हितम् । नवाग्न्यायतनं वापि पञ्चाग्न्यायतनं तु बा ॥
दिशास्वम्बुजकुण्डानि विदिक्ष्वश्वत्थपत्रवत् । प्राक्कुण्डं वेदिकामध्ये वृत्तं प्राधान्यकं कुरु ॥
पञ्चाग्न्यायतनं चेत्तु योन्याकाराणि वर्जयेत् । मण्टपस्योत्तरे देशे स्नानश्वभ्रं प्रकल्पयेत् ॥
उद्वास्य शिल्पिनं पश्चाद्गोमयेनोपलेपयेत् । मण्टपं भूषयित्वा तु भूसुरान्भोजयेत्ततः ॥
उच्छिष्टं तु ततोद्वास्य गोमयेनोपलेपयेत् । वास्तुहोमं ततः कृत्वा पर्यग्निकरणं कुरु ॥
पुण्याहं वाचयित्वा तु स्वस्तिसूक्तसमन्वितम् ।
cf. *Santānasaṃhitā*, 27, 6-8 :
प्रासादस्यैव पुरतो मण्टपं पञ्चहस्तकम् । त्रिहस्तं वाथ देवेशि मण्टपं कारयेत्ततः ॥
ब्रह्मांशे वेदिकां कुर्याद्रत्निमात्रोच्छ्रितां शुभाम् । तस्या बाह्ये तु परितः पञ्च कुण्डानि कारयेत् ॥
अथवा एककुण्डं वा ईशान्यामष्टकोणकम् । मण्टपं विस्तरेत्पश्चात्पूर्वोक्तलक्षणैर्युतम् ॥

[4] D : पूर्वस्यां pour तत्पूर्वं

[5] A : कुण्डादि pour कुण्डानि

[6] A : शक्रईशानयोर्मध्ये

[7] A : संप्रोक्तो pour संपत्तौ

[8] Cf. *Vīrāgama*, 58, 41-56a :
सुमुहूर्ते सुनक्षत्रे नेत्रद्वययुते दिने । नयनमोक्षणं कुर्यात्पूर्वोक्ते मण्टपे शुभे ॥
गोमयेनोपलिप्याथ शालिना स्थण्डिलं कुरु । अष्टद्रोणैश्च शालिभिस्तदर्धैस्तण्डुलैरपि ॥
विकीर्य नववस्त्रेण दर्भैश्चैव परिस्तरेत् । तत्रैव प्रतिमां स्थाप्य पूर्वाभिमुखमेव वा ॥
प्रच्छादयेत्ततो बिम्बं नववस्त्रेण देशिकः । अभितः कलशानष्टौ विन्यसेत्तोयपूरितान् ॥
सवस्त्रान्सहिरण्यांश्च अष्टमूर्तिसमायुतान् । गन्धपुष्पैश्च धूपैश्च हृदिना पूजयेत्ततः ॥
इन्द्रादीशानपर्यन्ताँल्लोकपालान्समर्चयेत् । अक्षिहोमं ततः कुर्यादाज्येनैव तु देशिकः ॥
अग्निमुखं च संकल्प्य नेत्रमन्त्रेण होमयेत् । अष्टोत्तरशतं हुत्वा पूर्णाहुतिमथाचरेत् ॥
हेमसूच्यालिख्य नेत्रे आचार्यः शिल्पिभिः सह । पक्ष्मरेखां समालिख्य तन्मध्ये कृष्णमण्डलम् ॥
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रसमन्वितम् । हेमपात्रे तथा चैव मध्वाज्यं विन्यसेत्ततः ॥

प्रच्छन्नपटमावेष्ट्य नववस्त्रेण [1]वेष्टयेत् । भ्रूरेखां पक्ष्मरेखां च कृष्णमण्डलमेव च ॥२२॥
दृष्टिं च [2]कृतहस्तेन कारयेल्लक्षणान्वितम् । स्वर्णसूच्या ततो मन्त्री दूर्वया स्वर्णभूतया ॥२३॥
मध्वाज्यदुग्धैः पात्रस्थैः सुवर्णकलशाञ्चितैः[3] । प्रोक्षितैरस्त्रमन्त्रेण लोचनेषु यथाक्रमम् ॥२४॥
तर्पयेत्पूर्ववन्मन्त्री ततो धेनुं प्रदर्शयेत् । पञ्चमृत्पञ्चगव्यैश्च शुद्धिं कृत्वास्त्रमुच्चरन् ॥२५॥

[ जलाधिवासः[4] ]

प्रदक्षिणं ततो नीत्वा ग्रामादौ च जलाशयम् । ततः प्रविश्य तत्तीरे स्थाप्य देवं विनायकम् ॥
[5]पुण्याहप्रोक्षणं कृत्वा सकूर्चं मालया सह । आवेष्टयाहतवस्त्रेण [6]चावगाह्य जलं ततः ॥२७॥
[7]पूर्ववच्छाययेदादौ नीत्वा कालं च पूर्ववत् । आनीय च ततः स्नानमण्टपे वेदिकोपरि ॥२८॥

[ शयनाधिवासः[8] ]

संस्थाप्य प्राङ्मुखं देवं पञ्चगव्येन सेचयेत् । गायत्र्या गन्धतोयेन ततः प्रणवमुच्चरन् ॥२९॥

---

ताम्रपात्रेऽथवा कांस्ये मधु चैव तु विन्यसेत् । मधुवातेति मन्त्रेण मधुना तर्पयेत्ततः ॥
घृतमिक्षेति मन्त्रेण घृतं चैव तु तर्पयेत् । गणानां चेति मन्त्रेण सवत्सां गां प्रदर्शयेत् ॥
ततो ब्रह्म समुच्चार्य ब्राह्मणान्दर्शयेत्ततः । प्रोक्षयेद्ब्राह्मणैस्तत्र साक्षतं सकुशोदकम् ॥
प्रच्छन्नपटमावर्ज्य जनान्सर्वान्प्रदर्शयेत् । प्रोक्षयेत्कलशान्विप्र पञ्चब्रह्मेण संयुतम् ॥
गीतवाद्यसमायुक्तं वीणावेणुरवैः सह । गेयनृत्तसमायुक्तं जयशब्दैः समन्वितम् ॥
ततः प्रतिमामुद्धृत्य शुद्धिं कृत्वा तु देशिकः । पञ्चमृत्पञ्चगव्यैश्च पञ्चाङ्गैश्च समन्वितम् ॥
पुण्याहं वाचयेत्तत्र पवमानेन प्रोक्षयेत् ।

1 D : सेचयेत्  2 D : कृतं हस्तेन  3 D : अन्वितैः pour अञ्चितैः

4 Cf. *Vīrāgama*, 58, 56b-61a :
रथे वा शिबिकायां वा प्रतिमां रोप्य भक्तितः । ग्रामप्रदक्षिणं कृत्वा जले चैवाधिवासयेत् ॥
प्रतिमां पञ्चगव्येन स्नापयेद्धृदयेन तु । नववस्त्रेण संवेष्ट्य कूर्चेणास्त्रेण संयुतम् ॥
मूलमन्त्रेण विप्रेन्द्र जले चैवाधिवासनम् । चतुष्पादसमायुक्तां प्रपां कृत्वा तु देशिकः ॥
अभितः कलशानष्टौ विद्येश्वरसमन्वितान् । सवस्त्रान्सहिरण्यांश्च विन्यसेत्तु विशेषतः ॥
एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा । जलाधिवासनं कुर्यात्सर्वालंकारसंयुतम् ॥

cf. *Kāraṇāgama*, I, 57, 28-32a :
वस्त्रैराभरणैर्माल्यैर्भूषयेद्भूषणार्हकैः । सर्वातोद्यसमायुक्तं सर्वालंकारसंयुतम् ॥
ग्रामप्रदक्षिणं कुर्यात्संप्रविश्य जलाशयम् । तत्तीरे स्थण्डिलं कृत्वा प्रतिमां तत्र विन्यसेत् ॥
नववस्त्रेण संवेष्ट्य लम्बकूर्चसमन्वितम् । जलमध्ये प्रपां कृत्वा चतुर्गात्रसमन्विताम् ॥
वितानध्वजसंयुक्तां दर्भमालासमन्विताम् । शाययित्वा गलदघ्ने जले तु फलकोपरि ॥
एकरात्रं द्विरात्रं वा त्रिरात्रं वा जलोषितम् ॥

5 A : पुण्याहं प्रोक्षणं कृत्वा  6 A omet च dans चावगाह्य  7 D : पूर्ववच्छादयेदादौ

8 Cf. *Kāraṇāgama*, I, 57, 41-48 :
जलादुत्तीर्य बिम्बं तु स्नानश्वभ्रे तु विन्यसेत् । वस्त्रादीनि व्यपोह्यात्र गव्यैरेवाभिषेचयेत् ॥
गन्धतोयेन संस्नाप्य शुद्धैरुद्धैरिति ब्रुवन् । ईशानेन समभ्यर्च्य पीतवस्त्रेण वेष्टयेत् ॥

अभिषिच्य ततो मन्त्री बध्वा प्रतिसरं बुधः । कूर्चेन वा सुसंवेष्ट्य वस्त्रेण सुसितेन च ॥३०॥
पूर्ववन्मण्टपे कृत्वा स्थण्डिलं शयनानि च । पूर्ववत्तत्र देवांश्च पूजयित्वा यथाक्रमम् ॥३१॥
ततो देवं समानीय प्राक्शिरश्चोर्ध्ववक्त्रकम् । शाययेच्छयने मन्त्री मूलमन्त्रं समुच्चरन्॥३२॥

[कुम्भस्थापनम्[1]]

ततः कुम्भं तु हेमादिनिर्मितं तोयपूरितम् । पूर्ववत्संस्कृतं तत्र [2]शिरोभागेऽथ दक्षिणे ॥३३॥
विन्यस्य परितः कुम्भानष्टौ चाप्यथ तादृशान् । संस्थाप्य तेषु मध्यादि देवांश्चाथ समर्चयेत्॥

[मन्त्रन्यासः]

वेद्यास्तु दक्षिणे पार्श्वे प्राङ्मुखो वाप्युदङ्मुखः । आसने सुखमासीनो देशिकः कल्पयेत्तनुम्[3]॥
[4]तथा मन्त्रात्मिकां तत्र विधिरस्य निगद्यते । अङ्गानि करशाखासु हृदयादीनि विन्यसेत्॥३६॥
अङ्गुष्ठादिकनिष्ठान्तमस्त्रं हस्ततले न्यसेत् । पुनश्चैव षडङ्गानि यथास्थानं गुरुस्ततः ॥ ३७ ॥

[विनायकध्यानम्[5]]

एवं मन्त्रतनुर्भूत्वा गणेशं हृदि विन्यसेत् । प्राणायामत्रयं कृत्वा हृत्कुशेशयमध्यगम् ॥ ३८ ॥

---

कौतुकं बन्धयेद्धीमान्पूर्वोक्तविधिना सह । वेद्यूर्ध्वे स्थण्डिलं कुर्यादष्टद्रोणैश्च शालिभिः ॥
तण्डुलैस्तिलदर्भैश्च परिस्तीर्य विशेषतः । शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् ॥
प्रोक्षयेत्पुरुषेणैव आपोहिष्ठेति मन्त्रतः । आचार्यः शिष्यसंयुक्तः प्रागुक्तलक्षणान्वितः ॥
नववस्त्रधरोष्णीषहेमाङ्गुलीयशोभितः । स्नानवेद्याः समुद्धृत्य सर्वालंकारसंयुतम् ॥
शन्नो देवीति मन्त्रेण विघ्नेशं शयनोपरि । शाययित्वा ततो मन्त्री प्राक्शिरश्चोर्ध्ववक्त्रकम् ॥
अर्चयित्वा हृदा पश्चाद्रक्तवस्त्रेण वेष्टयेत् । पद्ममुद्रां प्रदर्श्याथ अङ्कुशाख्यां प्रदर्शयेत् ॥

[1] Cf. *Dīptāgama*, 74, 42b-44 ; 50b-51 :

कुम्भं प्रक्षाल्य तोयेन सूत्रेणैव तु वेष्टयेत् । सकूर्चं सापिधानं च सवस्त्रं वारिपूरितम् ॥
विघ्नेशस्य शिरोभागे स्थापयेद्देशिकोत्तमः । तत्रैव पञ्चरत्नानि निक्षिपेद्धृदयेन तु ॥
विघ्नेशमूलमन्त्रेण विन्यसेत्कुम्भमध्यमे ।.......द्रोणतोयेन संपूर्णान्सूत्राद्यभिसमन्वितान् ॥
हेमपाशाङ्कुशोपेतान्गन्धोदकेन पूरितान् । अभितस्तु घटानष्टौ स्थापयेदष्टदिक्षु च ॥

cf. *Vīrāgama*, 58, 66b-69 :

अभितः कलशानष्टौ विन्यसेन्मूर्तिसंयुतान् । बृह्मोदरादीन्विप्रेन्द्र विन्यसेत्स्वस्वनामतः ॥
सवस्त्रान्सापिधानांश्च सहिरण्यान्सकूर्चकान् । ईशानइन्द्रयोर्मध्ये प्रधानकलशं न्यसेत् ॥
विघ्नेशं तत्र संस्थाप्य मूलमन्त्रेण देशिकः । गन्धपुष्पादिना पूज्य पायसान्नं निवेदयेत् ॥
लोकपालांश्च कुम्भानि विन्यसेत्पूर्वमेव च ।

[2] A : शिरोभागे सदक्षिणे

[3] A : तनुः pour तनुम्

[4] A omet les *śloka* 36 et 37.

[5] Cf. *Kāraṇāgama*, I, 57, 54-57 :

गणेशं पुरुषाकारं गजकर्णं गजाननम् । महोदरं बृहत्कायमेकदंष्ट्रं त्रिलोचनम् ॥

त्रिनेत्रं चतुर्भुजं [1]ध्यात्वा रक्तं रक्ताम्बरोज्ज्वलम् । एकदन्तं प्रलम्बोष्ठं नागयज्ञोपवीतिनम् ॥
[2]टङ्कदन्तौ दधत्सव्ये फलपाशौ तथापरे । तरुणादित्यसंकाशं गजवक्त्रं विचिन्तयेत् ॥ ४० ॥

[कुम्भपूजा[3]]

ततो [4]वैनायके देवे गन्धचन्दनचर्चिते[5] । [6]गन्धमाल्यावृते गन्धपुष्प[7]धूपादिभिः क्रमात् ॥४१॥
पूजिते तद्वदा तस्मिन् सुधामुद्राप्ररोचिते[8] । हृदयान्तं समावाह्य गणेशं मुद्रया तथा ॥ ४२ ॥
[9]स्थापिन्याथ च संस्थाप्य निरोधिन्या निरुध्य च । संनिधीकृत्य चाप्येनं [10]संनिधान्या गजाननम् ॥
[11]पूजयेन्मूलमन्त्रेण मन्त्रमूर्तिं गणेश्वरम् । गन्धपुष्पादिभिः सम्यक् सर्वभक्ष्यसमन्वितम् ॥४४॥
वेदध्वनिसमायुक्तं सर्वातोद्यसमायुतम्[12] । ततश्च वरदं वीरं विघ्नेशं च गजाननम् ॥ ४५ ॥
भक्ष्यप्रियं [13]गजकर्णं लम्बोष्ठं [14]विघ्ननाशनम् । पूर्वादिष्वभितःस्थेषु[15] घटेष्वष्टसु विन्यसेत् ॥
अर्चयेद्गन्धपुष्पाद्यैः स्वनामपदमन्त्रकैः । [16]ततोत्थायाघ्र्यहस्तस्तु होमकुण्डान्तरे क्षिपेत् ॥४७॥

---

रौद्रनेत्रं तु लम्बोष्ठं नागयज्ञोपवीतिनम् । करण्डमकुटोपेतं सर्वाभरणभूषितम् ॥
चतुर्दोर्दण्डसंयुक्तं दक्षिणेऽङ्कुशदन्तधृक् । पाशं च लड्डुकं चैव वामभागे तु धारितम् ॥
करस्थलड्डुकेनैव गजहस्ताग्रसंयुतम् । एतद्गणेशरूपं तु ध्यात्वा मन्त्रं तु विन्यसेत् ॥

cf. *Acintyaviśvasādākhya*, 53, 13b-17 :

गजाननो महाकायः प्रलम्बोदरसंयुतः । व्यालयज्ञोपवीती च ह्रस्वजङ्घाद्वयान्वितः ॥
संध्याभ्रसंनिभो वापि नीलनीरुहप्रभः । तप्तकाञ्चनसंकाशः शुद्धस्फटिकसंनिभः ॥
श्यामवर्णमयो वापि यथेष्टफलयोगतः । पाशाङ्कुशौ स्वदन्तं च लड्डुकं चोत्पलं तथा ॥
किरीटमकुटोपेतः शुक्लयज्ञोपवीतवान् । सर्वाभरणसंयुक्तो नेत्रत्रयविराजितः ॥
पीठस्थं मूषिकस्थं वा सिंहस्थं वाथ कल्पयेत् ।

[1] A : हृदये ध्यात्वा pour ध्यात्वा रक्तं
[2] A : एकदन्तं pour टङ्कदन्तौ

[3] Cf. *Kāraṇāgama*, I, 57, 58a ; 60-61a :

पूजयित्वा तु गन्धाद्यैः पञ्चवक्त्रं प्रदर्शयेत् ।........ वरदं पूर्वकुम्भे तु वीरमाग्नेयकुम्भके ॥
विघ्नेशं दक्षिणे कुम्भे नैर्ऋत्यां तु गजाननम् । इक्षुप्रियं तु वारुण्यां गजकर्णं तथानिले ॥
विनायकं तु सौम्यायां लम्बोष्ठं त्वीशके यजेत् । विघ्नेशरूपिणः सर्वे विशेषमधुनोच्यते ॥
पाशाङ्कुशधराः सर्वे वरदाभयदान्विताः । द्विनेत्राश्च द्विहस्ताश्च ध्यात्वा तत्तत्स्वबीजकैः ॥
विन्यसेत्कुम्भमध्ये तु गन्धपुष्पादिभिर्यजेत् । गुलान्नं दापयेद्धीमांस्ताम्बूलं दापयेत्पृथक् ॥

[4] D : वैनायकं देवं
[5] D : चर्चितम् pour चर्चिते
[6] A : गन्धमाल्यवृते
[7] A omet धूप
[8] D : प्ररोपिते pour प्ररोचिते
[9] A : स्थाप्य चाशु च संस्थाप्य
[10] A : संनिधानं pour संनिधान्या
[11] A : पूजयेजलमन्त्रेण
[12] D : समन्वितम् pour समायुतम्
[13] A : गजं कर्णं
[14] D : च विनायकम् pour विघ्ननाशनम्
[15] D : स्वेषु pour स्थेषु
[16] La forme grammaticale correcte est तत उत्थायार्घ्यहस्तस्तु

[ होमः[1] ]

आचार्यो होतृभिः सार्धं साधकैः पुत्रकैस्तु वा । कुण्डसंस्कारपूर्वाणि कृत्वा कर्माणि शास्त्रतः ॥
होमयेयुः क्रमाच्चैव द्रव्याण्येतानि मन्त्रतः । समिदाज्यचरूँल्लाजान्सक्तुकांश्च [2]यवांस्तिलान् ॥
षडङ्गैर्मूलमन्त्रैश्च[3] जुहुयात्क्रमशः समम् । भक्ष्याणि च फलान्यत्र स्वादूनि च बहूनि च॥५०॥
होमयेयुश्च मूलेन यथालाभं सुरोत्तम । गणानां चेति मन्त्रेण सर्पिषा तु [4]शताहुतीः ॥ ५१ ॥
गायत्र्या [5]च शतं हुत्वा सर्वकुण्डेषु मन्त्रवित् । द्रव्यान्ते व्याहृतिं हुत्वा समुत्थाय च होतृभिः॥
तत्तद्द्रव्यावसाने तु तत्तन्मन्त्रमनुस्मरन् । तत्तदङ्गानि संस्पृश्य स्पर्शयेद्धोतृभिः सह ॥ ५३ ॥
यथास्थानं तु कुण्डेषु [6]वरदादीन्समर्चयेत् । प्रधाने गणेश्वरं देवं तैस्तैर्मन्त्रैर्दशाहुतीः[7] ॥ ५४ ॥
सर्पिषा जुहुयात्तेषां होमान्तेषु यथाक्रमम् । [8]प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात्॥५५॥
शम्यपामार्गखदिराः [9]कोणेष्वर्कोऽप्युदाहृतः । पलाशस्तु प्रधानस्य समिद्दोषविवर्जिता[10] ॥५६

---

[1] Cf. *Kāmikāgama*, II, 45, 89-94a :

गुरुर्मूर्तिधरैः सार्धं होमकर्म समाचरेत् । पूर्वोक्तभूषणोपेतः शिवविप्रकुलोद्भवः ॥
वेदपाठश्चतुर्दिक्षु कोणे मूलजपो भवेत् । संस्कृत्य वह्निं कुण्डं च वह्निकार्योक्तमार्गतः ॥
दिक्षु तत्पुरुषादींश्च कोणेषु हृदयाद्यणून् । ईशं प्रधाने सर्वैश्च मूर्तिमूर्तीश्वरैर्युतम् ॥
आवाह्याभ्यर्च्य गन्धाद्यैर्द्रव्यैरेभिश्च तर्पयेत् । समिद्घृतान्नलाजैश्च तिलापूपगुलैर्यवैः ॥
तत्त्वतत्त्वेशहोमं च मूर्तिमूर्तीश्वरैर्नयेत् । शान्त्यम्भःप्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम् ॥
दर्भसंस्पर्शनं चेत्थं प्रतिभागं समाचरेत् ।

cf. *Kāraṇāgama*, I, 57, 73-80 :

ऋगाद्यध्ययनं कुर्यात्प्रागादिषु क्रमेण तु । अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
गणेशाग्निं प्रकल्प्याथ कुण्डं प्रति विशेषतः । समिदाज्यचरूँल्लाजान्सक्तुगौलमपूपकम् ॥
प्रियङ्गु कोद्रवं चैव पृथुकं पनसं तथा । शमीखदिरमायूरोदुम्बरास्तु दिशासु च ॥
बिल्वं चार्कं तथा प्लक्षं न्यग्रोधं विदिशासु च । पलाशं तु प्रधाने स्यात्समिधः संप्रकीर्तिताः ॥
सद्यादीशास्त्रपर्यन्तमन्त्रैश्चैव क्रमेण तु । शतमर्धं तदर्धं वा प्रत्येकं जुहुयात्क्रमात् ॥
द्रव्यान्ते व्याहृतिं हुत्वा स्पृष्ट्वा तु प्रतिमां ततः । मूर्तिपान्स्वस्वदिग्भागे स्पृष्ट्वा स्पृष्ट्वा तु होमयेत् ॥
आचार्यो हृत्प्रदेशे तु होमं कुर्याद्विशेषतः । गणानां त्वेति मन्त्रेण मूलेनैव विशेषतः ॥
घृतेन जुहुयान्मन्त्री प्रत्येकं तु शताहुतिः । एवं जागरणं रात्रौ "

[2] D : तिलान्यवान्
[3] A : तु pour च
[4] A : शताहुतिम्
[5] A : तु pour च
[6] Cf. *supra* śl. 45b-46a pour वरद etc.
[7] A : दशाहुतिम् pour दशाहुतीः
[8] A : प्लक्षोदुम्बरमश्वत्थं वटं
[9] A : कोणेष्वेको pour कोणेष्वर्को
[10] D : विवर्जितः pour विवर्जिता

होमकाले यथास्थानं स्थितैरध्ययनं भवेत् । होमान्ते सर्वदेवानां कुम्भस्थानां ददेद्धविः॥५७॥

[प्रतिमास्थापनम्[1]]

रात्रावेवं क्रियां कृत्वा प्रभाते [2]स्थापयेद्बुधः। आचार्यो मूर्तिपैः सार्धं[3] स्नात्वा कृत्वा च नैत्यकम्॥
[प्रविश्य मण्टपं तत्र देवानभ्यर्च्य पूर्ववत् ।] [4]पूर्णाहुतिं तु मूलेन सर्वत्रापि प्रदापयेत्॥५९॥
उत्थाप्य शयनाद्देवं[5] प्रासादं तु प्रदक्षिणम् । समानीय प्रविश्यान्तःस्थानं[6] देशिकसत्तमः॥६०॥
स्थापयेच्छिलिपना सार्धं गणेशं गर्भवेश्मनि । [7]यथोक्तस्थानतो न्यस्य पीठस्य पदमध्यमे ॥६१॥
रत्नानि लोहधातूनि [8]गन्धाद्योषधिसंयुतम् । बीजानि च गुरुर्न्यस्य[9] स्थापयेत्तत्र देवताम्॥६२॥
श्लिष्टं [10]कृत्वा ततो मन्त्री पुण्याहं तत्र वाचयेत् । [11]स्नात्वाचम्य शुचिर्भूत्वा शान्तचित्तस्त्वतन्द्रितः॥

[कुम्भाभिषेकः[12]]

ततो मण्टपमासाद्य कृतमन्त्रतनुर्गुरुः । पूर्ववत्पूजयेत्कुम्भान्गन्धपुष्पादिभिः क्रमात् ॥ ६४ ॥

---

¹ Cf. *Kāmikāgama*, II, 45, 94b-99a :
ततः प्रभाते शुद्धस्तु मूर्तिपैः सह देशिकः । उद्धृतं विघ्नराजानं कुम्भानग्निं च तर्पयेत् ॥
प्रायश्चित्तनिमित्तं तु घोराहुतिशतं नयेत् । दत्वा पूर्णाहुतिं पश्चात्प्रविशेद्भवनं गुरुः ॥
मानुषे दैविके वापि प्राग्वत्संस्कृत्य विन्यसेत् । कशिलां पूर्वमन्त्रेण रत्नौषध्यादिगर्भिताम् ॥
अथ ब्रह्मशिलोपेतं स्थापयेच्च गणाधिपम् । प्राग्वन्न्यस्य गणेशानं मूलमन्त्रं समुच्चरन् ॥
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् । चलं चेत्स्नानवेद्यां तु मन्त्रन्यासो भवेद्द्विजाः ॥

² A : स्थापनं बुधः

³ Après la première partie du *śloka* 58b l'on trouve dans les manuscrits A et D la seconde partie du *śloka* 61a, puis les *śloka* 61b, 62 et 63, et enfin les *śloka* 59 et 60. Il semble que ceci résulte d'une erreur de scribe, du fait que le même mot सार्धं apparaît en 58b et 61a. Comme l'ordre des manuscrits contredit celui du rituel le texte a été donné dans l'ordre correspondant à ce dernier.

⁴ D : पुण्याहं कतुमूलेन

⁵ D : देवान् pour देवं

⁶ A : ध्यानं pour स्थानं

⁷ A : यथोक्तस्थाने न्यस्त्वा

⁸ A : गन्धाद्यैर्विधिसंयुतम्

⁹ A : न्यस्त्वा pour न्यस्य

¹⁰ D : कुर्यात् pour कृत्वा

¹¹ A : स्नात्वा च प्रतिमां हित्वा

¹² Cf. *Kāraṇāgama*, I, 57, 87-97 :
घृतं शिरोऽर्पणं कुर्यात्प्रागुक्तविधिना सह । अकारादि क्षकारान्तं देहे पूर्वोक्तवन्न्यसेत् ॥
पद्ममुद्रां प्रदर्श्याथ पञ्चवक्त्रीं प्रदर्शयेत् । दिग्बन्धं चास्त्रमन्त्रेण कारयेद्दशदिक्षु च ॥
मुहूर्ते समनुप्राप्ते गुरवे संनिवेदयेत् । कुम्भानुद्धृत्य शिरसा बाह्यधामप्रदक्षिणम् ॥
कृत्वा बिम्बस्य चाग्रे तु स्थण्डिलोपरि विन्यसेत् । कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् ॥
तत्कुम्भस्थजलैश्चैव स्नापयेत्तु विनायकम् । अष्टमूर्तिघटान्न्यस्त्वा बीजान्यष्टदलेषु च ॥

ततो [1]गणेशकुम्भं तमुत्थाप्य शयनात्तदा । प्रदक्षिणं परिग्राह्य प्रविश्याग्रे निधाय च ॥ ६५ ॥
सुमुहूर्ते सुलग्ने तु दैववित्संप्रदर्शिते[2] । देहशुद्धिं [3]पुनः कृत्वा मन्त्रैर्मन्त्री प्रसन्नधीः ॥ ६६ ॥
सोष्णीषः सोत्तरीयश्च श्वेतवासोधरो मृदुः । प्रसन्नं तत्र [4]विन्यस्य मन्त्रदेहं गणेश्वरम् ॥ ६७ ॥
बेरदेहेऽतिसूक्ष्मं[5] तं स्थूलकूर्चाम्भसा न्यसेत् । प्राणमूलं ततो विद्वान्क्रमादङ्गानि विन्यसेत् ॥
साङ्गमूलं [6]तमभ्यर्च्य गन्धपुष्पादिभिः क्रमात् । ततो मूलं तु [7]तन्मूर्ध्नि ललाटमुखयोरपि ॥
[8]गलेंऽसयोश्च बाह्वोश्च [9]करयोर्जठरे तथा । नाभावूर्वोश्च जान्वोश्च जङ्घयोर्गुल्फयोरपि ॥७०॥
विन्यस्य प्रथमं मन्त्री गन्धपुष्पादिभिर्यजेत् । ततोऽष्टौ वरदादींश्च प्रागादिपरितो न्यसेत् ॥
[10]न्यस्य तद्वत्तथा तेषां कुम्भान्कुर्याद्यथाक्रमम् । अभिषिच्य [11]ततः कुम्भैस्ततो देवं गणेश्वरम् ॥
वस्त्राभरणमालाद्यैर्भूषयित्वाथ पायसम् । अपूपं घृतसंयुक्तं दत्त्वा हृदयमुच्चरन् ॥ ७३ ॥
ताम्बूलं मुखवासं च गणेशाय निवेदयेत् । लोहदारुसुधादीनां[12] बेराणामपि देवप ॥ ७४ ॥
[13]कर्मव्यत्यासमप्यत्र रत्नन्यासान्तकं तु यत् । [14]संमतं सर्वमेव स्यात्सर्वेषां स्थापनेष्वपि ॥७५॥
[15]एवं गौणं समाख्यातं गणेशस्थापनं परम् । मुख्ये तु स्थापने विष्णो विशेषोऽयं निगद्यते ॥

[गणेशप्रधानालये विशेषः[16]]

सर्वत्रापि गणेशस्य धाम प्राग्द्वारमिष्यते । सुप्रवेशः सुवृत्तश्च वामनः शङ्खपालकः ॥ ७७ ॥

---

पीठाम्बुजे क्रमेणैव इन्द्राद्यैशान्तकान्न्यसेत् । तत्कुम्भस्थोदकैश्चैव विघ्नेशमभिषेचयेत् ॥
पूजयेद्गन्धपुष्पाद्यैर्मूलमन्त्रेण देशिकः । हृदा सर्वोपचाराणि दापयेत्तु क्रमेण तु ॥
स्नपनं कारयेत्पश्चात्पूर्वोक्तविधिना सह । कश्चिदस्मिन्विशेषोऽस्ति शिवकुम्भं च वर्धनीम् ॥
व्यपोह्य मध्यमे कुम्भे विघ्नेशं संप्रपूजयेत् । पूजयित्वा विशेषेण प्रभूतहविषं ददेत् ॥
गुलान्नं पायसान्नं च मुद्गान्नं च निवेदयेत् । भक्ष्याणि विविधान्यत्र गणानां त्वेति दापयेत् ॥
भोजयेद्ब्रह्मचारींश्च तेषां भक्ष्याणि दापयेत् । अविघ्नं प्रार्थयेत्तत्र गणेशं तु विशेषतः ॥

1 A : गणेशकुम्भान्तमुत्थाप्य
2 A : संप्रदर्शयेत् pour संप्रदर्शिते
3 D : ततः pour पुनः
4 A : विन्यस्यान् pour विन्यस्य
5 D : तु सूक्ष्मं pour अतिसूक्ष्मं
6 D : तद् pour तम्
7 A : तन्मूल pour तन्मूर्ध्नि
8 A : गले शयोश्च
9 A : कलयोज भवेत्तदा
10 A : न्यस्त्वा pour न्यस्य
11 D : तु तैः pour ततः
12 A : शिलादीनां pour सुधादीनां
13 A : कर्मव्यक्त्या समाप्यात्र
14 A : समदं सर्व एव स्यात्

15 Cf. *Kāraṇāgama*, I, 57, 11-12a :
स्वतः प्रधानकं साङ्गं द्विविधं स्थापनं स्मृतम् । परिवारसमायुक्तं कुर्यात्स्वस्वप्रधानकम् ॥
साङ्गं तु परिवारं तु विना स्थापनमारभेत् ।

16 Cf. *Kāraṇāgama*, I, 57, 4-6a :
त्रिहस्तादि समारभ्य नवहस्तान्तकं क्रमात् । कर्तव्यं भवनं तस्य अत ऊर्ध्वं न कारयेत् ॥
अष्टदिक्षु प्रकर्तव्यं हस्तिपृष्ठविमानकम् । तन्मध्ये कल्पयेद्द्वारं प्राङ्मुखं वाप्युदङ्मुखम् ॥
दण्डमाने प्रकर्तव्यं प्राकारादीनि पूर्ववत् ।

महावीरो भैरवश्च[1] वीरेशश्चोग्ररूपकः । एतेऽष्टौ स्युर्गणेशस्य परिवारा जनार्दन ॥ ७८ ॥
तांश्च [2]वेद्यां तु परितः पूर्वादारभ्य [3]विन्यसेत् । कुम्भस्थांश्च तथा द्वारपालावेतौ च विन्यसेत्॥
द्वारपार्श्वगतौ वीरमहावीरौ [4]सुदंष्ट्रिणौ । अग्रे चास्यं तथा [5]न्यस्य गणराजस्य वाहनम् ॥८०॥

---

cf. *Kāmikāgama*, II, 45, 4-8 :
अथैकादित्रयस्त्रिंशद्धस्तविस्तारसंयुतः । एकादिनवभूम्यन्तं भूमिभागसमन्वितः ॥
विशेषाद्गजपृष्ठाभस्त्वन्यरूपयुतोऽथवा । दिक्षु विघ्नेश्वरोपेतः कोणे मूषिकसंयुतः ॥
रुद्रे वा स्कन्दरूपाढ्यस्त्वधमालय ईरितः । पूर्ववत्कृतसद्गर्भः प्रथमेष्टकयान्वितः ॥
दिग्देवमूर्तिसंयुक्तो मध्यकुम्भयुतेन च । धाम्नः संस्थापनेनापि युक्तः प्रागुक्तवर्त्मना ॥
प्राकारमण्टपोपेतो मण्टपाद्यैश्च मण्डितः । मण्टपो वालयस्तस्य कूटाद्याकार एव वा ॥

cf. *Kāraṇāgama*, I, 57, 64b-72 ; 98-100 :
परिवारघटानष्टावुपवेद्युपरि न्यसेत् । सकूर्चान्सापिधानाढ्यान्सवस्त्रान्वारिपूरितान् ॥
सुप्रभूतं सुवक्त्रं च वामनं शङ्खपालकम् । महावीरं भैरवं च वीरेशं चोग्ररूपिणम् ॥
इन्द्रादीशानपर्यन्तं कुम्भमध्ये तु विन्यसेत् । शुक्लं कृष्णं हरितालं श्यामं रक्तं तु शावलम् ॥
काश्मीरं धूम्रवर्णं तु सुप्रभूतादिवर्णकम् । खड्गखेटकहस्तांश्च भीमरूपान्सुदंष्ट्रकान् ॥
सर्वाभरणसंयुक्तानूर्ध्वकेशालकान्वितान् । द्विनेत्रान्करालवदनान्स्वनामाद्यक्षरैस्तथा ॥
पूजयेत्तु विशेषेण गन्धपुष्पादिभिः क्रमात् । द्वाररक्षघटौ द्वौ तु उपवेद्यां तु विन्यसेत् ॥
सकूर्चौ सापिधानौ च सवस्त्रौ वारिपूरितौ । वीरं च सव्यभागे तु महावीरं च वामके ॥
द्विभुजौ च द्विनेत्रौ च रक्तवर्णौ गदाधरौ । वामे विस्मयहस्तौ च स्वनामाद्येन विन्यसेत् ॥
पूजयित्वा हृदा मन्त्री गन्धपुष्पादिभिः क्रमात् ।.... द्वारपालौ स्वदिग्भागे स्थापयेत्तु क्रमेण तु ॥
पूजयेद्गन्धपुष्पाद्यैः स्वनामाद्येन मन्त्रतः । स्थापयेत्परिवाराणि अन्तर्मण्डलमध्यमे ॥
पुरतो बलिपीठं तु कृत्वा तस्मिन्सुभूतकम् । विन्यसेत्तेन मन्त्रेण पूजयेत्तु क्रमाद्बुधः ॥
स्थापयेत्तु सुवक्त्रादीन्प्रदक्षिणक्रमेण तु ।

cf. *Kāmikāgama*, II, 45, 9-15a ; 21-22 :
परितः परिवारोक्तः प्रसङ्गात्स च कथ्यते । विश्वरूपं विशालाक्षमक्षयं मदविभ्रमम् ॥
उन्मत्तं ललितं भीमं तीक्ष्णदंष्ट्रं यथाक्रमम् । अस्याष्टमूर्तीशांस्त्वष्टपीठानिन्द्राद्यधिष्ठितान् ॥
कल्पयेत्पूर्ववत्सम्यग्द्वाराग्रे मूषिकं च वै । द्वारपौ कल्पयेद्द्वारि विकटं भीममेव च ॥
कुम्भोदरं तथैशान्यां न्यसेन्निर्माल्यधारिणम् । आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥
अविघ्नो विघ्नराजश्च भक्ष्याशी पञ्चहस्तकः । एतेऽष्टमूर्तिपाः ख्यातास्त्वन्यथा च निगद्यते ॥
हस्तिवक्त्रः प्रलम्बोष्ठो विघ्नेशश्च गणाधिपः । विनायकैकदन्तौ द्वौ भक्ष्यप्रियोऽहिमेखलः ॥
विघ्नेश्वरनिभा एते विघ्नेशस्याष्टमूर्तिपाः । परिवारान्तरे सर्वे क्षेत्रपाः परिकीर्तिताः ॥
बलिपीठं महापीठं पूर्ववत्परिकल्पयेत् । पीठस्याष्टदलेषूक्ता आमोदाद्यष्टमूर्तयः ॥
भूतेशः कर्णिकायां तु लोकपास्त्राणि बाह्यतः ।

[1] A ajoute एव aprés च    [2] A : वेद्याश्च    [3] D : कं न्यसेद्
[4] A : सदंष्ट्रणौ    [5] A : न्यस्त्वा pour न्यस्य

सर्वानेतान्न्यसेन्मन्त्री स्वस्वनामपदान्वितान् । [1]एतानप्यधिवास्यैवं प्रतिष्ठान्ते यथास्थिति ॥
पीठेषु [2]स्थापयेन्मन्त्री देवाग्रादि यथाक्रमम् ।

[विनायकप्रतिष्ठाफलश्रुतिः[3]]

एवं संस्थापितो देवः सर्वान्कामान्प्रयच्छति ॥ ८२ ॥
विशेषात्पुत्रकामस्तु स्थापयेत्तं [4]गणेश्वरम् ॥ ८३ ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [5]विनायकस्थापनविधि-
रेकोनपञ्चाशः पटलः ॥

---

[1] A : एतानेवं समाप्यैव [2] A : स्थापनं मन्त्री

[3] Cf. *Kāmikāgama*, II, 45, 104b-106 :
विघ्नेशस्थापनं ह्येवं यत्कुर्याद्बुद्धिमान्स चेत् । आयुष्कामो लभेदायुर्धनार्थी चेद्धनानि च ॥
विद्याकामोऽमलां विद्यां रतिकामो वरस्त्रियम् । पुत्रान्सौभाग्यमारोग्यं यशो वीर्यं श्रियं शुभम् ॥
लभेत्परत्र मोक्षं च विघ्नेशस्थापनेन तु ।

[4] A : गजाननम्

[5] A : विनायकस्थापनविधिस्त्रिचत्वारिंशः पटलः ; D : विनायकस्थापनपटलः

## [पञ्चाशः पटलः]

### [[1]स्कन्दस्थापनविधिः[2]]

स्कन्दस्य स्थापनं वक्ष्ये तस्योत्पत्तिपुरःसरम् । तन्मन्त्रं तत्समासेन शृणु सर्वं सुराधिप ॥ १ ॥

### [स्कन्दोत्पत्तिः[3]]

स्कन्दो मदङ्गसंभूतो मद्वीर्यो मत्पराक्रमः । मयैव हि पुरा सृष्ट उमापुत्रो[4] जगद्धितः ॥ २ ॥
[5]अग्निभूतः स चैवेति तस्याग्नेयत्वमुच्यते । [6]अयोनिजन्मसंप्राप्तये तत्सुरवरेष्वहम् ॥ ३ ॥
वैश्वानरमुखे पूर्वं मद्वीर्यं तु [7]न्यषिक्त यत् । सोऽपि [8]सोढुमशक्तस्तत्प्रविश्य शरधानकम् ॥
ससर्ज तत्र तद्वीर्यं [9]तत्तु कालवशात्पुनः । व्यक्ताङ्गोऽभूत्सुरस्तत्र दीप्तकालानलप्रभः ॥ ५ ॥
तेनाग्नेयः समुद्दिष्टः शरजन्मा च तेन वै । स्कन्दः कुमारः सेनानीः सुब्रह्मण्यो [10]गुरुस्तथा ॥
एतैरन्यैश्च बहुभिर्नामभिः समुदीरितः । [11]स्कन्दयेत्सर्वपापेभ्य इति स्कन्दत्वमस्य वै ॥ ७ ॥
[12]कुत्सितान्मारयत्येष कुमारत्वेन कीर्तितः[13] । [14]सेनानीत्वं च तस्यापि देवसेनाभिरक्षणात् ॥

### [स्कन्दमन्त्राः[15]]

तस्य प्रतिष्ठा पूजा च मन्त्रेणैव हि साध्यते । तस्मान्मन्त्रं प्रवक्ष्यामि चतुर्वर्गफलप्रदम् ॥ ९ ॥
अष्टमस्य द्वितीयान्तो द्वितीयाद्येन संयुतः । बीजेन प्रथमाद्येन संयुक्तो मूलमुच्यते ॥ १० ॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A et D seulement.

[2] Pour स्कन्दस्थापनविधि voir *Kāmika* II, 64, *Kāraṇa* II, 93, *Dīpta* 75, *Vīra* 75, *Santānasaṃhitā* 28 et *Suprabheda* I, 44.

[3] Cf. *Suprabhedāgama*, I, 44, 1-5 :
अथातः संप्रवक्ष्यामि स्कन्दस्य स्थापनं परम् । तस्योद्भवं समासेन शृणु पूर्वं गजानन ॥
देहत्यागेऽपि तां दृष्ट्वा तद्योगमहमभ्यसन् । सती चाङ्गं पुनर्गत्वा सुता हिमवतस्तथा ॥
गिरिपार्श्वे तपः कृत्वा तत्सुता पार्वती ह्यभूत् । आवयोः संगमं तत्र देवैः संप्रार्थितो यतः ॥
रेतो वह्निस्तु संग्राह्य क्षिप्त्वा शरवणे च तु । तस्माच्छरवणोद्भवो नाम इत्यपि कीर्तितम् ॥
षट्कृत्तिकास्तन्यपानात् षण्मुखस्त्वभिधीयते । तेनैव कार्तिकेयस्तु "

[4] A : पात्रे pour पुत्रो [5] D : अग्निभूतश्च सा एव [6] A : अयोनिजन्मसंप्राप्तः एतत्सुवसुरेष्वहम्
[7] D : निषिक्तवत् [8] D : षोढामशक्तस्तत् [9] A : तन्तु pour तत्तु
[10] D : गुरुस्तदा [11] D : स्कन्दं वै सर्वपापेभ्यः [12] A : कुत्सितात्मा नयत्येषः

[13] Cf. *Kumāratantra*, 26, 2b-3a :
कुशब्दः कुत्सितो ज्ञेयो मारशब्दस्तु मारणम् । कुत्सितार्थो मृतो येन कुमारो नाम विद्यते ॥

[14] A : तेनानित्यत्वं च

[15] Cf. *Kāmikāgama*, II, 64, 41b-44a :
शवर्गस्य तृतीयं तु षष्ठस्वरसमन्वितम् । चतुर्दशस्वरोपेतं बिन्दुनादविभूषितम् ॥

त्रिन्दुनादसमायुक्तश्चतुर्थ्यन्तेन तेन वै । अभिधानेन संयुक्तो नमस्कारान्तयोजितः ॥ ११ ॥
अङ्गानि हृदयादीनि पूर्ववत्परिकल्पयेत् । [1]सुब्रह्मण्याय विद्महे शक्तिहस्ताय धीमहि॥ १२ ॥
[2]तन्नः स्कन्दः प्रचोदयादिति [3]गायत्रिमुच्चरन् । गायत्री च भवेत्तस्य तत्प्रतिष्ठात्र कथ्यते॥

[स्कन्दस्थापनोचितस्थानम्[4]]

लिङ्गस्थापनयोग्येषु [5]स्थापने स्थापनं भवेत् । उक्तस्थानेषु संस्थाप्यो ग्रामादौ च शिवालये ॥

[मण्डपकल्पनम्[6]]

कल्पिते [7]धाम्नि तस्याग्रे पार्श्वयोरुभयोस्ततः[8] । [9]पूर्ववन्मण्टपं कृत्वा [10]कुण्डवेदिसमन्वितम् ॥

---

सुब्रह्मण्यं चतुर्थ्यन्तं नमोऽन्तं प्रणवादिकम् । मूलबीजमिति ख्यातं तस्मिन्ब्रह्माङ्गकल्पना ॥
सषान्तं दीर्घहस्वार्णैर्जात्यन्तैर्वा नमोऽन्तकैः । ईशानादिपदोपेतैर्ब्रह्माङ्गानि समुद्धरेत् ॥

cf. *Dīptāgama*, 75, 6b-8a :
अष्टवर्गतृतीयं तु सप्तवर्गद्वितीयकम् । प्रथमस्य चतुर्थं तु बिन्दुनादसमन्वितम् ॥
मूलमन्त्रमिति प्रोक्तं त्रिदशैरपि दुर्लभम् । ह्रस्वं ब्रह्म समाख्यातं दीर्घाण्यङ्गानि चोच्यते ॥

[1] Cf. *Kāmikāgama*, II, 64, 44b-46a :
महासेनायसंयुक्तं विद्महेपदसंयुतम् । षडाननायसंयुक्तं धीमहीति पदं ततः ॥
तन्नः स्कन्दपदोपेतमन्ते युक्तं प्रचोदयात् । गायत्रीबीजमेतत्स्यात् "

[2] D : तन्नो स्कन्दः

[3] La forme grammaticale correcte est गायत्रीमुच्चरन्

[4] Cf. *Kāmikāgama*, II, 64, 1-5a :
गुहस्य स्थापनं वक्ष्ये तल्लक्षणपुरःसरम् । पुरादेर्मध्यमे वाग्नौ यमे वा मध्यमे तयोः ॥
नैर्ऋते वरुणे वायौ सोमे शर्वेऽथवा भवेत् । अन्तरालेऽथवा तेषां शिवधाम्न्येवमेव वा ॥
अन्यदेवालयेऽप्येवमथवा पर्वतोपरि । पर्वतस्यान्तिके वापि नद्युद्यानादिकेऽथवा ॥
राजधान्यादिके वाथ पुण्यक्षेत्रे गृहेषु वा । प्रासादमण्टपादीनां देशे पुण्यतरुष्वथ ॥
कुमारालय इष्टः स्यात्"

[5] D : स्थापनैः

[6] Cf. *Dīptāgama*, 75, 17b-21a :
वास्तुहोमं दिवा कुर्यान्मण्डपं कारयेत्पुनः । प्रासादस्याग्रतः कुर्यात्पूर्वोक्तविधिना सह ॥
मध्यमे वेदिकां कुर्यात्परितः कुण्डमुच्यते । चतुरश्रं चतुर्दिक्षु आग्नेयादिषु वृत्तकम् ॥
इन्द्रईशानयोर्मध्ये जयाकुण्डं त्रिकोणकम् । सोमईशानयोर्मध्ये पद्माश्रं विजयार्थकम् ॥
अथवान्यप्रकारेण षट्कोणं तु प्रकल्पयेत् । त्रिकोणं कल्पयेत्कुण्डं शक्तिद्वयं च कारयेत् ॥

cf. *Kāmikāgama*, II, 64, 53-55a :
प्रासादस्य चतुर्दिक्षु वह्नावीशेऽथ मण्टपम् । पद्माभनवपञ्चैकसंख्याकुण्डप्रकल्पनम् ।
पूर्वोत्तरेशसंक्लृप्तस्नानवेदिकयान्वितम् । तक्षकोद्वासनं विप्रभुक्तिं गोमयलेपनम् ॥
पुण्योदसेचनं वास्तुदेवतेज्याग्नितर्पणे ।

[7] A : तानि pour धाम्नि

[8] A : उभयोस्तु तत् pour उभयोस्ततः

[9] D : मण्टपं पूर्ववत्कृत्वा

[10] A : कुण्डे pour कुण्ड

[1]विशेषोऽयं भवेत्तत्र प्रधानं स्यात्षडश्रकम् । गोमयालेपिते तस्मिन्पूर्ववत्संस्कृते ततः ॥ १६ ॥

[नेत्रोन्मीलनम्[2]]

नेत्रोन्मीलनकर्मास्य कुर्याद्वै स्नानमण्टपे । षड्वक्त्रैकमुखा[3] चापि स्वतन्त्रप्रतिमा भवेत् ॥१७॥
[4]गौणे तु [5]प्रतिमा स्थाप्या भवेदेकमुखा हरे[6] । प्रतिमां स्थण्डिले स्थाप्य पूर्वस्य पूर्ववत्कृते ॥
[7]वर्तयेन्नयनं चात्र हेमसूच्या च शिल्पिना । तस्य कर्मणि निर्वृत्ते प्रोक्षयित्वा कुशाम्भसा ॥
स्कन्दगायत्रिया पश्चाद्द्वादशाक्षि क्षिपेत्क्रमात् । दक्षिणेतरयोश्चापि [8]न्यस्यार्केन्द्वोरणू क्रमात्॥
मधु दुग्धं च हेमादिपात्रस्थं प्रस्थसंमितम् । तस्याग्रे स्थण्डिले स्थाप्य प्रोक्षयित्वा शिवाम्भसा ॥
मुद्रया चामृतीकृत्य [9]तत्राथो धेनुसंज्ञया । [10]हैमया दूर्वया मन्त्री दक्षिणेतरयोरपि ॥ २२ ॥
मधुना पयसा चैव तर्पयेन्नेत्रमुच्चरन् । [11]त्रिनेत्राय ददेत्तच्च ललाटे लोचनं सुधीः ॥ २३ ॥
अग्निमन्त्रं तु विन्यस्य तर्पयेत्सर्पिषा तथा । ततो यवनिकां तत्र [12]विसृज्य यतिभूसुरान् ॥

[बेरशुद्धिः, ग्रामप्रदक्षिणं च]

गां च [13]गायत्रिमन्त्रेण दर्शयेद्देशिकोत्तमः । पञ्चमृत्पञ्चगव्यैश्च प्रतिमाशुद्धिमादिशेत् ॥ २५ ॥

---

[1] A : विशेषः संभवेत्तत्र

[2] Cf. *Kāmikāgama*, II, 64, 49-51 :

" नेत्रमोक्षणमाचरेत् । मध्वाज्याभ्यां सहेमाभ्यां पात्रस्थाभ्यां प्रकल्पयेत् ।
हृदा सुवर्णकन्यासधान्यगोविप्रदर्शनम् । कुर्यात्प्रच्छन्नवस्त्रेण सह सर्वात्मना गुरुः ।
यदि देवीयुतः स्कन्दः पृथक् तस्याश्च कारयेत् । प्राग्वच्छुद्धिं प्रकल्प्यास्मै ब्रह्मादीनां प्रदक्षिणम् ॥

cf. *Kāraṇāgama*, II, 93, 23-24a :

नयनोन्मीलनं पश्चाज्ज्योतिर्मण्डलमालिखेत् । कन्यकागोयतींश्चैव विप्रयुग्मं प्रदर्शयेत् ॥
धान्यं च यजमानं च जनसङ्घं प्रदर्शयेत् ।

cf. *Vīrāgama*, 75, 11-16 :

सुवर्णसूचिना चैव सौम्यदृष्टिं लिखेत्ततः । अक्षिहोमं ततः कृत्वा नेत्रेणैव शताहुतिः ॥
प्रच्छन्नपटसंयुक्तं मधुवातेति तर्पयेत् । घृतमिक्षेति संतर्प्य सवत्सां गां प्रदर्शयेत् ॥
जयाविजययोश्चैव मूलमन्त्रेण कारयेत् । तृतीयस्य तृतीयं तु मायानलसमन्वितम् ॥
बिन्दुनादसमायुक्तं जयाबीजमनुत्तमम् । सप्तावर्गाच्चतुर्थं तु मायातत्त्वसमन्वितम् ॥
बिन्दुनादसमायुक्तं विजयाबीजमुच्यते । ब्राह्मणान्दर्शयेत्तत्र पुण्याहं वाचयेत्ततः ॥
स्नापयेत्पञ्चगव्येन प्रतिमां क्षालयेद्धृदा । नववस्त्रसमाधानः कुर्याद्ग्रामप्रदक्षिणम् ॥

[3] A : मुखे pour मुखा [4] A : गौणेषु pour गौणे तु [5] A : प्रतिमां स्थाप्य

[6] Cf. *Kumāratantra*, 26, 33b-34a :

स्वतः प्रधाने वक्त्रैकं मूलबेरं तु पूर्तिदम् । मोक्षार्थं षण्मुखं बेरं मूलबेरं प्रतिष्ठितम् ॥

[7] A : वर्तयेन्नयनस्यात्र [8] A : न्यस्त्वा केन्दुरणक्रमात् [9] A : तत्र योधेयसंज्ञया

[10] A : हेमया [11] A : त्रिणेत्राय [12] A : विसृज्यायसभूसुरान्

[13] La forme grammaticale correcte est गायत्रीमन्त्रेण

ततश्च गन्धतोयेन [1]स्कन्दगायत्रिमुच्चरन् । अभिषिच्य ततो नीत्वा ग्रामादौ च प्रदक्षिणम् ॥

[जलाधिवासः[2]]

ततो [3]जलाशयं नीत्वा तत्तीरे स्थाप्य देशिकः । अभिषिच्य ततो वस्त्रकूर्चमालाभिरत्र तु ॥
प्रतिमां सम्यगावेष्ट्य दत्त्वार्घ्यं तस्य मूर्धनि । निवेशयेज्जलस्यान्तः पूर्वोक्तविधिना सुधीः ॥

[शयनाधिवासः[4]]

नीत्वा [5]जलान्ततस्तत्र स्नानमण्टपमानयेत् । तत्रैव स्नानवेद्यां तु स्थाप्यार्चां प्राङ्मुखां ततः ॥
वस्त्रकूर्चादिकं न्यस्य स्कन्दगायत्रिमुच्चरन् । अभिषिच्याम्बुना कुर्यात्पुण्याहं विधिवत्सुधीः ॥
ततश्च कौतुकं [6]हैमं बन्धयेद्धृदयं स्मरन् । पूर्ववच्चाभिवेष्ट्यार्चां कूर्चवस्त्रादिभिः क्रमात् ॥३१॥
मण्टपे स्थण्डिले वेद्यां शयनं चापि पूर्ववत् । [7]संस्थाप्याथ च संप्रोक्ष्य देवानभ्यर्च्य देशिकः ॥
आनयेत्प्रतिमां तत्र शयने शाययेत्ततः । प्राक्शिरस्कोर्ध्ववक्त्रां तां ततो रक्तेन वाससा ॥३३॥

[कुम्भस्थापनम्[8]]

आच्छाद्य च ततः कुम्भान्स्थापयेत्तच्छिरोऽन्तके । हेमादिनिर्मितं रम्यं द्रोणपूरं मनोरमम् ॥

---

[1] La forme grammaticale correcte est स्कन्दगायत्रीमुच्चरन् ; voir aussi *śloka* n° 31.

[2] Cf. *Kāmikāgama*, II, 64, 52 :
जलेऽधिवासयेत्स्कन्दं लम्बकूर्चयुतं हृदा । परितः कलशान्मन्त्री न्यसेदिन्द्राद्यधिष्ठितान् ॥

cf. *Vīrāgama*, 75, 17-18a :
जलाधिवासनं कृत्वा त्रिरात्रं पञ्चरात्रकम् । मूलमन्त्रेण विप्रेन्द्र प्रच्छन्नपटसंयुतम् ॥
अभितः कलशानष्टौ लोकपालाधिदैवतान् ।

[3] A : जलाशये

[4] Cf. *Dīptāgama*, 75, 21b-23 :
शालिना विकिरेद्वेदीं तण्डुलं तिलं विन्यसेत् । शयनं पञ्चभिः कल्प्य चर्मजाद्यैरनुक्रमात् ॥
शाययेद्वेदिकामध्ये प्राक्शिरमूर्ध्ववक्त्रकम् । जयां च विजयां चैव द्वे पार्श्वे विन्यसेत्क्रमात् ॥
कौतुकं बन्धयेद्बिम्बे हृदयेन तु मन्त्रतः ।

[5] A : जलान्ततस्त्वार्थ स्नान० [6] A : हेमं pour हैमं [7] A : संस्नाप्य pour संस्थाप्य

[8] Cf. *Dīptāgama*, 75, 24-28a :
प्रतिमस्यैशदिग्भागे स्थापयेत्स्कन्दकुम्भकम् । जयाविजयाकुम्भौ च द्वौ पार्श्वे विन्यसेत्क्रमात् ॥
सवस्त्रं सहिरण्यं च सकूर्चं सापिधानकम् । पूर्वादीशानपर्यन्तमष्टकुम्भान्क्रमान्न्यसेत् ॥
कुमारं च गुहं चैव सुब्रह्मण्यं तथैव च । सेनापतिं सुराग्रं च हरसूनुं तथैव च ॥
शरवणोद्भवं चैव कार्तिकेयं च विन्यसेत् । गन्धपुष्पादिनाभ्यर्च्य स्वस्वनाम्ना च मन्त्रतः ॥
नैवेद्यं पायसं दद्यात्ताम्बूलं च निवेदयेत् ।

cf. *Kāmikāgama*, II, 64, 58b-62 :
शिरःप्रदेशे सूत्राढ्यं कुम्भं वस्त्रादिभिर्युतम् । न्यस्त्वा तस्मिन्यथा बेरे तथा स्कन्दं प्रपूजयेत् ॥
देवीयुतं चेद्विन्यस्य वर्धनीं तत्र तां यजेत् । परितोऽष्टौ घटान्न्यस्त्वा गुहविघ्नेश्वरान्यजेत् ॥

सितसूत्रविचित्रं च गन्धतोयेन पूरितम् । पञ्चरत्नसमायुक्तं सकूर्चं सापिधानकम् ॥ ३५ ॥
वस्त्रेण वेष्टितग्रीवं मालापल्लवशोभितम् । परिच्छदघटानष्टौ तदर्धपरिमाणकान् ॥ ३६ ॥
तादृशान्स्थापयेन्मन्त्री प्रागादिषु समन्ततः । वेद्या दक्षिणपार्श्वेऽथ समानीय [1]ह्युदङ्मुखः ॥
प्राणायामत्रयं कृत्वा कुर्यान्मन्त्रात्मिकां[2] तनुम् । अङ्गन्यासकरन्यासं तन्मन्त्रेणैव कारयेत् ॥
यथा बहिः स्थितं रूपं ध्यात्वा तस्य गुहस्य तु । ततः प्रधानकुम्भे[3] तमेवं प्राणपथा सुधीः ॥
आवाह्य स्थापयेत्तत्र संनिधीकृत्य रोधयेत् । मूलमन्त्रेण तत्सर्वं कुर्यात्तन्त्रोक्तमुद्रया ॥ ४० ॥
ततो गन्धादिभिश्चापि गुहं सम्यक् समर्चयेत् । देशेषु दिग्विदिक्स्थेषु पूर्वादिकलशेषु च ॥
विद्येशान्गन्धपुष्पाद्यैर्यजेत्सर्वं[4] प्रदर्शयेत् । हविर्निवेदनं पश्चात्सर्वेषामपि कारयेत् ॥ ४२ ॥

[होमः[5]]

ततो होमं तु कुण्डेषु देशिको मूर्तिपैः सह । आसनं तत्र कुर्वीत कुण्डसंस्कारपूर्वकम् ॥४३॥
होतारः साधकाः प्रोक्ताः पुत्रकास्तदलाभके[6] । ततः शान्तमनाः कुण्डे गुहदेवं प्रधानके ॥
स्कन्दं सर्वामरेशानं पूजयेत्पूर्ववत्सुधीः । शेषेष्वपि च विद्येशान्कुण्डेषु परितो यजेत् ॥ ४५ ॥
पञ्चहोमे तथा प्रोक्ताः कोणसंस्था विवर्जिताः । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
शतमर्धं तदर्धं वा होमद्रव्यं च सर्वकम् । सर्वत्रैव समिद्धोमं मूलमन्त्रेण कारयेत् ॥ ४७ ॥
आज्यादिषट् षडङ्गैस्तु होमयेद्धोतृभिः सह । द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं च संस्पृशेत् ॥

सूत्रवस्त्रसुवर्णादियुक्ताः सर्वे घटा मताः । आत्मविद्याशिवाख्यं च जानुकण्ठशिरोऽवधि ॥
न्यस्त्वा तत्त्वत्रयं सेशं मूर्तिमूर्तीश्वरान्न्यसेत् । मूर्तयः क्षमादयो लोकपाला मूर्तीश्वरा मताः ॥
प्रागुक्ता वा तदीशानाः"

[1] A omet हि dans ह्यु
[2] A : मन्त्रात्मकां pour मन्त्रात्मिकां
[3] A : कुम्भं pour कुम्भे
[4] A : यज्ञादीन् सर्वं pour यजेत्सर्वं
[5] Cf. *Dīptāgama*, 75, 28b-33 :
ततो होमं प्रकर्तव्यमग्निकार्योक्तवर्त्मना । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
शालिनीवारगोधूममुद्गैश्चैव समन्वितान् । पञ्चब्रह्मषडङ्गेन क्रमाद्धुत्वा विशेषतः ॥
स्कन्दमूलेन होतव्यं सहस्रं वा तदर्धकम् । ऋत्विग्भिः सह होतव्यं तत्तद्दशशतं शतम् ॥
षडक्षरेण मन्त्रेण होमयेत्तु सहस्रकम् । अघोरेण तु मन्त्रेण प्रायश्चित्ति शताहुतिम् ॥
जयाविजययोश्चैव प्रत्येकं तु शताहुतिः । जयादिरभ्याधानं च राष्ट्रभृच्च हुनेत्क्रमात् ॥
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ।
cf. *Santānasaṃhitā*, 28, 15-18 :
ततो होमं प्रकर्तव्यं पूर्वोक्तविधिना सह । कुमारसूक्तं देवेशि जुहुयात्तु शताष्टकम् ॥
चित्तं सन्तानेनैतत् कुमारसूक्तमिति स्मृतम् । प्रासादेन तु मन्त्रेण स्कन्दमूलेन होमयेत् ॥
पञ्चाशत्पञ्चविंशैर्वा पलाशसमिधा युतम् । चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ।
प्लक्षोदुम्बरमश्वत्थं पलाशं तु शमी तथा । मूलमन्त्रं जपित्वा तु षडङ्गैर्होमयेद्बुधः ॥
[6] A : लाभकाः pour लाभके

तत्तदङ्गानि देवस्य तत्तदङ्गं समुच्चरन् । ततस्तु मूलमन्त्रेण फलभक्ष्याणि होमयेत् ॥ ४९ ॥
ततो [1]गायत्रिमुच्चार्य घृतेनैव [2]दशाहुतीः । सर्वे हुत्वा तु कुण्डेषु रात्रौ होमं समापयेत् ॥५०॥
[3]प्लक्षोदुम्बरकाश्वत्थवटाः पूर्वादितः क्रमात् । शम्यर्कखदिराश्चैव [4]ह्यपामार्गो विदिक्षु च ॥५१॥
[5]पलाशस्तु प्रधानस्य तैरेव परिधिर्भवेत् । होमकाले वदेद्दिक्षु वेदाध्ययनमुत्तमम् ॥ ५२ ॥
शांकरेऽस्त्रजपः कार्यः[6] साधकेन समन्वितः । एवं सर्वं गुरुर्नीत्वा रात्रिं जागरतस्ततः ॥५३॥

[प्रतिमास्थापनम्[7]]

प्रभाते मूर्तिपैः सार्धं स्नानं कृत्वा च नैत्यकम् । प्रविश्य मण्टपं तत्र देवानभ्यर्च्य पूर्ववत् ॥
पूर्णां च मूलमन्त्रेण सर्वत्रापि प्रदापयेत् । आचार्यः शिल्पिना सार्धं स्थापयेच्छिवलग्नके ॥५५॥
[8]स्कन्दगायत्रिमुच्चार्य देवमुत्थाप्य यत्नतः । प्रदक्षिणं समानीय प्रासादं संप्रविश्य च ॥५६॥
[9]रत्नलोहादिकान्सर्वाँल्लिङ्गस्य स्थापने [10]यथा । पीठावटे तथा न्यस्य शक्तिचक्रं यजेत्ततः॥५७॥
प्रतिमां निश्चलां स्थाप्य सुश्लिष्टं कारयेत्ततः । स्नात्वाचम्य शुचिर्भूत्वा देशिकः शान्तमानसः ॥
मन्त्रिताम्भस्ततो नीत्वा गत्वा मण्टपमध्यमम् । तत्र पुण्याहमारभ्य प्रविश्य भवनं [11]गुरुः ॥ ५९
प्रोक्षयित्वा गृहं मन्त्री ब्रह्मभिः पञ्चभिः क्रमात् । प्रतिमां बहुशस्तोयैः शुद्धिं कृत्वा तु देशिकः ॥

---

[1] La forme grammaticale correcte est गायत्रीमुच्चार्य    [2] A : दशाहुतिम्

[3] A : प्लक्षोदुम्बरमश्वत्थं वटपूर्वादितः क्रमात्    [4] A omet हि dans ह्यपामार्गो

[5] A : पलाशं तु    [6] A : जपं कार्यं pour जपः कार्यः

[7] Cf. *Kāmikāgama*, II, 64, 71b-75 :

ततः प्रभाते संशुद्धो मूर्तिपैः सह देशिकः । उद्धृत्य षण्मुखं तं च कुम्भानग्नींश्च तर्पयेत् ॥
प्रायश्चित्तनिमित्तं तु दक्षिणेन शताहुतिः । दत्त्वा पूर्णाहुतिं पश्चात्प्रविशेद्धाम देशिकः ॥
मानुषे दैविके वापि प्राग्वत्संस्कारसंयुताम् । कशिलां हृदयेनैव रत्नधान्यादिगर्भिताम ॥
विन्यस्य स्थापयेत्तस्यां षण्मुखं मूलमुच्चरन् । सुलग्ने सुमुहूर्ते तु यथा द्वारस्य षण्मुखम् ॥
अथ ब्रह्मशिलोपेतं स्थापयेद्वा षडाननम् ।

cf. *Dīptāgama*, 75, 34-38a :

सर्वद्रव्यसमायुक्तं हव्यवाहं समुच्चरन् । स्विष्टमग्नेतिमन्त्रेण जुहुयात्तदनन्तरम् ॥
पूर्णाहुतिं यदस्येति जुहुयाद्देशिकोत्तमः । अर्चनां विधिवत्कृत्वा चतुर्द्वारादिकुम्भयोः ॥
शिवलिङ्गप्रतिष्ठोक्तमार्गेणैव समाचरेत् । उत्थाप्य शयनाद्देवं हृदि न्यासं तु कारयेत् ॥
गर्भन्यासं ततः कुर्यात्सप्तमे च पदे न्यसेत् । सुदृढं बन्धयित्वा तु शिल्पिनं तु विसर्जयेत् ॥
आचार्यदक्षिणां दद्यात्पञ्चाङ्गभूषणैः सह ।

[8] La forme grammaticale correcte est स्कन्दगायत्रीमुच्चार्य

[9] Cf. *Virāgamā*, 75, 9-10 :

रत्नन्यासं प्रकर्तव्यं पूर्वादीनि क्रमाद्बुधैः । वज्रं मरकतं चैव वैडूर्यं च प्रवालकम् ॥
चतुर्दिक्षु च विन्यस्य इन्द्रनीलं तु मध्यमे । सुस्निग्धं कारयेत्तत्र"

voir aussi *Ajitāgama*, vol. I. pp. 158-159 :

[10] A : तथा pour यथा    [11] A : कुरु pour गुरुः

[कुम्भाभिषेकः[1]]

गन्धचन्दनलिप्ताङ्गो बद्धपञ्चाङ्गभूषणः । ससद्वासाः स्थितः सूक्ष्ममुत्तरीयं दधत्तदा ॥ ६१ ॥
उष्णीषं च तथैवान्यत्प्रसन्नः प्रियदर्शनः । मूर्तिपैः सोत्तरीयैश्च [2]जापिभिश्च तथाविधैः॥ ६२ ॥
कृतमन्त्रतनुस्तत्र प्रधानं कुम्भमुद्वहन् । [3]स्कन्दस्य तं विशेषात्तु प्रासादं तु प्रदक्षिणम् ॥ ६३ ॥
बेराग्रे विन्यसेत्कुम्भं देवाग्रे स्कन्दमाश्रितम् । विद्येशांश्चैव परितो [4]होतारः कलशाष्टकम् ॥६४॥

[मन्त्रन्यासः]

कुम्भकूर्चाम्भसा मन्त्री विन्यसेत्प्रतिमाहृदि । स्थूलादिसूक्ष्मपर्यन्तं मन्त्ररूपं जनार्दन ॥ ६५ ॥
[5]स्नापयेत्स्थापकस्तत्र ततोऽङ्गानि च विन्यसेत् । विद्येशान्कलशांश्चापि क्रमात्तत्राभिषेचयेत् ॥
[6]अवर्गं मूर्ध्नि विन्यस्य कवर्गं दक्षिणे न्यसेत् । चवर्गं वामहस्ते तु टवर्गं हृदये न्यसेत् ॥ ६७ ॥

---

[1] Cf. *Kāmikāgama*, II, 64, 76-80 :
देवाग्रे तु घटान्न्यस्त्वा मन्त्रन्यासं समाचरेत् । कुम्भाद्बीजं समादाय षण्मुखस्य हृदि न्यसेत् ॥
यदि देवी सती तस्यां वर्धन्या विन्यसेन्मनुम् । पीठस्य परितश्चान्यकुम्भेभ्यो विन्यसेन्मनून् ॥
तत्तद्घटस्थिताद्भिस्तमभिषिञ्चेत्षडाननम् । तत्त्वमूर्त्यादिविन्यासं कारयेत्पूर्ववत्ततः ॥
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं चले । गुरूंश्च मूर्तिपादींश्च वस्त्राद्यैर्दक्षिणायुतम् ॥
इष्ट्वा हेमाङ्गुलीयैश्च प्रतिमास्थापनोक्तवत् । सनातनप्रतिष्ठोक्तं यदनुक्तं समाचरेत् ॥

cf. *Dīptāgama*, 75, 38b-40 :
स्नापयेत्स्कन्दमूलेन स्कन्दकुम्भं विशेषतः । जयाविजययोश्चैव तत्तन्मूलेन दापयेत् ॥
प्राणप्रतिष्ठामन्त्रेण स्कन्दशक्तिं तु कारयेत् । हविर्निवेदयेत्पश्चात्ताम्बूलं दापयेत्ततः ॥
ब्राह्मणान्भोजयेत्तत्र शैवान्संपूजयेत्तदा ।

[2] A : जातिभैश्च
[3] A : स्कन्दस्यान्तं
[4] A : होतारं कलशाष्टके
[5] A : स्नापयेत्स्नापकस्तत्र

[6] Cf. *Kāraṇāgama*, I, 27, 34 et 36b-44a :
अन्यासां देवतानां च प्रतिष्ठायां तथाक्षरान् । अक्षराणां तु विन्यासं प्रवक्ष्यामि प्रजापते ॥ ........
स्वराः षोडशका जीवाः कादयोऽपि च संस्मृताः । प्राणोपाधिविभेदेन पञ्चाशन्मातृकाः स्मृताः ॥
तैरेव चार्चिता देवाः सर्वशास्त्रे प्रजापते । अकारादिक्षकारान्तं मातृका विन्यसेत्क्रमात् ॥
शिरोललाटनेत्रेषु कर्णयोस्तु द्विगण्डयोः । नासिकोष्ठद्वयोश्चैव दन्तपङ्क्तिद्वयोरपि ॥
जिह्वायां तालुमूले च स्वराः षोडश विन्यसेत् । कवर्गं सव्यहस्ते तु चवर्गं वामहस्तके ॥
टवर्गं दक्षिणे पादे तवर्गं वामपादके । पफौ दक्षिणपार्श्वे तु बभौ वै वामपार्श्वके ॥
कण्ठदेशे मकारं तु कुक्षौ पृष्ठे तथा न्यसेत् । रसत्वग्रक्तमेदोऽस्थिमज्जाशुक्रेषु धातुषु ॥
यकारादिसकारान्तं क्रमेणैव तु विन्यसेत् । हकारं हृदि विन्यस्य ळकारं वृषणे तथा ॥
क्षकारं मेढ्रदेशे तु प्रणवेन समन्वितम् । बिन्दुनादसमायुक्तं नमस्कारयुतं न्यसेत् ॥

तवर्गं कुक्षिप्रदेशे तु पवर्गं पृष्ठतो न्यसेत् । यवर्गं दक्षिणे पादे [1]शवर्गं वामके न्यसेत् ॥ ६८ ॥
ळकारं मेढ्रदेशे तु कूटं च हृदये न्यसेत् । तारं सर्वत्रमप्यस्य [2]स्कन्दगायत्रिमुच्चरन् ॥ ६९ ॥
सर्ववर्गेषु विन्यस्य पुत्रमूलं हृदि न्यसेत् । अङ्गानि चाङ्गेष्वाधाय[3] स्नपनोक्तविधानतः ॥ ७० ॥
अभिषिच्य पुनः शुद्धिं कृत्वा मन्त्रान्पुरोक्तवत् । विन्यस्य स्कन्ददेवस्य शुभस्याग्रे महात्मनः ॥
अर्घ्यं च मूर्ध्नि विन्यस्य गन्धपुष्पादिभिः शुभैः । मूलमन्त्रैः समं पूज्य चन्दनेनानुलिप्य च ॥
मालाभरणवस्त्रैश्च यत्नेनैव समर्चयेत् । हविर्निवेदयेत्पश्चाद् महद्व्यञ्जनसंयुतम् ॥ ७३ ॥
[4]शैवांश्चतुर्विधांस्तत्र ब्राह्मणान्भोजयेत्ततः । [5]प्रागुक्ताच्च विशेषोऽयं प्रधाने [6]तूपदिश्यते ॥ ७४ ॥

[प्रधानालये विशेषः[7]]

प्रासादस्य भवेद्द्वारं पश्चिमाभिमुखं तथा । प्राङ्मुखं [8]वा परीवाराँल्लोकपालान्प्रवर्तयेत् ॥ ७५ ॥

---

[1] A : रवर्गं [2] La forme grammaticale correcte est स्कन्दगायत्रीमुच्चरन्

[3] A : आदाय pour आधाय

[4] Cf. *Mṛgendrāgama*, Caryāpāda, paṭala 1, *śloka* 2 :
देशिको मन्त्रवृत्तिश्च पुत्रकः समयी च यः । चत्वार एते शैवाः स्युः "
cf. *Kāraṇāgama*, I, 26, 1b-2 et 9-10a :
पञ्च शैवाः समाख्याताः सिद्धान्ते तु प्रजापते । प्रथमोऽनादिशैवस्तु स शैवस्तु सदाशिवः ॥
आदिशैवो द्वितीयस्तु स शिवब्राह्मणः स्मृतः । तृतीयस्तु महाशैवः स शैवो विप्र उच्यते ॥
चतुर्थश्चानुशैवोक्तो नृपश्चैव तथा स्मृतः । पञ्चमोऽन्तरशैवस्तु शूद्रश्चेति तथा मतः ॥

[5] A : प्रागुक्तविशेषोऽयं [6] A : तु प्रविश्यते

[7] Cf. *Kāmikāgama*, II, 64, 11-24 :
पूर्वास्यः पश्चिमास्यो वा दक्षोत्तरमुखस्तु वा । परिवारामरैर्युक्तः कथ्यन्ते ते प्रसङ्गतः ॥
यक्षेन्द्रो राक्षसेन्द्रश्च पिशाचेन्द्रश्च भूतराट् । गन्धर्वः किन्नरो दैत्यनायको दानवाधिपः ॥
क्रमात्पूर्वादिशर्वान्तस्थिता एते चतुर्भुजाः । वरदाभयसंयुक्ताः खड्गखेटसमन्विताः ॥
खड्गखेटसमायुक्ता द्विभुजा वाञ्जनप्रभाः । भीमरूपाः सुशान्ता वा बद्धकेशास्तु वा मताः ॥
शकुनी पूतना चैव रेवती मण्डपूतना । वक्त्रमण्डी निशान्ताशा मेषा देवाष्टमूर्तयः ॥
षण्मुखः शक्तिपाणिश्च कार्तिकेयो गुहस्ततः । स्कन्दो मयूरवाहः स्यात्सेनानीः शक्तिहस्तवान् ॥
एते वा मूर्तिपास्तस्य कृताञ्जलिपुटान्विताः । वज्रपद्मधराः सर्वे स्कन्दोक्ताकारसंयुताः ॥
चतुर्भुजा द्विहस्ता वा षड्वक्त्राश्चैकवक्त्रकाः । एते वा परितः स्थाप्याः क्रमात्पूर्वादियोगतः ॥
इन्द्रादीन्वाष्टपीठं वा मयूरं वाग्रतो गजम् । विघ्नेशं क्षेत्रपं भानुं महापीठं प्रकल्पयेत् ॥
बलिपीठं च शर्वोक्तान्परिवारांस्तु वा न्यसेत् । बलिपीठदलेष्विन्द्रपूर्वा मध्ये ग्रहेश्वराः ॥
द्वारपौ कल्पयेद्द्वारे श्यामरक्तनिभौ क्रमात् । दक्षवामगतौ द्वाराद्द्विभुजौ वा चतुर्भुजौ ॥
खड्गखेटधरौ सूचिमुद्राविस्मयसंयुतौ । श्यामाभौ रक्तवर्णौ वा सितकृष्णौ भयंकरौ ॥
जयाख्यविजयाख्यौ द्वौ द्वारपौ विकृताननौ । ईशाने कल्पयेत्स्कन्दचण्डं वेदकरं वरम् ॥
अभयं वज्रपद्मे च वहन्तं द्विभुजं तु वा । शाकल्यसंज्ञया ख्यातं तदर्थं पीठमेव वा ॥

[8] A : वापनीवारान्

[1]विशाखनैगमेयौ च दक्षिणेतरयोरपि । पार्श्वयोर्द्वारपालौ च मयूरं वाहनं तथा ॥ ७६ ॥
[2]यथास्थानं प्रतिष्ठाप्य कलशेष्वभितो न्यसेत् । वेदिकायास्तु परितो भूमौ संस्थाप्य मन्त्रवित् ॥
स्वस्वनामपदैर्मन्त्रैरर्चयित्वा यथाक्रमम् ।

[स्कन्दप्रतिष्ठाफलश्रुतिः[3]]

एवं यो विधिना देवगुहस्थापनतो नरः ॥ ७८ ॥
पुत्रार्थी पुत्रमाप्नोति जयार्थी [4]जयभाग्भवेत् । विद्यार्थी लभते विद्यां सोऽन्ते सायुज्यमाप्नुयात् ॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] स्कन्दस्थापनविधिः
[5]पञ्चाशः पटलः ॥

---

[1] A : विशाखान्तेगमेषे च

[2] A : यथास्थानं प्रविष्टांगं

[3] Cf. *Kāmikāgama* II, 64, 81-82 :
एवं यः स्थापनं कुर्यात्षण्मुखस्य द्विजोत्तमाः । आयुः पुत्रान्वसून्विद्यामकलङ्कां वरश्रियम् ॥
सौभाग्यं महतीं लक्ष्मीं नीरोगत्वं यशः सुखम् । शुभं लब्ध्वा परत्रापि मोक्षं च लभते नरः ॥

[4] A : जयदं भवेत्

[5] A : चतुश्चत्वारिंशः pour पञ्चाशः

## [एकपञ्चाशः पटलः]

[[1]चण्डेशस्थापनविधिः[2]]

[3]अथेदं स्थापनं वक्ष्ये चण्डेशस्य जनार्दन । [4]उत्पत्तिं मन्त्रपूर्वां तु समासाच्छृणु सांप्रतम् ॥१॥

[चण्डोत्पत्तिः[5]]

चण्डः स्वभावात्सन्पूर्वं शिवार्चनपरायणः । यक्षरक्षःपिशाचाद्या गणत्वं च पुरा गताः ॥२॥
शिवाज्ञया हि चण्डत्वे तिष्ठन्तो दुःसहाः सुरैः । विरिञ्चेन्द्रमुखैश्चापि दुर्धर्षाश्चण्डविक्रमाः ॥३॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A et D seulement.

[2] Pour चण्डेशस्थापनविधि voir *Kāmika* II, 65, *Kāraṇa* I, 87, *Santānasaṃhitā* 32 et *Suprabheda* I, 47,

[3] Le ms. E contient dans le *paṭala* 62 un titre en marge चण्डेशप्रतिष्ठाविधि et trois *śloka* et demi relatifs à Caṇḍeśa, et qui viennent à la place des trois premiers *śloka* relatifs à la गुरुप्रतिष्ठाविधि que l'on a dans les autres manuscrits. Le reste du *paṭala* 62 dans E concerne la गुरुप्रतिष्ठा comme dans les autres mss. Ce court passage sur Caṇḍeśa ne se trouve donc pas à sa place. Bien qu'il semble appartenir à l'*Ajitāgama* en raison du vocatif Janārdana, cet āgama étant récité par Śiva à Viṣṇu, et bien que ce *paṭala* 51 qui traite de Caṇḍeśa, ait des lacunes au début, sur les sujets, चण्डोत्पत्ति et चण्डमन्त्र et soit sans doute incomplet, la forme de ce court passage ne permet pas de le placer ici. Ces trois *śloka* et demi sont :

देवदेव महाप्राज्ञ सर्वज्ञ करुणानिधे । उत्तमस्य तु भक्तस्य चण्डेशस्य महात्मनः ॥
यथाविध्युक्तमार्गेण प्रतिष्ठां ब्रूहि मे शिव ।

भगवान्—

त्वत्प्रार्थनावशादेवमहं वच्मि जनार्दन ॥ शिवागारस्य चेशाने मण्टपं च सलक्षणम् ।
शिल्पागमविधानेन कुर्यादालयमार्गतः ॥ सर्वलक्षणसंयुक्तं चण्डेशस्य सुरोत्तम ।

[4] A : उत्पत्तिर्मन्त्रपूर्वं तु

[5] Voir *Śivarahasya*, *aṃśa* 4, *adhyāya* 7-8 pour l'autre version de la légende de Caṇḍeśa.

cf. *Dīptāgama*, 97, 3-4 :

चण्डापचण्डौ विक्रान्तश्चण्डेशश्च चतुर्विधाः । महाबला महाप्राज्ञा रुद्रा रुद्रसमप्रभाः ॥
युगे युगे क्रमाद्ब्रह्मे चण्डत्वं प्रापितास्तु ते । तस्मादीशप्रियार्थाय चण्डपूजां समाचरेत् ॥

cf. *Suprabhedāgama* I, 47, 2-3a:

रुद्रस्यैव तु रुद्रांशं तत्सर्वं चण्डनामतः । गणेशावरणे स्थित्वा दशांशेनायुतेन च ॥
प्रचण्डादि विनिष्क्रान्ताः पञ्चमूर्तिविधानतः ।

चण्डस्वभावस्तेषां यो नाशकोऽभूच्छिवाज्ञया ।

[चण्डेशमन्त्राः[1]]

चण्डेश्वराय विद्महे टङ्कहस्ताय धीमहि ॥ ४ ॥

तन्नश्चण्डः प्रचोदयादिति गायत्रिमुच्चरेत्[2] । [3]गायत्रीयं भवेत्तस्य मन्त्राः सर्वेऽप्युदाहृताः ॥५॥

[चण्डेशस्थापनयोग्यस्थानम्[4]]

प्रतिष्ठाविधिरप्यस्य [5]कथ्यतेऽद्य समासतः । शिवालयेशदिग्भागे [6]दक्षिणद्वारसंयुते ॥ ६ ॥

प्रासादे स्थापनीयोऽयमन्यत्र न हि कुत्रचित् । प्रासादस्याग्रके[7] वाथ पार्श्वयोरुभयोस्तु वा[8] ॥

---

cf. *Somaśambhupaddhati* 1, 5, 2: "रुद्राग्निप्रभवं चण्डम्"

cf. *Ajitāgama*, *paṭala* 27, śl 318b-319:

cf. *Śivamahāpurāṇa*, *Vāyavīyasaṃhitā*, II, 31, 80:
चण्डः सर्वगणेशानः शम्भोर्वदनसंभवः । सत्कृत्य शिवयोराज्ञां स मे दिशतु कांक्षितम् ॥

[1] Manquent ici les *mūla-mantra* et les *saṃhitāmantra*; voir *Kāmikāgama*, II, 65, 31b-37a:

चण्डासनं चतुर्थ्यन्तं नत्यन्तं मनुरासने । चण्डमूर्तिपदं दीपपूर्वं नत्यन्तमेव च ॥
चतुर्थ्यन्तमिदं मूर्तिमन्त्रमित्यभिधीयते । ध्वनिचण्डेश्वरायेति हुंफट्स्वाहापदेन च ॥
मूलमन्त्रः समादिष्टस्तदग्रे दीपसंयुतः । ईशानादीनि चण्डस्य चकारेणोद्धरेद्गुरुः ॥
ओं चण्डपूर्वको हुंफण्णमोऽन्तः स्याद्धृदादिकः । तन्नाम्ना हुंफडन्तेन मूर्तीनामपरो मनुः ॥
अथवान्यप्रकारेण मन्त्रश्चण्डाय कल्प्यते । ज्ञानशक्तिपदैर्मन्त्रैर्हुंफट्कारसमन्वितैः ॥
चण्डायेति पदोपेतैश्चण्डमन्त्रोऽयमीरितः । विद्याङ्गैरावृतो वाथ चण्डनाथः समीरितः ॥

[2] A: उच्चरन् pour उच्चरेत्

[3] Cf. *Kāmikāgama*, II, 65, 73-74a:
"चण्डेशानाय विद्महे । इत्युक्त्वा टङ्कहस्ताय धीमहीति पदं ततः ॥
तन्नश्चण्डपदं पश्चात्पदमुक्त्वा प्रचोदयात् ।

[4] Cf. *Kāmikāgama* II, 65, 1-3a et 7
चण्डेशस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् । परस्वतन्त्रभेदेन द्विविधं तच्च संमतम् ॥
पुरादौ मध्यमे वाष्टदिक्षु चण्डेश्वरालयः । धामेशानेऽथ सौम्ये वा सोमेशेन्द्रान्तरेऽथ वा ॥
अन्तर्मण्डलदेशेऽन्तर्हारायां वेष्टशालके । दक्षिणद्वारसंयुक्तः पराङ्गश्चेन्मुनीश्वराः ॥
स्वतन्त्रस्थापने दक्षपूर्वपश्चिमदिङ्मुखः ।

cf. *Kāraṇāgama* I, 87, 36b-37:
शैलजप्रतिमा चेत्तु उक्तस्थानेषु मन्दिरे । याम्याभिमुखसंयुक्तं स्थापयेन्मानुषे पदे ॥
चण्डस्य स्थाननिर्देशो नास्ति युक्त्या तु विन्यसेत् ॥

[5] D: विनिवेद्य pour कथ्यतेऽद्य [6] D: दक्षिणे pour दक्षिण [7] D: अग्रगे pour अग्रके

[8] D: तथा pour तु वा

[मण्टपकल्पनम्[1]]

मण्टपं विधिना कृत्वा तस्मिन्कुण्डानि कल्पयेत् । [2]आशासु चतुरश्राणि वृत्तान्यग्न्यादिषु क्रमात्॥
शक्रशांकरयोर्मध्ये वृत्तं प्राधान्यमुच्यते । पञ्चहोमे तु पद्मं तु शांकरे परिकल्पयेत् ॥ ९ ॥
हित्वा वृत्तानि सर्वाणि संस्कारादि यथा पुरा । मण्टपस्य प्रयुञ्जीत ततोऽक्ष्युन्मीलनक्रियाम् ॥

[नेत्रोन्मीलनम्[3]]

मण्टपस्य तु पार्श्वस्थे कुर्याद्वै स्नानमण्टपे[4] । स्थण्डिलं शालिभिः कृत्वा तन्मध्ये स्थाप्य देशिकः॥
प्रतिमां प्राङ्मुखामत्र[5] परितोऽभ्यर्च्य दिक्पतीन् । सास्त्रान्मूलेन संप्रोक्ष्य शिल्पिना वर्तयेत्ततः ॥
सूच्या तु हैमया सर्वा रेखा नेत्रत्रयेषु च । शिल्पिकर्मणि निर्वृत्ते मधु सर्पिः पयः क्रमात् ॥
संगृह्य पूर्ववत्पात्रे[6] बेराग्रे स्थापयेत्ततः । सौवर्णं कमलं तेषु न्यस्य[7] पात्रेषु देशिकः ॥ १४ ॥
अस्त्रमन्त्रं समुच्चार्य प्रोक्षयेत्तान्पृथक् पृथक् । हैमया [8]दूर्वया [9]पश्चान्मधु नेत्रे तु दक्षिणे ॥१५॥
सर्पिर्वामे ललाटे च दुग्धं चाप्यथ तर्पयेत् । नेत्रमन्त्रं गृणन्मन्त्री ततः [10]स्वर्णनखान्वितैः ॥
[11]अङ्गुल्यग्रैस्त्रिभिश्चापि नेत्रमन्त्रं त्रिषु न्यसेत् । पञ्चमृत्पञ्चगव्यैश्च कृत्वा शुद्धिं ततः सुधीः ॥

[जलाधिवासः]

पुण्याहं वाचयित्वा तु ब्राह्मणान्गाश्च दर्शयेत् । ततो जलाधिवासाय [12]जलतीरं समानयेत् ॥

[1] Cf. *Kāraṇāgama* I, 87, 8-13.
हर्म्याग्रे मण्टपं कुर्यादष्टहस्तप्रमाणकम् । कलास्तम्भसमायुक्तं युगाश्रं तस्य मध्यमे ॥
स वेदिकां कुर्याद्धीमांस्तत्त्रिभागैकभागया । रत्निमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ॥
कुण्डानि परितः कुर्यान्मानुषे तु पदे क्रमात् । इन्द्राशादिचतुर्दिक्षु वेदाश्रं कारयेत्ततः ॥
वृत्तकुण्डं तथैशान्यां प्रधानं कल्पयेद्बुधः । मण्टपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ॥
उद्वास्य शिल्पिनं पश्चाद्गोमयेनोपलेपयेत् । मण्टपं भूषयित्वा तु भूसुरान्भोजयेत्ततः ॥
गोमयालेपनं कृत्वा पुण्याहं वाचयेत्ततः । द्वारपूजादिकं सर्वं स्थापनक्रमवत्सुधीः ॥

[2] A omet les *śloka* 8b et 9.

[3] Cf. *Kāraṇāgama* I, 87, 2b-7:
अङ्कुराण्यर्पयेद्धीमान्पूर्वोक्तविधिना सह । विचित्रमण्टपे मध्ये स्थण्डिलं शालिभिः क्रमात् ॥
तन्मध्ये नलिनं लिख्य तस्योर्ध्वे प्रतिमां न्यसेत् । न कुर्याद्रत्नविन्यासं नेत्रमोक्षणमारमेत् ॥
हेमसूच्या लिखेत्पक्ष्मरेखां वै कृष्णमण्डलम् । ज्योतिर्मण्डलमालिख्य मध्वाज्याभ्यां तु तर्पयेत् ॥
नेत्रेण तर्पयित्वा तु कुर्याद्रव्याभिषेचनम् । ग्रामप्रदक्षिणं नोक्तं कुर्याज्जलाधिवासनम् ॥
वस्त्रेण प्रतिमां वेष्टय लम्बकूर्चसमन्विताम् । जलमध्ये प्रपां कृत्वा शाययेत्तस्य मध्यमे ॥
एकरात्रं द्विरात्रं वा जले चैवाधिवासयेत् ।

[4] A: मण्टपम् pour मण्टपे
[5] D: प्राङ्मुखस्तत्र
[6] D: पार्श्वे pour पात्रे
[7] A: न्यस्त्वा pour न्यस्य
[8] D: पूर्वया pour दूर्वया
[9] A: वामे मधु pour पश्चान्मधु
[10] A: स्वर्णवांचितैः
[11] A: अङ्गुल्याग्रैस्त्रिभिर्नेत्रैर्मन्त्वं त्रिषु च विन्यसेत्
[12] A: जलतीरे

तत्र [1]स्थाप्य तथा देव स्नाप्य [2]गायत्रिमुच्चरन् । आवेष्टय कूर्चवस्त्राभ्यामस्त्रमन्त्रं समुच्चरन् ॥
प्रणवेन शिरस्यर्घ्यं [3]दत्त्वा तज्जलमध्यमे । पूर्ववच्छादयेन्मन्त्री चण्डमूलमनुस्मरन् ॥ २० ॥
परितो [4]दिक्पतीन्सास्त्रानर्चयेच्च यथाक्रमम् । [5]उक्तकालेऽप्यतीतेऽथ स्नानमण्टपमानयेत् ॥

[बेरशुद्धिः]

शङ्खभेर्यादिनिर्घोषैः प्रतिमां वेदिकोपरि । ततः संस्थाप्य तद्वस्त्रं कूर्चं चापि परित्यजेत् ॥२२॥
ततः शुद्धोदकेनैव प्रतिमामभिषेचयेत् । तस्य [6]गायत्रिमुच्चार्य [7]गन्धोदेनाभिषेचयेत् ॥ २३ ॥

[शयनाधिवासः[8]]

कौतुकं च हृदा बध्वा वेष्टयेत्प्रतिमां ततः । कूर्चेन वाससा चैव ततोऽर्घ्यं शिरसि न्यसेत् ॥
ततो मण्टपवेद्यां तु पूर्ववत्कल्पिते शुभे । स्थण्डिले शयनं चापि पूर्ववत्परिकल्पयेत् ॥ २५ ॥
शाययेत्प्रतिमां मन्त्री प्राक्शिरश्चोर्ध्ववक्त्रकाम्[9] । मूलमन्त्रं समुच्चार्य सर्वातोद्यसमन्वितम् ॥

[कुम्भस्थापनम्[10]]

ततश्चण्डेश्वरं देवं छादयेत्पीतवाससा । ततश्चण्डाधिपं कुम्भं सर्वलक्षणसंयुतम् ॥ २७ ॥

---

[1] D: स्थाप्याथ तं pour स्थाप्य तथा [2] La forme grammaticale correcte est गायत्रीम्
[3] D : दत्त्वाथ जल॰ pour दत्त्वा तज्जल॰ [4] A : दिक्पतींस्तत्र अर्चयेच्च [5] D : उक्ते pour उक्त॰
[6] Cf. note 2 [7] D : प्रतिमामभिषेचयेत्
[8] Cf. *Kāmikāgama* II, 65, 44b-46:
जलादानीय चण्डेशं प्राग्वत्स्नपनमाचरेत् । कौतुकं बन्धयित्वान्ते सर्वात्मानं समुच्चरन् ॥
कल्पयेच्छयनं वेद्यामण्डजाद्यैरनुक्रमात् । पञ्चभिर्वाम्बरैः शुद्धैः शाययेद्धृदयेन तु ॥
वासोभ्यां वेष्टयित्वा तु "
cf. *Kāraṇāgama* I, 87, 15b-17:
जलादुत्तीर्य बिम्बं तु वस्त्रादीनि विसर्जयेत् । कृत्वा तु पूर्ववच्छुद्धिं विन्यसेच्छयनोपरि ॥
गन्धपुष्पादिभिश्चैव पूजयेद्धृदयेन तु । आवेष्टय नववस्त्रेण प्राक्शिरश्चोर्ध्ववक्त्रकाम् ॥
प्रतिमां शाययेद्धीमान्कौतुकं बन्धयेत्ततः ।
[9] A: वक्त्रकम् pour वक्त्रकाम्
[10] Cf. *Kāraṇāgama* I, 87, 18-21:
प्रतिमायाः शिरोभागे चण्डकुम्भं तु विन्यसेत् । ससूत्रं सापिधानं च सोदकं कूर्चसंयुतम् ॥
हेमटङ्कसमायुक्तं वस्त्रेणैव समावृतम् । तन्मध्ये च समूर्तिं च ध्यात्वा न्यस्त्वा हृदार्चयेत् ॥
टङ्कमुद्रां प्रदर्श्याथ पद्ममुद्रां प्रदर्शयेत् । अभितः कलशानष्टौ सूत्रादिभिः समन्वितान् ॥
इन्द्रादिषु क्रमान्न्यस्त्वा लोकपालांश्च विन्यसेत् । गन्धपुष्पादिना तत्तदीशानेनैव पूजयेत् ॥
cf. *Kāmikāgama* II, 65, 47-53:
चण्डोत्तमाङ्गदेशे तु सूत्रकूर्चाम्बरान्वितम् । सहैमटङ्कतोयाढ्यं विन्यसेत्तु सपल्लवम् ॥
तथाविधघटानष्टौ विन्यसेत्परितो बहिः । चण्डेशो देवीयुक्तश्चेद्वर्धनीमुत्तरे न्यसेत् ॥
सासनेन सदेहेन चण्डेशेनाप्यधिष्ठितम् । कुम्भमिष्ट्वा तु पूर्वोक्तध्यानयुक्चन्दनादिभिः ॥
हृच्छिरश्चूलिकावर्मशस्त्राणि परितो बहिः । घटेषु पूजयेन्मन्त्री बिन्यासाद्युत्तरावधि ॥

हेमटङ्कसमोपेतं [1]गन्धोदपरिपूरितम् । वस्त्रकूर्चापिधानाढ्यं शिरोभागेऽथ विन्यसेत् ॥ २८ ॥
परितश्च घटानष्टौ तपस्वी तादृशान्न्यसेत् । मन्त्रात्मिकां तनुं [2]पश्चात्पूर्ववत्कारयेत्सुधीः ॥२९॥
आवाहयेत्ततश्चण्डं ध्यात्वा हृदि समाहितः । यथा बहिः स्थितं रूपं कुम्भे तस्मिन्प्रसन्नधीः ॥
आवाहनादिभिः पश्चान्मूलमन्त्रं समुच्चरन् । गन्धपुष्पादिभिर्मन्त्रैः पूजयेत्परितः स्थितान् ॥

[होमः[3]]

[4]तत्रस्थानपि देवांस्तु पूर्वादि परितो यजेत् । ततो होमं प्रकुर्वीत कृत्वा कुण्डेषु च क्रमात् ॥
कुण्डसंस्कारपूर्वं तु वह्निं संस्थाप्य पूर्ववत् । [5]कुण्डेषु कुम्भवद्देवान्संस्थाप्याभ्यर्चयेत्ततः ॥३३॥
युक्तो [6]वाहादिभिर्मन्त्री[7] [8]होमं सर्वत्र कारयेत् । समिदाज्यचरूणां तु[9] तिलसर्षपयोस्तथा ॥
मुद्गमाषयवानां च[10] प्रत्येकं तु [11]शताहुतीः । तदर्धं वा [12]क्रमान्मूलमन्त्राङ्गैश्च यथाक्रमम् ॥
गायत्र्या [13]सह कुर्यात्तु प्रतिद्रव्यं तु सर्पिषा । हुत्वा व्याहृतिमन्त्रैस्तु देशिको होतृभिः सह ॥३६
तत्तदङ्गं स्पृशेन्मन्त्री बेरस्य पुष्पपाणिना । सर्वद्रव्यावसाने तु कुण्डेशानां [14]दशाहुतीः ॥३७॥
सर्पिषा जुहुयात्पश्चात्परिषिच्य समाचरेत् । ततो [15]हविश्च देवानां कुम्भस्थानां [16]प्रदापयेत् ॥
ताम्बूलं च ततो [17]दत्त्वा नीत्वा रात्रिं तु देशिकः ।

[अधिवासानन्तरकृत्यम्[18]]

प्रभाते कृतनित्यस्तु मण्टपं संप्रविश्य च ॥ ३९ ॥

---

लोकपालांस्तु वा तेषु चण्डमूर्त्यष्टकं तु वा । गन्धपुष्पादिभिश्चेष्ट्वा तत्त्वमूर्त्यादिकं न्यसेत् ॥
आत्मविद्याशिवाख्यं च ब्रह्मादींश्च तदीश्वरान् । क्ष्मादिमूर्तीस्तदीशानांल्लोकपानपि विन्यसेत् ॥
प्रागुक्तमूर्तयो वाथ रुद्रभक्तादयोऽथवा । सासनं मूर्तियुक्चण्ड ब्रह्माङ्गसहितं यजेत् ॥

[1] D : गन्धोदकसुपूरितम्
[2] A : पश्चाद् गन्धोदपरिपूरितम्
[3] Cf. *Kāraṇāgama* I, 87, 22-27:
नववस्त्रधरोष्णीषः सोत्तरीयः सुमालिकः । रुद्राक्षमालाभरणमन्त्रमुद्राक्रियान्वितः ॥
आचार्यो मूर्तिपैः सार्धं होमकर्म समारभेत् । अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥
शमीखदिरमायूरप्लक्षं चैव दिशासु वै । प्रधानस्य पलाशं तु समिधः संप्रकीर्तिताः ॥
हृदयेन समिद्धुत्वा चण्डमूलेन होमयेत् । अस्त्रेणैव चरुं हुत्वा लाजमीशानकं हुनेत् ॥
सर्षपं कवचेनैव द्रव्यान्ते व्याहृतिं हुनेत् । प्रत्येकं शतमर्धं वा तदर्धं वापि होमयेत् ॥
द्रव्यान्ते व्याहृतिं हुत्वा स्पृशेद्बिम्बस्य मस्तके । एवं जागरणं रात्रौ ''
[4] A : तत्र स्थापनदेवांस्तु
[5] A : कुम्भेषु कुण्डवद्देवान्
[6] वाहाः = मूर्तिपाः
[7] A : मन्त्रैः pour मन्त्री
[8] D : मन्त्रैर्होमं समाचरेत्
[9] D : चरून् लाजान् pour चरूणां तु
[10] D : यवान्नं च pour यवानां च
[11] A : शताहुतिम्
[12] A : क्रमान्मूलमन्त्रांश्चैव
[13] A : संस्कुर्यात्तु pour सह कुर्यात्तु
[14] A : दशाहुतिः
[15] A : हविर्विश्वदेवानां
[16] D : पृथक्पृथक्
[17] D : ध्यात्वा pour दत्त्वा
[18] Cf. *Kāmikāgama* II, 65, 59-62 :
ततः प्रभाते शुद्धस्तु मूर्तिपैः सह देशिकः । उद्धृत्य चण्डबिम्बं तु कुम्भानग्नींश्च तर्पयेत् ॥

मन्त्रात्मिकां तनुं कृत्वा [1]पुष्पैर्देवांश्च पूजयेत् । सर्वकुण्डेषु संपूज्य देवान्व्याहृतिपूर्वकम् ॥४०॥
[2]स्रुचा पूर्णाहुतिं दद्यान्मूलमन्त्रं समुच्चरन् । [3]परिषिच्य ततो देवान्कुण्डेऽभ्यर्च्य[4] विवर्जयेत् ॥

[ प्रतिमास्थापनम् ]

परिधीन्विष्टरांश्चैव संप्रोक्ष्याग्नौ [5]विनिक्षिपेत् । ततो गर्भगृहं गत्वा ब्राह्मे दिव्येऽथवा पदे ॥
स्थाप्याधार[6]शिलां तत्र रत्नादि [7]विधिवन्न्यसेत् । ततो मण्टपमागम्य बेरमुद्धृत्य मूलतः ॥
वस्त्रादिकं समुत्सृज्य दत्त्वार्घ्यं शिरसि क्रमात् । रथादिषु समारोप्य कृत्वा [8]धामप्रदक्षिणम् ॥
[9]नीत्वा गर्भगृहं तत्र [10]स्थापयेत्संस्पृशञ्छिरः । मूलविद्यां [11]भणन्मन्त्री शिल्पिना सह [12]देशिकः॥

[कुम्भाभिषेकः[13]]

शिल्पिकर्मणि निर्वृत्ते तमुद्वास्याथ शिल्पिनम् । स्नात्वा विद्यात्मकं [14]देहं कृत्वा पुण्याहमत्र तु ॥
गर्भगेहे[15] ततो बेरं पञ्चमृत्पञ्चगव्यकैः । शोधयित्वा हृदा मन्त्री गन्धोदेनाभिषिच्य च ॥
ततस्तान्मण्टपे कुम्भान्यथापूर्वं [16]समानयेत् । बेराग्रे स्थण्डिले [17]तांश्च यथापूर्वं तु विन्यसेत् ॥
[18]तत्रोदङ्मुखमाविश्य पूर्ववत्सकलीकृतः[19] । ध्यात्वा देवं तु [20]कुम्भस्थं यथापूर्वं तु देशिकः ॥
मूलविद्यां समुच्चार्य ततः [21]कूर्चसृताम्भसा । प्रतिमाहृदि [22]कुम्भस्थदेवं विन्यस्य पूजयेत् ॥५०॥
गन्धादिभिस्तु मूलेन ततोऽङ्गानि यथास्थिति । [23]अङ्गेषु तेषु विन्यस्य ततश्चाभ्यर्चयेच्छनैः ॥
ततो [24]हारादिकं न्यस्य पूर्वादारभ्य विन्यसेत् । [25]चण्डेशमभिषिच्याथ पुनर्मन्त्रांश्च विन्यसेत् ॥

---

प्रायश्चित्तं च पूर्णां च गुरुः कृत्वा समूर्तिपः । वस्त्रस्वर्णाङ्गुलीयाद्यैः पूजितः प्राप्तदक्षिणः ॥
अधमा पञ्चनिष्का तु द्विगुणा मध्यमा भवेत् । त्रिगुणा चोत्तमा प्रोक्ता चान्येषां पूर्ववद्भवेत् ॥
प्रतिष्ठा कशिलादीनां प्राग्वत्कार्या द्विजोत्तमाः । सुमुहूर्ते प्रतिष्ठाप्य धाम्नि मन्त्रांस्तु विन्यसेत् ॥

1 D : यष्ट्वा pour पुष्पैर्  
2 A : आचार्यः pour स्रुचा  
3 A : अभिषिच्य pour परिषिच्य  
4 D : कुण्डेभ्यश्च pour कुण्डेऽभ्यर्च्य  
5 D : तु निक्षिपेत्  
6 A : आधान pour आधार  
7 A : निधि विन्यसेत्  
8 D : धाम्नि pour धाम  
9 A : गत्वा pour नीत्वा  
10 A : स्थापयेद्यत्स्पृशेच्छिरः  
11 A : गृणन् pour भणन्  
12 A : दैवतम् pour देशिकः

13 Cf. *Kāmikāgama*, II, 65, 63-65a :
देवाग्रस्थण्डिलस्थेभ्यः कुम्भेभ्यो देशिकोत्तमः । तत्तत्कुम्भगतैस्तोयैः स्नापयेच्चण्डविग्रहम् ॥
स्नपनं भूरि नैवेद्यमुत्सवं च चलं यदि । कारयेद्देवियुक्तं चेत्तस्याश्च स्थापनं नयेत् ॥
चण्डेश्वरप्रतिष्ठेयं बालस्थानान्विता न वा ।

14 A : देवं  
15 A : गर्भगेहं  
16 A : समारभेत्  
17 A : चाथ pour तांश्च  
18 A : तन्त्रोद्यमुखमाविश्य  
19 A : कृतम् pour कृतः  
20 D : कुम्भं तु  
21 A : कूर्चास्रुताम्भसा  
22 A : कुम्भादिदेवं  
23 A : अङ्गेष्वेतेषु  
24 A : धारादिकं न्यस्त्वा  
25 Les *śloka*, 52b à 57 manquent dans le ms. A.

[मन्त्रन्यासः]

प्रणवं मूर्ध्नि विन्यस्य मूलं वक्त्रेऽथ विन्यसेत् । पुनश्च हृदये तारं गायत्रीं कुक्षिदेशके ॥
पादयोरुभयोश्चापि चण्डबीजं ततो न्यसेत् । गन्धादिभिः समभ्यर्च्य कृत्वा पूजां विशेषतः ॥
लिङ्गे निवेदयित्वाथ पायसं घृतसंयुतम् । ततस्तच्चण्डमूलेन चण्डेशाय प्रदापयेत् ॥ ५५ ॥
ताम्बूलं च ततो दद्याद्दद्यान्मालादिकं ततः । एवं प्रतिदिनं दद्याच्छिवलिङ्गे निवेदितम्[1] ॥
एवं वै स्थापयेन्मर्त्यश्चण्डेशं तु शिवालये । सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात्[2] ॥५७॥

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [3]चण्डेशस्थापनविधि-
रेकपञ्चाशः पटलः ॥

---

[1] Cf. *Kāraṇāgama*, I, 87, 35b: देवस्यैव तु नैवेद्यं मालां चैव प्रदापयेत्

[2] Cf. *Kāmikāgama* II, 65, 65b-67:
चण्डेशस्थापनं ह्येवं यः कुर्यान्नरपुंगवः । आयुष्कामी लभेदायुर्धनार्थी चेद्वसूनि च ॥
विद्याकामोऽमलां विद्यां पुत्रार्थी चेत्सुतं लभेत् । लक्ष्मीकामो महालक्ष्मीं रतिकामो वरस्त्रियम् ॥
चण्डेश्वरं प्रपन्ना ये न तेषां भवकारणम् ॥
cf. *Kāraṇāgama* I, 87, 38a:
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।

[3] A : चण्डेशस्थापनविधिः पञ्चचत्वारिंशः पटलः; D: चण्डेशस्थापनपटलः

## [द्विपञ्चाशः पटलः]

[¹ज्येष्ठास्थापनविधिः]

[²ज्येष्ठायाः स्थापनं वक्ष्ये तदुत्पत्तिपुरःसरम् । तन्मन्त्रं च समासेन शृणु सर्वं जनार्दन ॥१॥

[ज्येष्ठोत्पत्तिः³]

आदिशक्तेः समुत्पन्ना पश्चादुदधिसंभवा । उदधौ मथ्यमाने सा चोत्थिता सुरसत्तम ॥ २ ॥
तदुत्पत्तिरिति प्रोक्ता मन्त्रांस्तस्या वदामि ते ।

[ज्येष्ठामन्त्राः⁴]

तृतीयस्य तृतीयं तत्सप्तमाद्येन संयुतम् ॥ ३ ॥

---

[1] Pour ज्येष्ठास्थापनविधि voir *Kāmika* I, 72, *Kāraṇa*, I, 60 et II, 83, *Vīra* 76, *Santānasaṃhitā* 29 et *Suprabheda* I, 45.

[2] Ce *paṭala* se trouve dans les manuscrits A et H seulement (H=ms. de Venkatesvara University Oriental Research Institute, Tirupati, ms. n° 3972) mais tous deux ont, au début, une même lacune. On peut supposer, d'après le contenu d'autres *paṭala* semblables que la portion manquante consiste en *śloka* sur *utpatti*, *mantra*, *pratiṣṭhāyogyasthāna*, *maṇṭapa* etc. Les *śloka* proposés entre crochets à titre de reconstruction hypothétique, ont pour seul objet de suggérer le contenu de cette lacune, et s'appuient pour cela sur l'autorité du *Suprabhedāgama* et du *Kāraṇāgama* cités en notes.

[3] Cf. *Suprabhedāgama*, I, 45, 1-4 :

अथातः संप्रवक्ष्यामि ज्येष्ठायाः स्थापनं परम् । आदिशक्तेः समुत्पन्ना पश्चादुदधिसंभवा ॥
उदधौ मथ्यमाने तु चोत्थिता सा गजानन । कालाञ्जननिभा देवी सर्वाभरणभूषिता ॥
खरारूढा कलेः पत्नी सुखासीनाहिता तनुः । जानुपार्श्वे मणिर्वाथ वृषास्यो वृषभस्तथा ॥
वृषभो रक्तवर्णस्तु मणिः काञ्चनसप्रभा । रूपाण्येतानि कृत्वा तु प्रतिष्ठां सम्यगाचरेत् ॥

voir aussi *Pādmapurāṇa*, *uttarakhaṇḍa*, *adhyāya* 260 *śloka* 23-34

[4] Cf. *Vīrāgama*, 76, 7b-11a :

मूलमन्त्रं प्रवक्ष्यामि द्वितीयस्य तृतीयकम् । सप्तमस्य द्वितीयं तु प्रथमस्य चतुर्थकम् ॥
बिन्दुनादसमायुक्तं ज्येष्ठामूलमिति स्मृतम् । ह्रस्वा ब्रह्म समाख्याता दीर्घाण्यङ्गानि चोच्यते ॥
प्रथमस्यैकादशं युक्तं बिन्दुनादसमन्वितम् । पुत्रबीजमिति ज्ञेयं पुत्रीबीजमतः शृणु ॥
पञ्चमात्पञ्चमं गृह्य बिन्दुनादसमन्वितम् । पुत्रीबीजमिति ख्यातं स्थापनं शृणु तत्त्वतः ॥

cf. *Kāraṇāgama*, I, 60, 128 :

स्वनामाद्यक्षरं तेषां बिन्दुनादसमन्वितम् । प्रणवादिनमोऽन्तं च सर्वेषां मन्त्रमुच्यते ॥

cf. *Marīcisaṃhitā*, p. 123 : " नामाद्यक्षरबीजा ज्येष्ठा "

cf. Appendice du *Yogajāgama* (ms. No. T 161, p. 38):

ओं फलप्रदायै विद्महे पापहन्त्र्यै च धीमहि तन्नो ज्येष्ठा प्रचोदयात् ।

प्रथमैकादशेनापि तन्मूलं बिन्दुनादयुक् । तारमादौ समुच्चार्य ततो मूलमुदीर्य च ॥ ४ ॥
ज्येष्ठापदं चतुर्थ्यन्तमन्ते चापि नमःपदम् । संयोज्योच्चारयेन्मन्त्रं मूलमन्त्रमिति स्मृतम् ॥५॥
जकारेणैव चाङ्गानि हृदयादीनि कल्पयेत् । फलप्रदायै विद्महे पापहन्त्र्यै च धीमहि ॥ ६ ॥
तन्नो ज्येष्ठा प्रचोदयाद्गायत्रीयं प्रकीर्तिता । स्वनामाद्यक्षरं चैव बिन्दुनादसमन्वितम् ॥ ७ ॥
प्रणवादिनमोऽन्तं चाप्यन्येषां मन्त्रमुच्यते । एवं मन्त्राः समुद्दिष्टाः प्रतिष्ठाविधिरुच्यते ॥८॥

[प्रतिष्ठायोग्यस्थानम्]

लिङ्गस्थापनयोग्येषु स्थानेष्वपि शिवालये । ग्रामादिष्वपि चोक्तेषु स्थानेष्वेनां प्रकल्पयेत्॥९॥

[मण्टपः[1]]

तदग्रे मण्टपं कुर्यात्पूर्ववत्पार्श्वयोस्तथा । तत्र वेद्यास्तु परितः कुर्यात्कुण्ड]चतुष्टयम् ॥१०॥
योन्याकारं प्रधानं स्याच्छेषं पूर्ववदाचरेत् ।

[नेत्रोन्मीलनम्[2]]

नेत्रोन्मीलनकर्मार्थं प्रतिमास्ताः[3] समानयेत् ॥ ११ ॥
स्नानमण्टपमध्ये तु [4]स्थण्डिलं परिकल्पयेत् । विन्यस्य [5]प्रतिमास्तासां नेत्रोन्मीलनकर्म च ॥
शिल्पिना कारयित्वाथ मध्वाज्याभ्यां च पूर्ववत् । तर्पयित्वाक्षिमन्त्रेण तत्तन्नेत्रेषु देशिकः ॥

---

[1] Cf. *Virāgama*, 76, 15b-17a :
पूर्वोक्तमण्डपे रम्ये मध्ये वेदिकया युते । कुण्डानि कारयेत्तत्र नव वा पञ्च एव वा ॥
वृत्तं वा चतुरश्रं वा सर्वकुण्डानि कारयेत् । आग्नेय्यां पुत्रकुण्डं तु नैर्ऋत्यां पुत्रिकुण्डकम् ॥
cf. *Santānasaṃhitā*, 29, 8b-9 :
पूर्वोक्तलक्षणैर्युक्तं मण्टपं कारयेत्ततः । मण्टपस्य चतुर्दिक्षु त्रिकोणं कुण्डमुच्यते ॥
ईशान्यां वृत्तकुण्डं स्यात्कुण्डमेवं विधीयते ।
cf. *Kāraṇāgama*, II, 83, 6 :
पूर्वोक्तयागं संकल्प्य वेदिकामध्यमे चरेत् । पञ्चकुण्डं प्रकल्प्याथ एककुण्डमथापि वा ॥
cf. *Kāmikāgama*, I, 72, 1-4 :
स्थापनं परिवाराणां संक्षेपाच्छृणुत द्विजाः । त्रिहस्तं तु समारभ्य करस्यैकस्य वर्धनात् ॥
मण्टपस्यास्य विस्तारो नवहस्तान्तमेव हि । तन्मध्ये वेदिकोपेतं षोडशस्तम्भसंयुतम् ॥
रविस्तम्भयुतं वापि चतुस्तम्भयुतं तु वा । कुण्डं वा स्थण्डिलं वापि शरवेदैकसंख्यया ॥
वृत्तं वा चतुरश्रं वा कुण्डं कुर्याद्दिगश्रकम् । मातॄणां नवकुण्डं वा चैककुण्डमथापि वा ॥

[2] Cf. *Virāgama*, 76, 12-14 :
नयनमोक्षणं कुर्यात्पञ्चब्रह्मसमन्वितम् । अक्षिहोमं ततः कुर्यादाज्येनैव शताहुतिः ॥
तर्पयेन्मधु सर्पिश्च सवत्सां गां प्रदर्शयेत् । जलाधिवासनं कुर्यान्मूलमन्त्रेण देशिकः ॥
प्रच्छन्नपटसंयुक्तं कलशाँल्लोकपालकान् । एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ॥

[3] A : प्रतिमास्थान् pour प्रतिमास्ताः

[4] A : स्थण्डिले pour स्थण्डिलं

[5] A : प्रतिमां तस्याः pour प्रतिमास्तासां

[जलाधिवासः]

पूर्ववत्प्रतिमाशुद्धिं कृत्वा गत्वा जलाशयम् । तत्तीरे ताश्च[1] विन्यस्य कृत्वा पुण्याहमप्यथ ॥
अभिषिच्य प्रतिमास्ताः कूर्चमालांशुकैस्तथा । आवेष्ट्याभ्यर्च्य[2]ता मन्त्री[3]जलस्यान्तः प्रविश्य च॥
तत्राधिवास्य चार्चास्ताः कालं नीत्वा तु पूर्ववत् । स्नानमण्टपमानीय वस्त्रकूर्चादिकं त्यजेत् ॥
मूलेन तु शिरस्यर्घ्यं तासां दत्त्वा क्रमेण तु । अभिषिच्य पुनर्गन्धतोयेन सुसमाहितः ॥१७॥

[शयनाधिवासः[4]]

कूर्चमालादिकैः पश्चाद्वेष्टनं कौतुके कृते । कृत्वा पुण्याहपूर्वं तु वेद्यां तत्र प्रकल्पिते ॥ १८॥
स्थण्डिले शयने[5]विष्णो[6]रम्ये पूर्ववदास्तृते[7] । शाययेत्प्रतिमाः सर्वाः[8]प्राक्शिरश्चोर्ध्ववक्त्रकाः[9]॥

[कुम्भस्थापनम्]

तासां[10]मूर्धप्रदेशे तु विन्यसेत्कलशत्रयम् । पूर्वोक्तलक्षणोपेतान्परितोऽष्टौ च विन्यसेत् ॥२०॥
तेषु मध्ये यजेज्ज्येष्ठां[11]वृषमान्ये च पार्श्वयोः । दक्षिणेतरयोर्यष्ट्वा[12] परितः कलशेष्वपि ॥२१॥
तमा मोहा क्षुधा निद्रा मृत्युर्माया जरा भया । विन्यस्य पूजयेत्सर्वा[13] गन्धपुष्पादिभिः क्रमात् ॥

---

[1] A : तांश्च pour ताश्च [2] A : तन्मन्त्री pour ता मन्त्री [3] A : जलस्यान्तं pour जलस्यान्तः

[4] Cf. *Kāraṇāgama*, II, 83, 7-11a :

वेदिकामध्यमे चैव दशकुम्भं न्यसेत्ततः । मृत्संगृह्याङ्कुरं चैव वास्तुपूजां समारभेत् ॥
मण्टपाराधनं कृत्वा शयनारोपणं परम् । कुम्भे संपूजयेत्पश्चादासनं मूर्तिमर्चयेत् ॥
विद्यादेहं प्रकल्प्याथ अञ्जलीकरसंयुतम् । प्रणवं पूर्वमुच्चार्य मायाबीजमतः परम् ॥
सर्वदुर्भिक्षनाशाय सर्वपीडानिवारणम् । आवाह्य पूजयेत्पश्चात्प्रथमावरणं यजेत् ॥
द्वितीयावरणे चैव लोकपालान्समर्चयेत् ।

cf. *Virāgama*, 76, 15a et 17b-22a :

जलादुत्तीर्य पूर्वेद्युः पञ्चगव्येन स्नापयेत् । ............
वास्तुहोमं दिवा कुर्याल्लक्षणेन समन्वितम् । वेदिमध्ये न्यसेच्छालिं तण्डुलं च तिलं न्यसेत् ॥
शयनं पञ्चभिः कल्प्य गन्धपुष्पादिनार्चयेत् । प्रतिमस्येशदिग्भागे ज्येष्ठाकुम्भं न्यसेत्क्रमात् ॥
दक्षिणे वामपार्श्वे तु पुत्रपुत्रीसमन्वितम् । पूर्वादीशानपर्यन्तमष्टकुम्भान्न्यसेत्क्रमात् ॥
वामादिशक्तिसंयुक्तं काकं चात्र क्रमान्न्यसेत् । वामादिशक्तिसंयुक्तं काकं चाग्नेयकुम्भकम् ॥
सवस्त्रं सापिधानं च सहिरण्यं सकूर्चकम् । गन्धपुष्पादिनाभ्यर्च्य पायसान्नं निवेदयेत् ॥

[5] A : विष्णोः [6] A : रन्ध्रे [7] A : आसते pour आस्तृते

[8] A : प्रतिमां सर्वां [9] A : वक्त्रकाम् pour वक्त्रकाः [10] A : मूर्ध्निप्रदेशे

[11] A : वृषमान्यां ; H : वृक्षमान्यां [12] Cf. *Ajitāgama*, vol. I, p. 218 note 3

[13] A : पूर्वा pour सर्वा

[होमः[1]]

होमयेच्च ततो मन्त्री होतृभिः सह पूर्ववत् । कृत्वा [2]कुण्डाग्निसंस्कारं पूर्वादिष्वथ[3] पूजयेत् ॥
कुण्डेषु वामां [4]रौद्रीं च कालीं कलविकरणीमपि । बलविकरणीं देवीं ज्येष्ठां यष्ट्वा[5] प्रधानके[6]॥
वृषमान्यासमायुक्तां ततो होमं समारभेत् । समिदाज्यचरूँल्लाजान्सक्त्वपूपतिलांस्तथा॥२५ ॥
मूलादिहेतिपर्यन्तैरणुभिः सप्तभिः क्रमात् । हुत्वा [7]गायत्रिया चैव जुहुयात्सर्पिषा ततः ॥२६॥
शतमर्धं तदर्धं वा प्रधाने [8]वृषमान्ययोः । सर्वद्रव्यैश्च जुहुयात्तत्तन्मन्त्रेण देशिकः ॥ २७ ॥
प्रतिद्रव्यावसाने तु [9]व्याहृत्यन्ते स्पृशेद्गुरुः । मूर्तिपैः सह [10]मन्त्रैस्तु तत्तदङ्गानि च क्रमात् ॥
प्लक्षोदुम्बरमश्वत्थं वटं पूर्वादिषु क्रमात् । [11]समिदर्थं पलाशं तु प्रधानस्य समाचरेत् ॥ २९ ॥
होमकाले चतुर्दिक्षु वेदाध्ययनमुच्यते । कुण्डस्थानां तु [12]देवानां हविस्तत्र निवेदयेत् ॥ ३० ॥
एवं कृत्वा तु तद्धोमं नीत्वा रात्रिं तु जागरात् । ज्येष्ठामूलेन मन्त्रेण [13]ततः स्थापनमारभेत् ॥

---

1 Cf. *Vīrāgama*, 76, 22b-24 :
ततो होमं प्रकुर्वीत पलाशसमिधा सह । समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् ॥
शालिनीवारगोधूममुद्गैरेव समन्वितम् । पञ्चब्रह्मषडङ्गैश्च हुत्वान्ते तु यथाक्रमम् ॥
मूलमन्त्रेण विप्रेन्द्र अष्टोत्तरशताहुतिः ।
cf. *Santānasaṃhitā*, 29, 16b-19a :
ततो होमं प्रकुर्यात्तु ज्येष्ठामूलमिति स्मरन् । पलाशखदिराश्वत्थापामार्गप्लक्षमेव च ॥
ज्येष्ठासूक्तेन देवेशि जुहुयात्तु शताष्टकम् । ज्येष्ठामतिं समादाय ज्येष्ठासूक्तमिति स्मृतम् ॥
समिदाज्यचरूँल्लाजान्सर्षपांश्च यवांस्तिलान् । प्रत्येकं पञ्चविंशं तु होमयेद्देशिकस्तथा ॥

2 A : कुण्डानि संस्कारः 3 A : अथि pour अथ 4 H : गौरीं pour रौद्रीं

5 Cf. *Ajitāgama*, vol. I, p. 218, note 3.

6 Le nombre de kuṇḍa prescrit lors de la ज्येष्ठाप्रतिष्ठा est très probablement cinq (voir śloka 10b–11a incomplet de ce *paṭala* et aussi *śloka* 29 qui donne cinq types de *samidh*, un pour chaque kuṇḍa). En ce cas il y a un kuṇḍa principal pour Jyeṣṭhā et quatre autres pour les deités secondaires. Dans le *śloka* 24, on trouve cinq noms à côté de celui de Jyeṣṭhā. Il y a donc un nom en excès. Ces six noms appartiennent à une liste courante de neuf, une déité principale et huit secondaires. Ici Jyeṣṭhā est principale. On devrait avoir quatre noms de déités secondaires, ou bien si l'on suppose que deux déités peuvent être affectées à chaque kuṇḍa secondaire, il faut suppléer ici les trois derniers noms de la liste habituelle : बलप्रमथनी, सर्वभूतदमनी et मनोन्मनी

7 La forme grammaticale correcte est गायत्र्या

8 A : दश pour वृष 9 H : व्याहृत्यन्तैः स्पृशेत् शतम् 10 H : मन्त्रस्तु

11 A : समिदिध्मं 12 H : देवानामहस्तत्र विवेदयेत् 13 H : तत्तत् pour ततः

[प्रतिमास्थापनम्[1]]

प्रभाते कृतनित्यस्तु देशिको मूर्तिपैः सह । प्रविश्य मण्टपं तत्र कृतमन्त्रतनुस्तदा ॥ ३२ ॥
संपूज्य देवताः सर्वाः पूर्णां सर्वत्र होमयेत् । प्रतिमास्ताः समुत्थाप्य त्यक्त्वा [2]वस्त्रादिकं ततः॥
रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम् । गर्भगेहं प्रविश्याथ रत्नादीनि च पूर्ववत्[3] ॥
विन्यस्य स्थापयेत्तत्र [4]प्रतिमास्ताः क्रमेण वै । [5]भिन्नरूपास्त्वथैकत्र [6]मध्ये दक्षिणवामयोः ॥
तत्तन्मूलं समुच्चार्य शिरः संस्थापकः स्पृशेत् । शिल्पिकर्मणि निर्वृत्ते तमुद्वास्य ततो गुरुः ॥३६॥

[कुम्भाभिषेकः[7]]

स्नात्वाचम्य ततः कृत्वा पुण्याहं तत्र धामनि । पञ्चगव्येन [8]संस्नाप्य तत्तद्गायत्रि[9]मन्त्रतः[10] ॥
कुम्भान्सर्वान्समुत्थाप्य वहित्वांसे [11]तथा गुरुः । [12]मूर्तिपैः सह तद्धाम्नि कृत्वा धामप्रदक्षिणम् ॥
अन्तः प्रविश्य वेद्यग्रे स्थाप्य च स्थण्डिलोपरि । विन्यसेन्मन्त्ररूपं तु[13] ध्यात्वा [14]कुम्भांश्च देवताः॥
तत्तत्कूर्चस्थितेनैव[15] तोयेन प्रतिमाहृदि । ततोऽङ्गानि च तस्यास्तु यथास्थानं तु विन्यसेत् ॥४०॥
मातृकाश्च ततो [16]न्यस्य ततश्च वृषमान्ययोः । मन्त्रं पूर्ववदाधाय ततश्च [17]परितस्ततः ॥४१॥
अभिषिच्य [18]तु तैः कुम्भैर्नैवेद्यान्तं [19]समर्चयेत् । गौणप्रधानयोरेवमुक्तः साधारणो विधिः॥४२॥

---

[1] Cf. *Virāgama*, 76, 25-27 :
ततः प्रभाते विमले स्नानं कृत्वा तु देशिकः । चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ॥
ततो वासनहोमं तु समिदाज्यचरूयुतम् । मूलमन्त्रेण होतव्यं प्रत्येकं तु शताहुतिः ॥
हुत्वान्ते तु यदस्येति हुत्वा पूर्णाहुतिं ततः । उत्थाप्य शयनाद्देवीं स्थापयेन्मानुषे पदे ॥

[2] H : वस्त्रादिकां ततः

[3] Cf. *Virāgama*, 76, 11b : रत्नन्यासं तु कर्तव्यं पञ्चरत्नं तु मूलतः ।

[4] A : प्रतिमायां

[5] A : भिन्नरूपास्थयैकत्र

[6] A : मध्य pour मध्ये

[7] Cf. *Kāraṇāgama*, I, 60, 123b-125a :
तत्तत्कुम्भं समुद्धृत्य स्थाप्य बिम्बाग्रकेषु च । न्यासक्रमेण विन्यस्य पञ्चब्रह्मषडङ्गकान् ॥
बीजान्यादाय कुम्भेभ्यो न्यसेयुर्बिम्बहृत्सु च । यजेयुर्गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदा क्रमात् ॥
cf. *Virāgama*, 76, 28-29 :
प्रधानकुम्भमादाय मूलेन स्नापयेत्पुनः । पञ्चब्रह्मशिवाङ्गैश्च स्नापयेच्छक्तिकुम्भकान् ॥
अर्चयेद्गन्धपुष्पाद्यैः पायसान्नं निवेदयेत् । ब्राह्मणान्भोजयेत्तत्र शैवान्संभोजयेत्ततः ॥

[8] H : तां स्नाप्य

[9] La forme grammaticale correcte est गायत्री

[10] H : मुद्रितः pour मन्त्रतः

[11] H : तदा pour तथा

[12] H : मूर्तिपैश्च सह तद्धामनि कृत्वा प्रदक्षिणम्

[13] H : मन्त्ररूपां तां

[14] A : कुम्भाश्च

[15] H : द्रुतेनैव pour स्थितेनैव

[16] A : न्यस्त्वा

[17] A : पततस्ततः

[18] A : ततः pour तु तैः

[19] A : समाचरेत्

[प्रधानालये विशेषः]

प्रधानेऽपि विशेषोऽयं कथ्यतेऽत्र जनार्दन । [1]विद्युज्जिह्वां विशालाक्षीं दक्षिणेतरयोरपि ॥
पार्श्वयोस्तु प्रतिहारे [2]रक्षार्थं पूर्ववन्न्यसेत् । [3]करालीं कपिलाक्षीं च विमलां विभुजामपि ॥
भास्वरां विततां चैव [4]कीकसां कद्रुमेव च । पूर्वादिषु घटेष्वष्टावष्टसु क्रमतो न्यसेत् ॥ ४५ ॥
[5]काकामत्रे च तद्वेद्यां [6]घटे विन्यस्य पूजयेत् । एवं कालेऽधिवास्यैताः शक्तीर्वाहनसंयुताः ॥
[7]प्रतिष्ठानन्तरं वापि विन्यसेत्परितो गुरुः । एवं संस्थापयेज्ज्येष्ठां [8]सद्योऽलक्ष्मीर्विमुञ्चति ॥
धनधान्यादिकं सर्वं पुत्रपौत्रादिकं[9] तथा । वर्धते तस्य देवेश नात्र कार्या [10]विचारणा ॥४८॥

[11]इत्यजिताख्ये महातन्त्रे [क्रियापादे] ज्येष्ठास्थापनविधि-
र्द्विपञ्चाशः[12] पटलः ॥

---

[1] H : विद्युजिह्वा विशालाक्षी
[2] H : रक्षार्थी
[3] H : तालीं pour करालीं
[4] H : किकसां
[5] H : काकमत्रे च द्वाभ्यां
[6] A : घटेऽप्यन्यस्य
[7] H : प्रतिष्ठानन्तरस्यापि
[8] H : सद्योऽलक्ष्मीं च मुञ्चति
[9] H : अधिकं pour आदिकं
[10] H : विचारिणा
[11] H : इत्यजिताख्ये तन्त्रे ज्येष्ठास्थापनपटलः
[12] A : चतुःपञ्चाशः pour द्विपञ्चाशः

## [त्रिपञ्चाशः पटलः]

[[1]दुर्गास्थापनविधिः[2]]

दुर्गायाः स्थापनं वक्ष्ये तदुत्पत्तिपुरस्सरम् । तन्मन्त्रं [3]च समासेन शृणु सर्वं सुरोत्तम ॥१॥

[दुर्गोत्पत्तिः[4]]

पुरा कालीति सा दिष्टा मया रहसि मानिनी । चुकोपोमा वचो मह्यं प्रयुक्तं निन्दितं त्विति ॥२॥

[1] Ce *paṭala* se trouve dans les manuscrits A et H seulement.

[2] Pour दुर्गास्थापनविधि voir *Kāraṇa* I, 98, *Dīpta* 54, *Santānasaṃhītā* 30, *Suprabheda* I, 46 et *Svāyambhuva* 52.

[3] H : तु pour च

[4] Cf. *Vāmanapurāṇa*, 54, 6-29 :

रमतः सह पार्वत्या धर्मापेक्षी जगत्पतिः । ततः कदाचित्क्रीडार्थं कालीत्युक्ता भवेन हि ॥
पार्वती मन्युनाविष्टा शंकरं वाक्यमब्रवीत् । संरोहतीषुणा विद्धं वनं परशुना हतम् ॥
वाचा दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम् ॥
वाक्सायका वदनान्निष्पतन्ति तैराहतः शोचति रात्र्यहानि ।
न तान्विमुञ्चेत हि पण्डितो जनस्तदद्य धर्मं वितथं त्वया कृतम् ॥
तस्माद्व्रजामि देवेश तपस्तप्तुमनुत्तमम् । तथा यतिष्ये न यथा भवान्कालीति वक्ष्यति ॥
इत्येवमुक्त्वा गिरिजा प्रणम्य च महेश्वरम् । अनुज्ञाता त्रिणेत्रेण दिवमेवोत्पपात ह ॥
समुत्पत्य च वेगेन हिमाद्रेः शिखरं शिवम् । टङ्कच्छिन्नं प्रयत्नेन विधात्रा निर्मितं यथा ॥
ततोऽवतीर्य सस्मार जयां च विजयां तथा । जयन्तीं च महापुण्यां चतुर्थीमपराजिताम् ॥
ताः संस्मृताः समाजग्मुः कालीं द्रष्टुं हि देवताः । अनुज्ञातास्तथा देव्याः शुश्रूषां चक्रिरे शुभाः ॥
ततस्तपसि पार्वत्यां स्थितायां हिमवद्वनात् । समाजगाम तं देशं व्याघ्रो दंष्ट्रानखायुधः ॥
एकपादस्थितायां वै देव्यां व्याघ्रस्त्वचिन्तयत् । यदा पतिष्यते चेष्टं तदा दास्यामि वै अहम् ॥
इत्येवं चिन्तयन्नेव दत्तदृष्टिर्मृगाधिपः । पश्यमानस्तद्वदनमेकदृष्टिरजायत ॥
ततो वर्षशतं देवी गृणन्ती ब्रह्मणः पदम् । तपोऽतप्यत्ततोऽभ्यागाद्ब्रह्मा त्रिभुवनेश्वरः ॥
पितामहस्तथोवाच देवीं प्रीतोऽस्मि शाश्वते । तपसा धूतपापासि वरं वृणु यथेप्सितम् ॥
अथोवाच वचः काली व्याघ्रस्य कमलोद्भव । वरदो भव तेनाहं यास्ये प्रीतिमनुत्तमाम् ॥
ततः प्रादाद्वरं ब्रह्मा व्याघ्रस्याद्भुतकर्मणः । गाणपत्यं विभौ भक्तिमजेयत्वं च धर्मिताम् ॥
वरं व्याघ्राय दत्त्वैवं शिवकान्तामथाब्रवीत् । वृणीष्व वरमव्यग्रा वरं दास्ये तवाम्बिके ॥
ततो वरं गिरिसुता प्राह देवी पितामहम् । वरं प्रदीयतां ब्रह्मन्वर्णं कनकसंनिभम् ॥
तथेत्युक्त्वा गतो ब्रह्मा पार्वती चाभवत्ततः । कोशं कृष्णं परित्यज्य पद्मकिञ्जल्कसंनिभा ॥
तामभ्येत्य सहस्राक्षः प्रतिजग्राह दक्षिणाम् । प्रोवाच गिरिजां देवो वाक्यं स्वर्गाय वासवः ॥

इन्द्र उवाच—

इयं प्रदीयतां मह्यं भगिनी मेऽस्तु कौशिकी । त्वत्कोशसंभवा चेयं कौशिकी कौशिकोऽप्यहम् ॥
तां प्रादादिति संश्रुत्य कौशिकीं रूपसंयुताम् । सहस्राक्षोऽपि तां गृह्य विन्ध्यं वेगाज्जगाम च ॥

ततश्च सान्त्वनैश्चापि[1] मदीयैर्नेष्यते शमम् । [2]उवाचोमा महावर्णं [3]मह्यमिच्छाम्यहेयवत् ॥३॥
इत्युक्तोऽहं तया [4]तस्या वर्णं निर्मातुमुद्यतः । [5]तनुस्तन्नेच्छती देवी तपसा [6]तप्तुमुद्यता ॥४॥
तपस्तेपे ततस्तस्या [7]उमायाः कमलासनः । अनुज्ञातो मया वर्णं दत्तवानिदमुत्तमम् ॥ ५ ॥
तदा ब्रह्माभ्यवोचत्तां [8]यदि [9]मुञ्चेस्तु शोभने । [10]वर्णमेतज्जगन्मातर्जगद्रक्षार्थमव्यये ॥ ६ ॥
वर्णं [11]तत्कोशवद्भित्वा त्वच्छक्त्या परया युताम् । विक्रमां हरिणा देवीं कौशिकीं हर [12]मानयेः॥
इत्युक्ता सा तदा देवी ब्रह्मणा [13]तदधात्करे । [14]तस्मादेवी च शक्तिं च स्वायुधानि बहूनि च ॥
[15]दत्त्वा चोद्धासिता सर्वशत्रूणां जयकाङ्क्षया । सा दुर्गा [16]कौशिकी चण्डी [17]भवानी च निगद्यते॥

[दुर्गामन्त्राः[18]]

तदुत्पत्तिरिति प्रोक्ता मन्त्रं तस्या वदामि ते[19] । पञ्चमस्य तृतीयं यत्पञ्चमस्वरसंयुतम् ॥ १० ॥
बिन्दुनादसमायुक्तं दुर्गामूलमिति स्मृतम् । [20]तारमादौ समुच्चार्य [21]ततो मूलमुदीर्य च ॥११॥
दुर्गापदं चतुर्थ्यन्तमन्ते चापि [22]नमःपदम् । संयोज्योच्चारयेन्मन्त्रं दौर्गं [23]सिद्धं सनातनम् ॥

---

तत्र गत्वा त्वथोवाच तिष्ठ चात्र महाचले । पूज्यमाना सुरैर्नाम्ना ख्याता त्वं विन्ध्यवासिनी ॥
तत्र स्थाप्य हरिर्देवीं दत्त्वा सिंहं च वाहनम् । भवामरारिहन्त्री चेत्युक्त्वा स्वर्गमुपागमत् ।
उमापि तं वरं लब्ध्वा मन्दिरं पुनरेत्य च । प्रणम्य च महेशानं स्थिता सविनयं मुने ॥

Pour la légende de la दुर्गोत्पत्ति voir aussi *Matsyapurāṇa*, *adhyāya* 154-158, *Padmapurāṇa*, *sṛṣṭikhaṇḍa*, *adhyāya* 41, *Kālikāpurāṇa*, *adhyāya* 47, *Skāndapurāṇa*, I, 2, 27-29 et V, 1, 20, *Devīmāhātmya*, 5, 84-87 et 7, 5-6 etc.

[1] H : असि pour अपि
[2] H : उमा चोमा pour उवाचोमा
[3] H : मह्यं श्वाहेयवत्
[4] H : तस्य वर्णानि मातुमुद्यत:
[5] H : तनु तेनानिच्छते देवी
[6] H : तप्तम् pour तप्तुम्
[7] H : उमया
[8] A : अयति pour यदि
[9] H : मुञ्चन्त pour मुञ्चेस्तु
[10] A : पूर्णं pour वर्णं
[11] H : तत्कोशयद्विद्वान्
[12] H : मानयेत्
[13] H : तदथा करे
[14] A : तस्मादेवं च शक्तीश्च
[15] H : तत्वतोर्ध्वं सिता
[16] H : कलनी
[17] A : भवती
[18] Cf. *Kāraṇāgama*, I, 98, 38:
पञ्चमस्य तृतीयं तु मायानलसमन्वितम् । चतुर्दशेन संभिन्नं बिन्दुनादसमायुतम् ॥
मूलमन्त्रमिदं प्रोक्तं तस्माद्ब्रह्माङ्गकल्पना । सिंहध्वजायै चात्रैव विद्महेति परं पदम् ॥
ततो वै चक्रहस्तायै धीमहीति परं पदम् । तन्नो दुर्गायुते चैव तथा चैव प्रचोदयात् ॥
गायत्र्या सहितं मूलं ब्रह्माङ्गैः सुयोजयेत् ॥

cf. Appendice du *Yogajāgama*, ms. p. 38 :
ओं कात्यायन्यै च विद्महे कन्याकुमार्यै च धीमहि । तन्नो दुर्गा प्रचोदयात् ॥
[19] H : के pour ते
[20] H : दारमादौ
[21] A : धीमहीति पदं ततः
[22] H : नमस्कृतम्
[23] H : सिद्धिं

[1]दक्षरेणैव चाङ्गानि हृदयादीनि कल्पयेत् । कन्यारूपपदं पूर्वं [2]चतुर्थ्यन्तं समुच्चरेत् ॥१३॥
[3]विद्महे च ततश्चोक्तं शूलहस्तापदं ततः । चतुर्थ्यन्तं समुच्चार्य धीमहीति पदं ततः ॥ १४ ॥
तन्नो [4]दुर्गेत्यथोच्चार्य [5]प्रचोदयात्तदनन्तरम् । गायत्रीयं भवेद्देव्या दुर्गाया मन्त्रमुत्तमम् ॥१५॥
एवं मन्त्राः समुद्दिष्टाः;

[स्थापनयोग्यस्थानानि[6]]

प्रतिष्ठाविधिरुच्यते । लिङ्गस्थापनयोग्येषु स्थानेष्वपि शिवालये ॥ १६ ॥
ग्रामादावपि चोक्तेषु स्थानेष्वस्याः प्रकल्पयेत् । प्रासादं [7]हि ततः पूर्वद्वारं भुक्तिप्रदं नृणाम् ॥
[8]मुक्तिदं पश्चिमद्वारं पूर्वद्वारं जयावहम् ।

[मण्टपः[9]]

तदग्रे मण्टपं कुर्यात्पूर्ववत्पार्श्वयोस्तथा ॥ १८ ॥
तत्र वेद्यास्तु परितः कुण्डानि परिकल्पयेत् । आशासु चतुरश्राणि विदिक्षु चतसृष्वपि ॥१९॥
योन्याकाराणि कुण्डानि पद्मं च त्वीशशक्रयोः[10] । मध्यस्थाने ततस्तस्य मण्टपस्य तु पूर्ववत् ॥
संस्कारादि प्रयुञ्जीत;

---

[1] A : त pour द    [2] A omet चतुर्थ्यन्तं समुच्चरेत्    [3] A omet le demi-*śloka* 14a
[4] H : दूरे pour दुर्गे    [5] H : गायत्र्या pour प्रचोदयात्
[6] Cf. *Kāraṇāgama* I, 60, 9b: "याम्ये कात्यायनी प्रोक्ता"
cf. *Suprabhedāgama*, I, 39, 28b: "दुर्गां चैवोत्तरे कुर्यात्"
cf. *Kāmikāgama*, I, 71, 79-80a :
मातॄणामुत्तरे दक्षे चण्डिकां वा मुनीश्वराः । पद्मजं स्थापयेद्विष्णुं तद्विहीनमथापि वा ॥
दुर्गां हित्वाथ विष्णुं वा कुबेरं सोममेव वा ॥
[7] A : हितं pour हि ततः    [8] A : मूर्तितं
[9] Cf. *Kāraṇāgama*, I, 98, 16b-20 :
आलयाग्रे च तत्पार्श्वे दक्षिणे चोत्तरे तथा । नवहस्ताष्टहस्तं वा सप्तहस्तमथापि वा ॥
षोडशस्तम्भसयुक्तं पङ्क्तित्रयसमायुतम् । पङ्क्तिमानसमुत्सेधं चतुर्द्वारसमायुतम् ॥
मण्टपं तत्र कुर्वीत ब्रह्मांशे वेदिका भवेत् । रत्निमात्रसमुत्सेधा दर्पणोदरसंनिभा ॥
कुण्डानि कारयेत्तत्र दिशासु विदिशासु च । प्राक्कुण्डं वेदिकामध्ये प्रधानं तत्र कल्पयेत् ॥
गोमयालेपनं कृत्वा प्रोक्षयेत्तु शिवाम्भसा ॥
cf. *Santānasaṃhitā*, 30, 7-8a :
प्रासादस्यैव पुरतो मण्टपं कारयेत्ततः । तस्य मध्ये [तु] वेदी स्याद्वाह्ये कुण्डानि कारयेत् ॥
नव वा पञ्चकुण्डं वा कारयेल्लक्षणान्वितम् ॥
[10] H : चक्रयोः pour शक्रयोः

[नेत्रोन्मीलनम्[1]]

नेत्रोन्मीलनमप्यतः । कुर्यात्तस्य [2]विधिश्चापि वक्ष्यते क्रमतोऽधुना ॥ २१ ॥
स्नानमण्टपमध्ये तु देवीमानीय कौशिकीम् । स्थण्डिले तत्र तां देवीं प्राङ्मुखां संनिवेशयेत् ॥
नेत्रोन्मीलनकर्माणि कारयेच्छिल्पिना तदा । हैमसूच्या ततश्चापि [3]रेखालेखनपूर्वकम् ॥२३॥
[4]साधिते पूर्ववच्चैव त्रिनेत्रेषु च तर्पयेत् । दूर्वया हैमया पूर्वं दक्षिणे मधु वामके ॥ २४ ॥
पयश्चाथ ललाटस्थे लोचने मधु चैव हि[5] । सूर्यसोमाग्निमन्त्रैस्तु तत्तत्स्थानेषु विन्यसेत् ॥२५॥
हिरण्यनख[6]संप्रोतैस्तर्जन्याद्यङ्गुलैस्त्रिभिः । ततस्तु दर्शयेद्विप्रान्गाश्च[7] गायत्रिमुच्चरन् ॥ २६ ॥
ततस्तां पञ्चगव्यैश्च पञ्चमृद्भिश्च शोधयेत् । तस्या गायत्रिमुच्चार्य गन्धोदेनाभिषेचयेत् ॥२७॥
पुण्याहं वाचयित्वात्र प्रोक्षयेद्ब्रह्मपञ्चकैः ।

[[8]जलाधिवासः]

ग्राम [प्रदक्षिणं कृत्वा जलतीरं समानयेत् ॥ २८ ॥

---

[1] Cf. *Kāraṇāgama*, I, 60, 91b-94a :
नयनमोक्षणं कुर्यान्नेत्रद्वययुते दिने । पक्ष्मरेखां पुरा कृत्वा ततो वै कृष्णमण्डलम् ॥
ज्योतिर्मण्डलमालिख्य नेत्रमन्त्रमुदाहरन् । लेपयेद्धृदयेनैव मधुना च घृतेन च ॥
मृदाम्भसा तु संस्नाप्य गव्येनैवाभिषेचयेत् । पुण्याहं वाचयित्वा तु प्रोक्षयेत्पुरुषेण तु ॥
cf. *Santānasaṃhitā*, 30, 6 :
सुमुहूर्ते सुलग्ने च योगे च करणान्विते । नयनमोक्षणं कुर्यात्पूर्वोक्तेन विधानतः ॥

[2] H : विधिं चापि [3] H : कोजयुपूर्वकैः? [4] H : साधितैः

[5] Selon le साम्बिकास्थापनविधिपटल *paṭala* 40, śl. 29-30 et le मातृकास्थापनविधिपटल *paṭala* 48, śl.17, il est prescrit pour la cérémonie d'ouverture des yeux de l'image, de toucher l'œil droit avec du miel, l'œil gauche avec du lait et l'œil frontal avec du *ghṛta*. Ceci est aussi la pratique usuelle. Ici les deux mss. prescrivent le miel pour l'œil droit et l'œil frontal, le lait pour l'œil gauche. De même dans le चण्डेशस्थापनविधिपटल *paṭala* 51, śl.15-16, il y a aussi une différence avec la pratique générale : le miel pour l'œil droit, le *ghṛta* pour l'œil gauche, le lait pour l'œil frontal. Mais il est difficile de savoir s'il y a réellement ici pratique différente ou si cela résulte d'une simple erreur du scribe.

[6] H : संप्रोक्तैस् pour संप्रोतैस् [7] H : गां च pour गाश्च

[8] Dans les deux mss. il y a une lacune aprés śl. 28a: les portions traitant des जलाधिवास, शयनाधिवास कुम्भस्थापन, होम et une partie du rituel à exécuter le jour du कुम्भाभिषेक avant मन्त्रन्यास sur l'image, sont omises. Nous donnons ici dans le texte, entre crochets, des passages correspondants de la *Santāna-saṃhitā*, *paṭala* 30, śl. 9-20 et en note des passages correspondants d'autres āgama.

प्रतिमां कण्ठदघ्ने तु चले चैवाधिवासयेत् । तस्या बाह्ये तु विद्येशानष्टौ कुम्भांस्तु विन्यसेत् ॥
सप्तरात्रं पञ्चरात्रं त्रिरात्रं चैकरात्रकम् । जलादुत्तीर्य पूर्वेद्युः पञ्चगव्येन स्नापयेत् ॥ ३० ॥

[शयनाधिवासः[1] कुम्भस्थापनं[2] च]

ततः प्रवेश्य देवेशीं शयनं तत्र कल्पयेत् । वेदिमध्ये तु देवेश्याः शालिना विकिरेत्ततः ॥
पञ्चभिः कम्बलैश्चैव शाल्या पर्युपविन्यसेत् । मूलमन्त्रेण देवेशीप्रतिमां कम्बलोपरि ॥ ३२ ॥
वर्धन्यष्टकमादाय पूर्वादीशान्तकं न्यसेत् । वामादिशक्तयोऽष्टौ तु मनोन्मनीमीशदेशतः ॥ ३३ ॥
गन्धपुष्पादिभिश्चैव हविषा पूजयेत्ततः ।

---

cf. *Kāraṇāgama*, I, 98, 12b-16a:

[जलाधिवासः]

शुद्धिं बिम्बार्हकां कृत्वा पञ्चगव्यकुशोदकैः । वस्त्रैराभरणाद्यैश्च भूषणैर्भूषणार्हकैः ॥
शिबिकायां समारोप्य सर्वातोद्यसमायुतम् । रुद्रतोरणसंयुक्तं मयूरव्यजनैर्युतम् ॥
पिञ्छचामरसंकीर्णं पताकाद्यैश्च संयुतम् । वास्तुप्रदक्षिणं कृत्वा जलतीरे समाविशेत् ॥
वस्त्रप्रच्छादितां देवीं कूर्चसूत्रेण संयुतम् । जलाधिवासनं कुर्यादेकरात्रं जले तदा॥

[1] Cf. *Kāraṇāgama*, I, 98, 20b-22a et 24-26a:

[शयनाधिवासः]

गोमयालेपनं कृत्वा प्रोक्षयेत्तु शिवाम्भसा । स्थण्डिलं तत्र कर्तव्यं वेदिकोपरि शालिभिः ॥
तण्डुलैश्च तिलैरब्जं कृत्वा दर्भैः परिस्तरेत् । अण्डजाद्यैर्विशेषेण कल्पयेच्छयनं हृदा ॥
जलादुत्तीर्य बिम्बं तु प्रविशेदालयं ततः । शुद्धिं कृत्वा तु गव्यैश्च सेचयेद्गन्धवारिणा ॥
गन्धाद्यैर्लेपितं बिम्बं नववस्त्रेण वेष्टयेत् । हैमं कौतुकसूत्रं तु बन्धयेद्दक्षिणे करे ॥
शयने शाययेद्बिम्बं हृदयेन तु मन्त्रतः ॥

cf. *Svāymbhuvāgama*, 52, 12b-14a:
प्रविश्य मण्टपं तस्मिञ्शयनं कल्पयेत्ततः । जलाद्देवीं समुत्तीर्य शुद्धिं कृत्वा चले यथा ॥
तद्धृदा शयनं प्रोक्ष्य शिरोमन्त्रेण शाययेत् । वस्त्राभ्यां छादयेद्देवीम् "

[2] Cf. *Kāraṇāgama* I, 98, 26b-31a:

[ कुम्भस्थापनम् ]

द्रोणार्धतोयसंपूर्णान्वस्त्रेणैव तु वेष्टितान् । गन्धतोयेन संपूर्णान्हेमपद्माम्रसंयुतान् ॥
वरकूर्चसमायुक्तांश्चक्रोपरिसमायुतान् । सूत्रेण वेष्टितान्कुम्भांश्चूतपल्लवशोभितान् ॥
देव्याश्च दक्षिणे पार्श्वे प्रधानं च घटं न्यसेत् । दुर्गा कात्यायनी चैव विजया चापराजिता ॥
देवी वेगवती चैव गायत्री शर्वरी तथा । गान्धर्युक्तक्रमेणैव मध्यमादिशि विन्यसेत् ॥
तत्तद्बीजमनुस्मृत्य कुम्भेष्वन्तर्जलं न्यसेत् । गन्धादिभिरथाभ्यर्च्य हृदयादीन्न्यसेत्क्रमात् ॥

cf. *Suprabhedāgama*, I, 46, 6b-7a:
कुम्भं मन्त्रैश्च विन्यस्य ध्यात्वा तद्रूपमात्मनि । आवृतान्कलशान्स्थाप्य लोकपालांश्च विन्यसेत् ॥

[होमः[1]]

ततो होमं प्रकुर्वीत लक्षणेन समन्वितम् ॥ ३४ ॥
चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः । दुर्गाबीजेन मन्त्रेण ब्रह्माङ्गैश्च मन्त्रकैः ॥ ३५ ॥
होमं कुर्याद्विशेषेण यथाविभवविस्तरम् । समिदाज्यचरूँल्लाजान्सर्षपांश्च हुनेद्बुधः ॥ ३६ ॥
शतमर्धं तदर्धं वा पालाशी तु समिद्भवेत् ।

[कुम्भाभिषेकः[2]]

ततः प्रभाते विमले मुहूर्तं तु निरीक्षयेत् ॥ ३७ ॥
आचार्यपूजनं कृत्वा ऋत्विजः पूजयेत्ततः । प्रतिष्ठाकुम्भमादाय शिरसा धार्य बुद्धिमान् ॥३८॥
अन्तः प्रविश्य वेद्यग्रे स्थाप्य च स्थण्डिलोपरि । बेराग्रे विन्यसेत्कुम्भं प्रधानं चावृतैः सह ॥
ततश्च देशिको मन्त्री] ध्यात्वा देवीं यथास्थिताम् । कुम्भस्थितां तु तां तेन कूम्भकूर्चयुतेन च॥

---

[1] Cf. *Kāraṇāgama*, I. 98, 31b-36 :

[होमः]

समिदाज्यचरूँल्लाजान्मुद्गमाषतिलांस्तथा । प्रत्येकं शतमर्धं वा द्रव्यं प्रति विशेषतः ॥
देव्यग्निं च प्रधाने तु कल्पयेद्देशिकोत्तमः । तदग्निं सर्वकुण्डेषु निक्षिपेत्प्रणवेन तु ॥
अग्न्याधानादिकं कृत्वा द्रव्यहोमं समारभेत् । मूलेन हृदयाद्यैस्तु समिदादींश्च होमयेत् ॥
देवीगायत्रिमन्त्रेण पूर्णाहुतिमथाचरेत् । तत्तन्मन्त्रेण संस्पृश्य होमान्ते व्याहृतिं क्रमात् ॥
एवं रात्रौ तु कर्तव्यम् "

cf. *Suprabhedāgama*, I, 46, 7b-9a :
होमं पञ्चत्रयैकं वा प्रागुक्तद्रव्यसंयुतम् । वह्निमध्ये तु देवीशीमाहूयाज्यादिभिर्बुधः ॥
आज्यं चरुं तथा लाजानौदुम्बरसमित्तथा । दुर्गाया मूलमन्त्रेण होमयेद्देशिकोत्तमः ॥

[2] Cf. *Kāraṇāgama* I, 98, 5-9a :

[रत्नन्यासः, स्थापनं च]

अचलं शैलजं चेत्तु गर्भगेहवशाद्बुधः । रत्नन्यासं प्रकर्तव्यं शैलजं तु चलं विना ॥
लोहजं चेत्कृते पीठे नैव पट[नैवावट?] समायुते । मण्डले स्थण्डिले पद्मे पीठपन्त्रे [पीठं मध्ये?] निधाय वै ॥
पालिकाद्यङ्कुरैर्युक्ते दीपाद्यैश्च सुशोभिते । सुमुहूर्ते सुलग्ने च नव रत्नानि विन्यसेत् ॥
देवीं रत्नोपरि न्यस्त्वा सुदृढं निर्व्रणाकृति । देव्या बीजमनुस्मृत्य तत्काले देशिकेन तु [देशिकोत्तमः?] ॥
सुदृढं शिल्पिना कुर्याद्यथायुक्त्या तु कारयेत् ॥

cf. I, 98, 35b-38a et 42a :

[स्थापनम्]

"प्रभाते सुमुहूर्तके । देवीमुत्थाप्य यत्नेन स्नानवेद्युपरि न्यसेत् ॥
व्यपोह्य वस्त्रकूर्चं तु कल्पयेदासनं पुनः । नवशक्तिसमोपेतमशेषाग्निविनिर्गतम् ॥
गन्धाद्यैरासनं चाब्जं पूजयेद्देशिकोत्तमः । ब्रह्माङ्गैः सकीलं तु बिम्बे न्यस्त्वा क्रमेण तु ॥.........
सम्यक् संभाव्य तां देवीं प्रतिष्ठां कारयेद्गुरुः ॥

अम्भसार्चाहृदि न्यासं कुर्यात्तन्मूलमुच्चरन् । अङ्गान्यङ्गेषु विन्यस्य गायत्रीं हृदये न्यसेत् ॥४१॥
मातृकां पूर्ववन्न्यस्य[1] गन्धाद्यैरर्चयेत्ततः । अन्यैः कुम्भैश्च सर्वैस्तैरभिषिच्य क्रमेण वै ॥ ४२ ॥
तत्तन्मन्त्रं समुच्चार्य गन्धाद्यैः पुनरर्चयेत् । प्रभूतं तु हविर्दत्त्वा फलभक्ष्यादिसंयुतम् ॥ ४३ ॥
मुखवाससमायुक्तं ताम्बूलं च निवेदयेत् । [2]गौणप्रधानयोरेवं प्रोक्तं सर्वं समं हरे ॥ ४४ ॥

[प्रधानालये विशेषः]

प्रधाने तु विशेषोऽयं कथ्यतेऽद्य समासतः । उल्कामुखीं विजिह्वां च कल्पयेद्द्वारदेवते ॥४५॥
मृगेन्द्रं वाहनं तस्या अग्रतः परिकल्पयेत् । परितोऽष्टाविमास्तस्याः [3]परिवाराः प्रकीर्तिताः ॥
अग्रे भूमिं समारभ्य ज्येष्ठां भूमिं तथैव च । मोटिं च मोहिनीं चैव प्रकृतिं विकृतिं तथा ॥
नियतिं च निवृत्तिं च सर्वास्ताः पूर्ववत्सुधीः । कलशेष्वधिवासाय स्थापयेत्स्थापकोत्तमः ॥४८॥
[4]बाह्यस्थे च महापीठे स्थापयेत्पूतनागणम्[5] । मन्त्रन्यासोत्तरे काले स्थापयेत्परिवारकम्[6] ॥

[नित्योत्सवः]

त्रिसंध्यास्वर्चने काले परिवारांश्च पूजयेत् । वहन्नित्योत्सवं चैव त्रिसंध्यमपि कारयेत् ॥ ५० ॥

[महोत्सवः[7]]

एकाहं त्रियहं चापि भूताहं मुन्यहं तु वा । प्रतिसंवत्सरं [8]कुर्याद्दौर्गे वा मधुमाधवे ॥ ५१ ॥
कृत्तिकान्तं तु विधिना कारयेच्च महोत्सवम् । [9]एवं यः कुरुते मर्त्यः कौशिक्याः स्थापनं परम् ॥
आधिव्याधिविनिर्मुक्तः सर्वसंपत्समन्वितः । [10]निर्मितं खलु वैरिञ्चं हत्वा तत्प्रत्यजायते ॥
सर्वदेवादिभिर्वन्द्यः[11] [12]स बलारिरिवापरः ॥ ५४ ॥

[13]इत्यजिताख्ये महातन्त्रे [क्रियापादे] दुर्गास्थापनविधि-
स्त्रिपञ्चाशः[14] पटलः ॥

---

[1] H : न्यस्त्वा pour न्यस्य [2] A : गौरी pour गौण [3] A : परिवारं प्रकीर्तितम्
[4] H : बाह्यस्थाश्च [5] A : पृतनां गणम् pour पूतनागणम् [6] H : परिवारकाः
[7] Cf *Svāyambhuvāgama*, 52, 113b-116 :
प्रतिष्ठोत्सवं प्रकर्तव्यं त्र्यहं वाथ कारयेत् । उत्सवस्यादिरात्रौ तु देव्याश्च मङ्गलाङ्कुरम् ॥
कृत्तिकामासकृत्यन्तं प्रशस्तं केतुकोद्भवम् । मासं वा दमनं वापि द्वादशाहमथापि वा ॥
सप्ताहमुत्सवं वाथ कुर्युश्चात्र विधानतः ॥
[8] A : कुर्याद् मध्यमाधमाधवैः
[9] Cf. *Kāraṇāgama*, I, 98, 46b : एवं यः कुरुते मर्त्यः प्राप्नोति विजयं श्रियम्
[10] H : निर्मितं खलवैरीं च हित्वा तत्प्रत्यजायते [11] H : वर्ज्यः pour वन्द्यः
[12] H : सोबलयारिपापरः [13] H : इत्यजिते दुर्गास्थापनपटलः [14] A : पञ्चपञ्चाशः

## [चतुःपञ्चाशः पटलः]

[[1]सूर्यस्थापनविधिः[2]]

सूर्यस्य स्थापनं वक्ष्ये तस्योत्पत्तिपुरःसरम् । मन्त्रेण सह सर्वं तन्मत्तो[3] निगदतः शृणु ॥१॥

[सूर्योत्पत्तिः[4]]

अष्टमूर्तेः शिवस्यैतन्मूर्तयोऽष्टौ प्रकीर्तिताः । सूर्याचन्द्रमसावात्मा महाभूतानि पञ्च च ॥ २ ॥
एतास्वष्टसु सूर्योऽयमग्रिमा मूर्तिरुच्यते । [5]सूर्यमूर्त्या शिवो लोकान् सृजत्यवति[6] दीप्तया ॥ ३ ॥
पुनः संहरतीशानस्तन्मूर्त्या स[7] शिवस्य च । उत्पत्तिरेवमुक्ता च[8] मन्त्रश्चाद्य निगद्यते ॥ ४ ॥

---

[1] Ce *paṭala* se trouve dans les manuscrits A, D et H seulement; mais le ms. A omet les *śloka* 1a, 49b et 50, le ms. D omet les *śloka* 1a à 97b et le ms. H omet tous les *śloka* après *śloka* 83.

[2] Pour सूर्यस्थापनविधि, voir *Kāraṇāgama* II, 105, *Dīptāgama* 72, *Santānasaṃhitā* 31 et *Supraheda* I, 49; voir aussi सूर्यपूजा dans *Acintyaviśvasādākhya paṭala* 10, et *Rauravāgāma*, vol. I, Appendice II.

[3] H : यन्त्रो pour मत्तो

[4] Cf. le mot अष्टमूर्ति dans le *Śabdakalpadruma* : अष्टमूर्तिः शिवः इति हेमचन्द्रः ॥ तत्प्रत्येकमूर्तिनामानि—क्षितिमूर्तिः शर्वः, जलमूर्तिर्भवः, अग्निमूर्ती रुद्रः, वायुमूर्तिरुग्रः, आकाशमूर्तिर्भीमः, यजमानमूर्तिः पशुपतिः, चन्द्रमूर्तिर्महादेवः, सूर्यमूर्तिरीशानः । इति तन्त्रशास्त्रम् । अथाग्नी रविरिन्दुश्च भूमिरापः प्रभञ्जनः । यजमानः खमष्टौ च महादेवस्य मूर्तयः ॥ इति शब्दमाला ।

cf. *Kriyākramadyotikā-vyākhyā Prabhā*, 45 : सकलः सूर्यरूपस्तु निष्कलः शिव एव च । (अंशुमति)

cf. *Vatulaśuddhākhya*, I, 138a : नेत्रेषु सव्यवामोर्ध्वे सूर्यसोमाग्निसंभवः ।

cf. *Dīptāgma* 72, 1b-2a et *Suprabhedāgama* I, 49, 1b-2a:
अदितेः पुत्रभावत्वादादित्यश्चेति चोच्यते । ईश्वरस्यार्धभागेन जगच्चक्षुरिति स्मृतः ॥

voir aussi *Liṅgapurāṇa*, II, 12, 3-4:
भूरापोऽग्निमरुद्व्योमभास्करा दीक्षितः शशी । भवस्य मूर्तयः प्रोक्ताः शिवस्य परमेष्ठिनः ।
खात्मेन्दुवह्निसूर्याम्भोधरा पवन इत्यपि । तस्याष्टमूर्तयः प्रोक्ता देवदेवस्य धीमतः ॥

[5] A : सूर्यमूर्तिशिवो
[6] H : अन्विति pour अवति
[7] H : तम्मदस? pour तन्मूर्त्या स
[8] H : उक्तश्च pour उक्ता च

[सूर्यमन्त्राः[1]]

**सान्तं यान्तसमायुक्तं षष्ठस्वरसमन्वितम् । बिन्दुनादयुतं चापि [2]मूलं विद्याद्रवेरिति ॥ ५ ॥**
**तस्मादेव षडङ्गानि सान्तवह्नियुतानि च । हृदयं च शिरश्चैव शिखा कवचमेव च ॥ ६ ॥**
**अस्त्रं नेत्रं षडङ्गानि [3]जातिषट्कयुतानि च । [4]जायमाना भवेद्विद्या तस्यैवाद्या षडक्षरा ॥ ७ ॥**
**ह्रां ह्रीं स इति [5]चोच्चार्य सूर्यायेति पदं ततः । सर्वरोगहरं विद्याज्जपतामिममुत्तमम् ॥ ८ ॥**

[सूर्यगायत्री[6]]

**पद्महस्ताय विद्महे रथारूढाय धीमहि । तन्नः सूर्यः प्रचोदयादिति पश्चाद्वदेत्सुधीः[7] ॥ ९ ॥**
**इति [8]गायत्रिरुद्दिष्टा सर्वशान्तिकरी तदा । एवं मन्त्राः समुद्दिष्टाः प्रतिष्ठाविधिरुच्यते ॥१०॥**

[सूर्यस्थापनयोग्यस्थानानि[9]]

**लिङ्गस्थापनयोग्यानि कथितान्यत्र यानि तु । तेषु सर्वेषु चास्यापि स्थापनं सर्वसिद्धिदम् ॥**

---

[1] Cf. *Kāraṇāgama*, II, 105, 8b-10a:
प्रणवं पूर्वमुच्चार्य ह्रामित्यादि ततः परम् । मायाबीजं ततः पश्चात्सकारं तु ततः परम् ॥
हकारं तु ततः पश्चाच्छिवसूर्यमतः परम् । चतुर्थ्यन्तं नमोऽन्तं च मूलमन्त्रमिहोच्यते ॥

cf. *Dīptāgama*, 72, 7-9a:
पार्थिवं वारुणं चैव वह्निमारुतसंयुतम् । त्रयोदशं तु संभिन्नं शक्तिबिन्दुसमन्वितम् ॥
आदित्यमूलमन्त्राणि त्रयोदश सुदुर्लभम् । नादेन वह्निसंयुक्तैः षडङ्गैर्ब्रह्मपञ्चकम् ॥
दीर्घस्वरास्ततस्त्वङ्गा ब्रह्माख्या ह्रस्वसंयुताः ॥

cf. *Santānasaṃhitā*, 31, 2b-4a:
शिवरूपेण संयुक्तं महाविष्णुसमन्वितम् । अनिरुद्धेन संयुक्तं याम्यरूपेण संयुतम् ॥
शिवरूपेण संयुक्तं बिन्दुनादसमन्वितम् । एतन्मन्त्रं परं गुह्यं संग्रामे विजयो भवेत् ॥
कन्यार्थी लभते कन्यां विजयार्थी जयी भवेत् । सर्वान्कामानवाप्नोति एतन्मन्त्रं परं शुभम् ॥

Pour les सूर्यमन्त्र voir *Somaśambhupaddhati* (éd. Devakôṭṭai) pp. 16-23 et p. 274, śl. 5b: सूर्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च (dans आदित्यस्थापनपटल)

[2] H : मूलं विद्या भवेदिति

[3] Pour जातिषट्क voir *Rauravāgama* vol I, p. 19, note 11.

[4] H : जाया मान भवेद्वियां    [5] H : योच्चार्य

[6] Cf. *Dīptāgama*, 72, 10:
अश्वध्वजाय विद्महेत्युच्चार्य तदनन्तरम् । पद्महस्ताय धीमहि तन्नो भानुः प्रचोदयात् ॥

cf. Appendice du *Yogajāgama*, ms. p. 38:
ओं अश्वध्वजाय विद्महे पद्महस्ताय धीमहि । तन्नः सूर्यः प्रचोदयात् ।

[7] H : पश्चाद्वदेद्बुधः    [8] La forme grammaticale correcte est गायत्र्युद्दिष्टा

[9] Cf *Dīptāgama*, 72, 2b-3 et 6a:
द्विभुजं सौम्यमित्युक्तं तस्मात्सौम्यं तु योजयेत् । सर्वसिद्धिसमग्रं च ग्रामस्यैन्द्रे विशेषतः ॥
आलयस्येशदिग्भागे विभवार्थाय देशिकः । ग्रामस्याभिमुखं ग्रामे आलये पश्चिमे मुखम् ॥

ग्रामादौ पूर्वदिग्भागे शैवे धाम्नि च [1]गोचरे । प्रासादं पश्चिमद्वारं कृत्वा [2]पूर्वविधानतः[3] ॥

[मण्टपः[4]]

तस्याग्रे पार्श्वयोर्वापि मण्टपे [5]विधिना कृते । चतुरश्राणि कुण्डानि कृत्वा पूर्वादितः क्रमात् ॥
शक्रशंकरयोर्मध्ये पङ्कजं स्यात्प्रधानकम् । [6]पश्चहोमविधाने तु कोणकुण्डानि वर्जयेत् ॥१४॥
ऐशान्यां कल्पयेत्कुण्डं प्रधानं [7]पद्ममेव तत् । मण्टपे पूर्ववत्सर्वं संस्कारादि प्रकल्पयेत्[8] ॥१५॥

[नयनोन्मीलनम्[9]]

[10]तत्र वेद्यां समानीय [11]प्रतिमां देशिकः सुधीः । षडक्षरेण संप्रोक्ष्य दृष्ट्युन्मीलनमारभेत् ॥
नेत्रद्वययुते चर्क्षे मध्याह्ने तु सुनिर्मले । सुलग्ने कारयेत्कर्म शिल्पिना [12]तद्यथोचितम् ॥ १७ ॥
स्वर्णसूच्या तथा पश्चाद्विलिखेदक्षि[13]मण्डलम् । शिल्पिनं वस्त्रहेमाद्यवस्तुभिस्तु सुतोषयेत्[14] ॥

---

cf. *Suprabhedāgama*, I, 49, 2b-3 et 6a:
द्विभुजं सौम्यमित्युक्तं तस्मात्सौम्यं तु पूजयेत् । सर्वसिद्धिं समन्विच्छेद्ग्राममध्ये विशेषतः ॥
आलये वामपार्श्वे तु विभवार्थाय देशिकः । ग्रामस्याभिमुखद्वारमालये पश्चिमे मुखम् ॥
*ibid*, I, 39, 29a: " भास्करं पूर्वतो दिशि "
cf. *Kāraṇāgama*, II, 105, 4:
" द्वारस्य सव्यपार्श्वके । अथवा वामपार्श्वे तु सौरालयं प्रकल्पयेत् ॥

[1] H : गह्वरे pour गोचरे [2] A : पूर्वं विधानतः

[3] Pour लिङ्गस्थापनयोग्यस्थान voir *Ajitāgama*, *paṭala* 6

[4] Cf. *Kāraṇāgama*, II, 105, 5-6a:
षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम् । मध्ये वेदिं प्रकल्प्याथ पश्चकुण्डं प्रकल्पयेत् ॥
अथवा एककुण्डं वा मेखलात्रयमुत्तमम् ॥
cf. *Dīptāgama*, 72, 27b-29:
आलयस्याग्रतः कृत्वा मण्डपं विधिनान्वितम् । सर्वालंकारसंयुक्तं दर्भमालाभिशोभितम् ॥
तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकविस्तृताम् । हस्तमात्रसमुत्सेधां दर्पणोदरसंनिभाम् ॥
कुण्डानि परितः कृत्वा मृदा वा वालुकैश्च वा ।

[5] A : वा विना कृते [6] H : पञ्चहोमविधानेन [7] A : परमेव तम्

[8] Pour मण्टपसंस्कार voir *Ajitāgama*, *paṭala* 18, *śloka* 104-112

[9] Cf. *Santānasaṃhitā*, 31, 5b-6:
पुण्याहं वाचयेत्तत्र प्रतिमं तु [प्रतिमाया ?] विशेषतः । नयनमोक्षणं कुर्यान्नेत्रद्वययुते दिने ॥
प्रतिमास्थापने तूक्ताः क्रियाः सर्वाः समाचरेत् ॥
cf. *Suprabhedāgama*, I, 49, 17b:
हेमसूच्याथ मधुना नेत्रं नेत्रेण मोचयेत् ॥

[10] H : तस्य पात्रे pour तत्र वेद्यां [11] H : प्रमाणं pour प्रतिमां

[12] A : दद्ययोजितम् [13] H : दृष्टि pour अक्षि

[14] H : वस्तुभिर्वस्तु तोषयेत् pour वस्तुभिस्तु सुतोषयेत्

शुक्रं शनैश्चरं चैव राहुं केतुं यथाक्रमम् । प्रागादिषु समन्ताच्च स्वनामपदमन्त्रकैः[1] ॥ ४६ ॥

[होमः[2]]

सर्वेषां च हविर्दत्त्वा ततो होमं समारभेत् । कुण्डसंस्कारपूर्वाणि[3] कृत्वा कर्माणि देशिकः ॥
साधकैर्होतृभिः सार्धं प्रधाने सूर्यमर्चयेत् । अन्येष्वष्टसु कुण्डेषु सोमादींश्च क्रमान्न्यसेत् ॥४८॥
समिदाज्यचरूँल्लाजान् यवसर्षपकांस्तिलान्[4] । [5]साङ्गेन मूलमन्त्रेण कुण्डे च जुहुयात्सुधीः ॥
शतमष्टोत्तरं वापि तदर्धं वा तदर्धकम् । प्लक्षोदुम्बरमश्वत्थवटौ पूर्वादितः क्रमात् ॥ ५० ॥
पलाशं खदिरं बिल्वमपामार्गं विदिक्षु च । प्रधानस्यार्कमेवोक्तं [6]होमकर्म निवेदयेत् ॥५१॥
सर्वद्रव्यावसाने तु सर्वकुण्डेषु [7]देवप । षड्वर्णेन च गायत्र्या जुहुयात्सर्पिषा तदा ॥ ५२ ॥
द्रव्यान्ते व्याहृतिं हुत्वा प्रतिद्रव्यं समाहितः । तत्तदङ्गं समुच्चार्य तत्तदङ्गेषु संस्पृशेत् ॥ ५३ ॥
देशिकेनैव होतारः स्पृशेयुस्ते च [8]पूर्वकम् । साधकाभावतः प्रोक्ता [9]अष्टौ [10]चत्वार एव च ॥
होमकाले चतुर्दिक्षु कुर्यादध्ययनं द्विजैः । ऋग्यजुस्सामाथर्वैस्तु प्रागादिषु यथाक्रमम् ॥ ५५॥
अघोरास्त्रं जपेदेकः [11]शांकरं देशमाश्रितः । अधिवासक्रियामेवं रात्रौ कृत्वा [12]समाहितः ॥
आचार्यो मूर्तिपैः सार्धं प्रातरुत्थाय शान्तधीः । नित्यकर्म समाप्याथ मण्टपं संप्रविश्य च ॥

[सूर्यार्घ्यविधिः[13]]

कृतमन्त्रतनुः पश्चात् सूर्यस्यार्घ्यं प्रदापयेत् । अर्घ्यदानमथो वक्ष्ये तच्छृणु त्वं समाहितः ॥

---

[1] A : मन्त्रकः pour मन्त्रकैः

[2] Cf. *Suprabhedāgama*, I, 49, 21b-23:
पश्चाद्धोमं तु कर्तव्यं नव पञ्च त्रयं तु वा । शिवाग्निं पूर्ववद्ध्यात्वा न्यस्त्वा चाद्यं तु मध्यमे ॥
समिदाज्यचरूँल्लाजान्सक्तु सर्षपमेव च । सूर्यगायत्रिमन्त्रेण सर्वद्रव्याणि होमयेत् ॥
स्पर्शाहुतिं ततः कृत्वा तन्मूलेन तु देशिकः ॥

cf. *Santānasaṃhitā*, 31, 9:
नवहोमं प्रकुर्वीत पूर्वोक्तद्रव्यसंयुतम् । शतमर्धं तदर्धं वा सूर्यमन्त्रेण होमयेत् ॥

[3] A : पूर्वाणि pour पूर्वादि    [4] A : यवांश्च सर्षपांस्तिलान्

[5] A omet les *śloka* 49b et 50; voir note 1, p. 192

[6] H : होमकर्माणि वेदयेत्    [7] A : देवपि

[8] H : पूर्वकाः    [9] H : ह्यष्टौ pour अष्टौ    [10] H : चतुरः pour चत्वारः

[11] H : शांकरे pour शांकरं    [12] A : समाहितम्

[13] Cf. *Acintyaviśvasādākhya* 10, 1-8a:
शृणु वक्ष्ये विशेषेण सूर्यार्घ्यं चापि पूजनम् । आचम्य विधिवत्सर्वं कराङ्गन्यासमारभेत् ॥
हृदयादस्त्रपर्यन्तं देहन्यासमतः परम् । सूर्यात्मानं स्वयं ध्यात्वा साधयेदर्घ्यभाजनम् ॥
आसने प्राङ्मुखो भूत्वा मण्डलं वृत्तमाचरेत् । स्वहस्तं वापि तत्कृत्वा आचामं शुद्धभूतले ॥
गोमयेन जलेनापि लेपयेद्रविमण्डलम् । अस्त्रेण प्रोक्षयेत्तत्र रक्तचन्दनवारिभिः ॥

प्रासादाग्रेऽथवा तस्य पार्श्वयोरुभयोरपि[1] । गोमयेनोपलिप्याथ [2]सुवृत्तं स्थण्डिलं क्रमात् ॥५९॥
षडक्षरेण मन्त्रेण प्रोक्षयेत्स्थण्डिलं ततः[3] । तत्र ताम्रमयं पात्रं [4]द्वित्रैकप्रस्थपूरितम् ॥ ६० ॥
श्रेष्ठमध्यकनिष्ठं तु गन्धोदेनाभिपूरयेत्[5] । ततश्च यवसिद्धार्थं साक्षतं रक्तचन्दनम् ॥ ६१ ॥
तत्र [6]मूलेन विन्यस्य पात्रे पद्मं च विन्यसेत् । तदुद्धृत्यात्र [7]पाद्यां तु विन्यस्याथाभिमन्त्रयेत् ॥
साङ्गेन मूलमन्त्रेण सुरभिं तत्र दर्शयेत् । [8]ततश्चोदयमायान्तं साक्षाद्देवं दिवाकरम् ॥ ६३॥
गन्धपुष्पादिभिः पूज्य षड्वर्णेन ततः सुधीः । जानुभ्यामवनौ स्थित्वा पूर्वाभिमुख एव च[9]॥
अर्घ्यपात्रं [10]तदुद्धृत्य मस्तकोपरि हेतिना । प्रणवं मूलमन्त्रं च षडक्षरमनुक्रमात् ॥ ६५ ॥
[11]उच्चार्य दद्यात्सूर्याय दत्त्वा पाद्यं भुवि क्षिपेत् । [12]अधोमुखं ततो देवं प्रणम्य प्रार्थयेद्रविम् ॥
[13]देवदेव त्रिधामेश जगत्प्रथममङ्गल । [14]तिष्ठात्र स्थापिते भक्त्या मया सूर्य जगत्पते ॥६७॥
इति संप्रार्थ्य देवेशं [15]परमान्नं घृतप्लुतम् । मधु[16]मण्डघृतोपेतं सूर्यायाथ निवेदयेत् ॥ ६८ ॥

[प्रतिमास्थापनम्[17]]

ततश्च धौतपादस्सन्समाचम्य[18] यथाविधि । प्रविश्य मण्डपे देवान्समभ्यर्च्य घटस्थितान् ॥
पूर्णाहुतिं च सर्वत्र मूलमन्त्रेण दापयेत् । सुमुहूर्ते सुलग्नेऽथ देवमुद्धृत्य भास्करम् ॥ ७० ॥
वस्त्रकूर्चादिकं [19]त्यक्त्वा गायत्रीमन्त्रमुच्चरन् । रथादिषु समारोप्य कृत्वा धाम्नि प्रदक्षिणम् ॥

---

ताम्रपात्रे जलं पूर्य रक्तचन्दनतण्डुलैः । रक्तपुष्पैः कुशैर्दर्भैस्तिलसर्षपतण्डुलैः ॥
ललाटाकृष्टबिन्दुं च निक्षिपेदमृताकृतिम् । अङ्गैरादित्यमभ्यर्च्य कवचेनावकुण्ठनम् ॥
अस्त्रेण रक्षणं कृत्वा जानुभ्यामवनीं गतः । आसक्तं प्रोद्धरेत्तत्र द्रव्यं मण्डलदृष्टियुक् ॥
भक्त्यार्घ्यं च रवेर्दद्यान्मूलमन्त्रेण साधकः ॥

[1] H : तु वा pour अपि
[2] A omet सु dans सुवृत्तं
[3] A : तथा pour ततः
[4] H : द्वित्रियेक pour द्वित्रैक
[5] A : अभिपूजयेत् pour अभिपूरयेत्
[6] H : मूले निविन्यस्य
[7] H : पात्रं तु pour पाद्यां तु
[8] H : ततश्चोदिवमान्तः साक्षाद्देवं
[9] A : वा pour च
[10] H : तम् pour तद्
[11] A : उच्चार्यद्यात्सूर्याय
[12] H : अथोमुखं
[13] H : देवदेवात्र धाम्नीश
[14] H : तिष्ठति स्थापिते गत्या
[15] H : पारमानं
[16] H : खण्ड pour मण्ड
[17] Cf. *Suprabhedāgama*, I, 49, 24-25 :
प्रभाते सुमुहूर्ते तु पूर्णां दत्त्वा स्वमन्त्रतः । आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥
शयनाद्बिम्बमुत्थाप्य स्नानवेद्यामथानयेत् । घृतशिरोऽर्पणं कृत्वा "

cf. *Dīptāgama*, 72, 18b-20a:
प्रभाते सुमुहूर्ते तु पूर्णाहुतिं स्वमन्त्रतः । आचार्यं पूजयेत्पूर्वं वस्त्रहेमाङ्गुलीयकैः ।
शयनाद्बिम्बमुत्थाप्य स्नानवेद्यामथानयेत् । घृतं शिरोऽर्पणं कृत्वा "

[18] H : समाप्य च pour समाचम्य
[19] A : न्यस्त्वा pour त्यक्त्वा

आचार्यो मन्त्रतस्तां[1] च तोयेन क्षालयेत्सुधीः । षडक्षरेण मन्त्रेण ततस्तां प्रतिमां सुधीः ॥१९॥
पश्चिमाभिमुखं न्यस्य कृत्वाग्रे स्थण्डिले ततः । मधुसर्पिःसुसंपूर्णं कांस्यं वा ताम्रजं तु वा ॥
पात्रद्वयं [2]समाधाय स्थण्डिले मूलमुच्चरन् । ततस्तु [3]हेमकमलं विन्यस्याभ्यर्चयेद्धृदा ॥२१॥
ततस्ते[4] हैमया धीमान्दक्षिणेतरयोः क्रमात् । नेत्रयोर्नेत्रमन्त्रेण तर्पयेद्दूर्वया [5]बुधः ॥ २२ ॥
वह्निचन्द्रमसोर्बीजं दक्षिणेतरयोः क्रमात्[6] । तर्जन्यनामिकाभ्यां तु काञ्चनेन नखेन च ॥
युक्ताभ्यां विन्यसेदक्ष्णोस्ततो[7] यवनिकां तदा । संवर्ज्य दर्शयेद्धेनुं ब्राह्मणांश्च [8]सुसंयतान् ॥

[ग्रामप्रदक्षिणम्]

गायत्रीमन्त्रमुच्चार्य ततो देवं रथादिषु । आरोप्य [9]वस्त्रमाल्याद्यैः कृत्वालंकारमुत्तमम्॥ २५ ॥
ग्रामादौ च समानीय प्रदक्षिणमतन्द्रितः । जलाशयसमीपाय नीत्वा तीरे निधाय च ॥२६॥

[जलाधिवासः[10]]

पुण्याहं विधिवत्कृत्वा प्रोक्षयेद्ब्रह्मपञ्चकैः । अभिषिच्य च तोयेन षडक्षरमुदाहरन् ॥ २७ ॥
गायत्रीमुच्चरन्कूर्चवस्त्रमालाभिर्वेष्टयेत्[11] । ततो [12]जलाशयान्तस्तां पूर्ववच्छाययेच्छनैः ॥२८॥
ततो दिक्षु दिशामीशान्सास्त्रान्संपूज्य देशिकः । तत्राथ पूर्ववन्नीत्वा कालं बेरं ततो जलात् ॥

[बेरशुद्धिः]

स्नानमण्टपमानीय तत्र विन्यस्य पूर्ववत् । वस्त्रकूर्चादिकं [13]त्यक्त्वा पञ्चगव्याभिषेचनम् ॥३०॥
षडक्षरेण कृत्वा तु [14]पञ्चमृद्भिश्च शोधयेत् । बहुशः शोधयित्वा तु गन्धोदेनाभिषेचयेत् ॥३१॥

[शयनाधिवासः[15]]

ततश्च कृत्वा पुण्याहं बन्धयेत्कौतुकं हृदा । ततः कूर्चेन वस्त्रेण छादयेत्प्रतिमां ततः ॥ ३२ ॥

---

[1] H : तं pour तां
[2] A : समादाय
[3] H : हेमं कमलं
[4] H : तौ pour ते
[5] A : ततः pour बुधः
[6] H : अपि pour क्रमात्
[7] A : अक्ष्णा ततो pour अक्ष्णोस्ततो
[8] H : संयुतान् pour सुसंयतान्
[9] H : मालावस्त्राद्यैः
[10] Cf. *Dīptāgama*, 72, 31:
वस्त्रेण वेष्टयित्वा तु जले चैवाधिवास्य च । नीत्वा जलोषितं बिम्बं संस्नाप्य पञ्चगव्यकैः ॥
cf. *Suprabhedāgama*, I, 49, 16-17a:
उत्तराच्छादनं कृत्वा दर्भैर्वस्त्रैः समन्ततः । वस्त्रेण वेष्टयित्वा तु जले चैवाधिवासनम् ॥
नीत्वा जलोषितं बिम्बं संस्नाप्य पञ्चगव्यकैः ॥
[11] H : मालाभिवेष्टयेत्
[12] H : जलाशयस्यान्तं pour जलाशयान्तस्तां
[13] A : दत्त्वा pour त्यक्त्वा
[14] A : पञ्चमृत्पञ्च
[15] Cf. *Dīpta* 72, 32 et *Suprabheda* 1,49, 18:
बध्वा प्रतिसरं मन्त्री शयने चाधिवासयेत् । उत्तराच्छादनं कृत्वा दर्भैर्वस्त्रैः समन्ततः ॥

दत्त्वार्घ्यं चापि शिरसा [1]मूलविद्यां समुच्चरन् । मण्टपे वेदिकायां तु विधिवत्स्थण्डिले कृते ॥
पूर्ववत्कल्पिते [2]तल्पे सर्वातोद्यसमन्वितम् । आनीय प्रतिमां तत्र शाययेत्पूर्ववद्बुधः ॥ ३४ ॥
अतिरक्तेन सूक्ष्मेण वस्त्रेणाच्छादयेत्ततः ।

[कुम्भस्थापनम्[3]]

पूर्वोक्तलक्षणोपेतं हेमाम्बुजसमन्वितम् ॥ ३५ ॥
वस्त्रकूर्चसमायुक्तं कुम्भं सौरं [4]शिरोऽन्तिके । संस्थाप्य परितश्चापि घटानष्टौ तथाविधान्[5] ॥

[कुम्भपूजा]

विन्यस्याभ्यर्चयेन्मन्त्री [6]तद्विधिः कथ्यतेऽधुना । दक्षिणे वेदिकायास्तु प्राङ्मुखो वाप्युदङ्मुखः॥
उपविश्यासने धीमान्मूलविद्यां समुच्चरन् । प्राणायामत्रयं कृत्वा दहनप्लावनादिकम् ॥ ३८ ॥
भूतशुद्धिं च निर्वर्त्य करन्यासं तु कारयेत् । अङ्गानि हृदयादीनि न्यसेदङ्गुष्ठकादिषु ॥३९॥
अस्त्रं हस्ततले [7]न्यस्य मूलं सर्वाङ्गुलीष्वपि । अङ्गेषु [8]तत्तदङ्गानि कवचं वक्षसि न्यसेत् ॥४०॥
अस्त्रं दिक्षु च विन्यस्य प्रणवं मूर्ध्नि विन्यसेत् । मूलविद्याङ्गुले चैव पादयोस्तु षडक्षरम् ॥
ततः सहस्रकिरणं प्रभामण्डलमण्डितम् । पुण्डरीकस्थितं शान्तं रक्तवर्णं द्विलोचनम् ॥४२ ॥
रक्ताम्बरपरीधानं सर्वाभरणभूषितम् । [9]पुण्डरीकद्वयव्यापि करपङ्केरुहद्वयम् ॥ ४३ ॥
ध्यात्वा सूर्यं तदा देवं मूलमन्त्रं समुच्चरन् । आवाहनादिभिः [10]कुम्भे पूजयेद्दर्शयेत्ततः ॥४४॥
बिम्बमुद्रां[11] च पद्मं च ततो दिक्षु समर्चयेत् । कुम्भेषु सोममङ्गारं बुधं देवगुरुं तथा[12] ॥४५॥

---

[1] H : मूलं विद्यां [2] A : कल्पे pour तल्पे

[3] Cf. *Dīptāgama*, 72, 33-34a:
शयनस्येशदिग्भागे कुम्भं वस्त्रेण वेष्टितम् । सकूर्चं सापिधानं च सरत्नं च सवस्त्रकम् ॥
विन्यसेद्विधिवत्कुम्भं गन्धाद्यैर्विधिना यजेत् ॥

cf. *Santānasaṃhitā*, 31, 8b:
प्रतिमादक्षिणे भागे प्रधानकुम्भं तु विन्यसेत् ॥

[4] H : शिरोऽन्तिकम्

[5] Cf. *Dīptāgama*, 72, 13b-14a:
आव्रतान्कलशानष्टौ सोमाद्यष्टग्रहाधिपान् । वस्त्रकूर्चपिधानाद्यैः स्थापयित्वा पृथक् पृथक् ॥

cf. *Suprabhedāgama*, I, 49, 20b-21a:
आव्रतान्कलशानष्टौ लोकपालादिकान् क्रमात् । वस्त्रकूर्चपिधानाद्यैः स्थापयित्वा पृथक् पृथक् ॥

[6] H : तत् बुधं pour तद्विधिः [7] H : न्यस्त्वा pour न्यस्य

[8] H : तदङ्गानि pour तत्तदङ्गानि

[9] H : पुण्डरीकद्वयं वापि [10] H : कुर्महे pour कुम्भे [11] H : ब्रह्ममुद्रां

[12] H : तदा pour तथा

प्रविश्य भवनं तत्र शिल्पिना सह देशिकः । स्थापयेद्विधिवन्न्यस्य [1]रत्नान्येवावटे ततः[2] ॥
स्पृशन्मूलं समुच्चार्य प्रतिमायाः शिरस्तथा । गर्भे [3]ब्रह्मपदे प्रोक्तं स्थापनं मध्यमेऽथवा ॥७३॥
दैवमानुषयोर्वापि सर्वसिद्धिकरं नृणाम् । श्लिष्टं दृढतरं रम्यं निश्चलं स्थाप्य देवताम् ॥
शिल्पिकर्मणि निर्वृत्ते सत्कारेण विसर्जयेत् । स्नात्वाचम्य वसन्वासो नवरत्नं[4] तथैव च ॥७५॥
उष्णीषं चोत्तरीयं च कृत्वा पञ्चाङ्गभूषणैः । [5]भूषितश्च तथा गर्भे कृत्वा [6]पुण्याहमुत्तमम् ॥७६॥
पञ्चमृत्पञ्चगव्यैश्च शुद्धिं [7]देवे समाचरेत् । गायत्रीमन्त्रमुच्चार्य गन्धोदेनाभिषेचयेत् ॥ ७७ ॥

[कुम्भाभिषेकः[8]]

ततो मण्टपमाविश्य घटानुद्धृत्य मूर्तिपैः । सर्वातोद्यसमायुक्तं गीतनृत्तसमन्वितम् ॥ ७८ ॥
कृत्वा प्रदक्षिणं धाम्नि प्रविश्य भवनं ततः । देवाग्रे स्थण्डिले कुम्भान्विन्यसेत्पूर्ववत्सुधीः ॥
तत्राभ्यर्च्य घटे भानुं मध्येऽन्येषु ग्रहानपि । ध्यात्वा पद्मस्थितं देवं पूर्ववत्प्रतिमा[9]हृदि ॥८०॥
मूलमन्त्रं समुच्चार्य न्यसेत्कूर्चसुताम्भसा[10] । [11]ततश्च ग्रह[12]कुम्भस्थसोमादींश्च तथा ग्रहान् ॥
[13]अग्रादारभ्य विन्यस्य ततस्तैरभिषेचयेत् ।

[मन्त्रन्यासः]

प्रणवं मूर्ध्नि विन्यस्य मूलमन्त्रं हृदि न्यसेत् ॥ ८२ ॥

---

[1] A : रत्नान्येव घटे ततः

[2] Cf *Suprabhedāgama*, I, 49, 15:
शालिभिः स्थण्डिलं कृत्वा रत्नन्यासाय देशिकः । रत्नानामप्यलाभे तु मौक्तिकं तु निधापयेत् ॥
cf. *Dīptāgama*, 72, 30:
शालिभिः स्थण्डिलं कृत्वा रत्नन्यासाय देशिकः । रत्नानामप्यलाभे तु मौक्तिकानि निधापयेत् ॥

[3] H : ब्रह्मपदं [4] A: रवे रक्तं pour नवरत्नं [5] H : भूषितं च

[6] A : पूर्णाहम् pour पुण्याहम् [7] H : देवं pour देवे

[8] Cf. *Suprabhedāgama*, I, 49, 25b-27:
"नीत्वा कुम्भं तु संनिधौ । कुम्भस्थं तु यथादेवं प्रतिमाया हृदि न्यसेत् ॥
संस्नाप्य कलशैरेवं गन्धपुष्पादिनार्चयेत् । प्रभूतं हविषं दत्त्वा मूलमन्त्रेण देशिकः ॥
प्रारभेदुत्सवं तत्र कर्ता वित्तानुसारतः ।
cf. *Santānasaṃhitā*, 31, 10-11a:
ततः प्रभाते विमले मूलमन्त्रेण स्नापयेत् । आचार्यपूजनं कृत्वा वस्त्रहेमाङ्गुलीयकैः ॥
पर्यष्टिपरिचारांश्च पूजयेद्विधिना सह ॥

[9] H : प्रतिमां pour प्रतिमा [10] A : कूर्चाश्रिताम्भसा [11] A : तच्च pour ततश्च

[12] A : कुम्भस्य pour कुम्भस्थ [13] A : अग्रयारभ्य

षड्वर्णं नाभिदेशे तु गायत्रीं पादयोर्न्यसेत् । अङ्गेष्वङ्गानि विन्यस्य[1] कवचं वक्षसि न्यसेत् ॥
अस्त्रं हस्तप्रदेशे तु मातृकाश्च यथा पुरा । विन्यस्याथ च गायत्र्या गन्धोदेनाभिषेचयेत् ॥८४॥

[सूर्यपूजा]

दत्त्वा पाद्यं ततो मन्त्री दत्त्वा चाचमनीयकम् । हृदयेनैव मन्त्रेण ततोऽर्घ्यं चापि मूर्धनि ॥८५॥
मूलेन दत्त्वा मार्ताण्डं रक्तचन्दनवारिणा । काश्मीररोचनायुक्तं समालिप्यांशुकेन च ॥८६॥
रक्तेन रक्तपद्मैश्च समलंकृत्य तैजसम् । संपूज्य गन्धपुष्पाद्यैर्मूलमन्त्रं समुच्चरन् ॥ ८७ ॥
सोमादींश्च यजेत्तद्वद्देवाग्रात्परितः स्थितान् । पायसं च ततो दद्यात्ताम्बूलं च निवेदयेत् ॥८८॥
एवं कर्म समाख्यातं स्वतन्त्रपरतन्त्रयोः । यथाक्रममथो वक्ष्ये स्वतन्त्रस्याधिकं विधिम् ॥८९॥

[प्रधानालये विशेषविधिः]

दक्षिणेतरयोस्तस्य पार्श्वयोस्तु जनार्दन । उषां च प्रत्युषां चैव कृत्वा चैकासनस्थिताम्[2] ॥९०॥
करण्डमकुटोपेतां सर्वाभरणभूषिताम् । द्विनेत्रां द्विभुजां चैव हेमवर्णां धृताम्बुजाम् ॥ ९१ ॥
नेत्रोन्मीलनकर्मादि सर्वकार्यं सहैव तु । अधिवासे तयोः कुम्भौ पार्श्वयोरपि विन्यसेत् ॥९२॥
प्रधानकुण्डे होमं च तयोर्द्रव्यैश्च तैरपि । स्वनामपदमन्त्राभ्यां कुर्यादत्रोक्तसंख्यया ॥ ९३ ॥
मन्त्रन्यासं च ताभ्यां तु देवस्यानु प्रकल्पयेत् । एवं वै शक्तिका[3] वापि स्थापयेत्स्वस्वमन्त्रकैः॥
द्वाराध्यक्षौ च कर्तव्यौ दक्षिणेतरयोरपि । उग्रप्रशान्तनामानौ द्वारस्य परिकल्पयेत् ॥ ९५ ॥

---

[1] Le manuscrit H se termine brusquement ; voir note 1 p. 192:

[2] Cf. *Dīptāgama*, 72, 23a: उषा च प्रत्युषा देवी सव्यासव्ये च कीर्तिते ।
cf. *Suprabhedāgama*, I, 49, 8a: उषा च प्रत्युषा देवी सव्यासव्ये तु संस्थिते ।
cf. *Rauravāgama*, vol I, p. 207 *śloka* 96-100
cf. *Dhyānaślokāḥ*, (ms. T 102) p. 42:

उषादेवी

एकाननां श्यामवर्णां द्विनेत्रां च द्विबाहुकाम् । नीलोत्पलं च वामेन दक्षहस्तप्रलम्बिताम् ॥
सौभाग्यां पीतवस्त्राढ्यामुषादेवीमुपास्महे ।

प्रत्युषादेवी

एकाननां द्विनेत्रां च द्विहस्तां श्वेतवर्णकाम् । कुमुदं दक्षिणे हस्ते वामहस्तप्रलम्बिताम् ॥
चित्रवस्त्रसमायुक्तां प्रत्युषां हृदि भावयेत् ।

[3] Pour les détails des *śakti* voir *Rauravāgama* vol. I, pp. 203-204.

तयोः कुम्भौ तथा स्थाने वेदिकापार्श्वयोर्न्यसेत् । अग्रेऽरुणं तथा स्थाप्य वाजिनं तद्बहिः क्रमात्[1]॥
लोकपालान्यथास्थानं कुम्भस्थान्विन्यसेत्क्रमात् । [2]परिवारांश्च सर्वांस्तानधिवासे सहैव तु ॥
मन्त्रन्यासावसाने तु यथास्थानं प्रयोजयेत् ।

[फलश्रुतिः[3]]

इति यः कारयेन्मर्त्यः सवितुः स्थापनं परम् ॥ ९८ ॥
आयुरारोग्यमाप्नोति पुत्रानिष्टांस्तथैव च । कामान्कामयते [4]यो वै स तान्सर्वानवाप्य [5]च ॥
देहत्यागोत्तरे काले भासते चापि सूर्यवत् ।

इत्यजिताख्ये महातन्त्रे [क्रियापादे] [6]सूर्यस्थापनविधि-
श्चतुःपञ्चाशः पटलः ॥

---

[1] Cf. *Dīptāgama*, 72, 23b-25a:
अरुणं स्वाग्रतः कृत्वा पङ्कजं तत्स्वरूपकम् । सप्ताश्वरथमध्यस्थं भास्करं पापहारिणम् ॥
पद्मासनस्थितं कृत्वा ततः सिंहासने तथा । पूर्वोक्तविधिना वत्स आदित्यमिति कल्पयेत् ॥

cf. *Suprabhedāgama*, I, 49, 9-10:
अरुणं चाग्रतः कृत्वा पङ्कजं तत्स्वरूपकम् । सप्ताश्वरथमध्यस्थं भास्करं पापनाशनम् ॥
रक्तपद्मासनस्थं हि आसनं तत्र कल्पयेत् । पूर्वोक्तविधिना सर्वमादित्यं परिकल्पयेत् ॥

cf. *Kāraṇāgama*, I, 13, 66-70:
एकचक्रससप्ताश्वससारथिमहारथम् । कृत्वा तु स्थापयेत्सूर्यं पुरुषाकृतिरूपिणम् ॥
तदर्धं वामतः श्यामं नारीरूपसमन्वितम् । कृत्वा तु स्थापयेत्सम्यक् सर्वाभरणभूषितम् ॥
आकुञ्चितसुकेशं च प्रभामण्डलसंयुतम् । मुकुटं वा विधातव्यमन्यत्सर्वं सुमण्डलम् ॥
हस्तद्वयलसत्पद्मं कञ्चुकाञ्चितविग्रहम् । एकवस्त्रं [वक्त्रं?] द्विदोर्दण्डं स्कन्धे सक्तकराम्बुजम् ।
रथोपेतं विना वाथ केवलं पद्मसंस्थितम् । पादौ सखेटकौ तस्य स्थिरं पद्मासने स्थितम् ॥

[2] A : परिवारालयं सर्वमधिवासे

[3] Cf. *Kāraṇāgama*, II, 105, 14b: एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ।

[4] A : कामं pour यो वै [5] A : सः pour च

[6] A : सूर्यस्थापनं षट्पञ्चाशः पटलः; D : सूर्यस्थापनपटलः ९७

# BIBLIOGRAPHIE

## I

### Imprimés


*Ajitāgama*, vol. I, Publications de l'Institut Français d'Indologie, no. 24 (Paṭala 1 à 35), 1964.

*Devīmāhātmya*, Rājam and Co., Madras.

*Kriyākramadyotikā* (ou *Aghoraśivācāryapaddati*) par Aghoraśivācārya, avec le commentaire *Prabhā* de Nirmalamaṇideśika, Cidambaram, 1927 (car gratha).

*Brāhmīyacitrakarmaśāstra*, Tañjāvūr Sarasvati Mahāl Library Series.

*Kālikāpurāṇa*, Śrī Veṅkaṭeśvara Steam Press, Bombay.

*Kāmikāgama*, 2 vols. CivañāNapôtayantracālai, Cintātripêṭṭai, Madras, 1909 (vol. I *Pūrvakāmikāgama* ; vol. II *Uttarakāmikāgama* (car. grantha).

*Kāraṇāgama*, 2 vols. CivañāNapôtayantracālai, Cintātripêṭṭai, Madras (vol. I *Pūrvakāraṇāgama*, 1921 ; vol. II *Uttarakāraṇāgama* 1901) (car grantha).

*Kiraṇāgama*, Śivāgamasiddhāntaparipālanasaṃgha, Dêvakoṭṭai, 1932 (I *Vidyāpāda* ; II *Kriyāpāda* ; III *Caryāpāda* ; IV *Yogapāda*) (car. grantha).

*Kumāratantra*, CivañāNapotayantracālai, Cintātripêṭṭai, Madras.

*Liṅgapurāṇa*, Venkaṭeśvara Steam Press, Bombay.

*Mānasollāsa*, Gaekwad Oriental Series, Baroda.

*Marīcisaṃhitā*, Tirupati, 1926.

*Mārkaṇḍeyapurāṇa*, Venkaṭeśvara Steam Press, Bombay.

*Matsyapurāṇa*, Ānandāśramasaṃskṛtagranthāvaliḥ, no. 54, 1907.

*Mṛgendrāgama*, (*Kriyāpāda* et *Caryāpāda*) avec le commentaire de Bhaṭṭa Nārāyaṇakaṇṭha, 1962, Publications de l'Institut Français d'Indologie No. 23.

*Pādmapurāṇa*, Ānadāśrama mudraṇālaya, 4 vols. Poona ; vol. I Ādi- et bhūmi-khaṇḍa, 1893 ; vol. II Brahma- et Pātāla-khaṇḍa, 1894 ; vol. III Kriyā- ou Sṛṣti-khaṇḍa, 1894 ; vol. IV Uttarakhaṇḍa, 1894.

*Rauravāgama*, vol. I, Publications de l'Institut Français d'Indologie, no. 18, (I *Vidyāpāda*; II *Kriyāpāda*), 1961.

*Śabdakalpadruma* par Rājā Rādhākānta deva, 5 vols., Baptist Mission Press, Calcutta, 1886.

*Saṃgītaratnākara*, vol. IV, Adyar Library Series no. 86, Madras, 1954.

*Śilparatna*, 2 vols. Trivandrum Sanskrit Series, no. 75 et 98, Trivandrum.

*Śivaliṅgapratiṣṭhāvidhi*, CivañāNapotayantracālai, Cintātripeṭṭai, Madras, 1920.

*Śivarahasya*, Śrījayacāmarājendragranthamālā no. 32, 30 vols., 1946-1953.

*Śivamahāpurāṇa*, Paṇḍitapustakālaya, Kāśī, Saṃvat 2020.

*Śrītattvanidhi*, 3 vols. Tanjāvūr Sarasvati Mahāl Library Series
id Veṅkaṭeśvara Steam Press, Bombay, Śaka 1823.

*Skāndamahāpurāṇa*, 7 vols. Śri Veṅkaṭeśvara Steam Press, Bombay, Śaka 1830-1831.

*Skāndamahāpurāṇa*, 2 vols. éd. ANantarāma ṭīkṣitar. Selam.

*Somaśambhupaddhati*, par Somaśambhu, Publications de l'Institut Français d'Indologie, no. 25, 1963.
id. Sivāgamasiddhānta paripālanasaṃgha, Dêvakôṭṭai, 1935.

*Suprabhedāgama*, CivañāNapotayantraçālai, Cintātripeṭṭai, Madras, 1907 (I *Kriyāpāda*; II *Caryāpāda*; III *Yogapāda*, IV *Jñānapāda*) (car. grantha)

*Vāmanapurāṇa*, Śrī Veṅkaṭeśvara Steam Press, Bombay, Śaka 1851.

*Vātulaśuddhākhya*, CivañāNapotayantraçālai, Cintātripêṭṭai, Madras.
id. (ou *Āgamarahasyam*) éd. par Talakāḍu āgamika Kṛṣṇadīkṣita, Bangalore, 1958.

## II

## Manuscrits

*Acintyaviśvasādākhya*, copies des manuscrits de M. K. Sundareśa Baṭṭar, Madurai et de A. Rāmanātha gurukkaḷ, Kaṇḍanūr (no. T. 7 et 8).

*Aṃśumadāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de M. K. Sundareśa Baṭṭar, Madurai (no. T. 3 et 6).

*Aṃśumatkāśyapa*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Nāgarāja gurukkaḷ, Periyakuḷam (no. T. 1 et 2).

*Cintyāgama*, copies des mauuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Svāminātha Śivācārya, Tiruvāṭuturai (no. T. 13 et 14).

*Devatāmūrtidhyānaślokāḥ*, copie du manuscrit de C. Svāminātha Śivācārya, South India Arcaka Association, Madras (IFI. n° 105)

*Dhyānaślokāḥ*, copie du manuscrit de J. Viśvanātha gurukkaḷ, Mêlmaṅgalam; (IFI n° 102)

*Dīptāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr et de Sundareśa Baṭṭar, Madurai (no. T. 15 et 16)

*Kālottarāgama*, copies des manuscrits de Madras Government Oriental Mss. Library, no. R 14343 et R. I6805 (no. T. 59 et 60)

*Makuṭāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, de Kanaka dīkṣitar, Tirunelvêli et de A. Rāmanātha gurukkaḷ, Kaṇḍanûr (no. T. 18, 19 et 20).

*Mataṅgapārameśvara*, *kriyāpāda*, copie du manuscrit de Subrahmaṇya gurukkaḷ, KuNRakkuḍi (no. T. 21).

*Sahasrāgama*, copie du manuscrit d'Akṣaya gurukkaḷ, KîLvelûr (no. T. 33).

*Śaivasiddhāntasaṃgrahaḥ*, copie du manuscrit d'Akṣaya gurukkaḷ, KîLvelûr (No. T. 39).

*Santānasaṃhita*, copie du manuscrit d'Adyar Library et Research Centre, Madras, (IFI n°17)

*Śivadharmottara*, copies des manuscrits d'Adyar Library and Research Centre, Madras, (IFI no. T. 75 et T. 72).

*Sūkṣmāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, de Kanaka dīkṣitar, Tirunelvêli et de J. Viśvanātha gurukkaḷ, Mêlmaṅgalam (no. T. 36, 37 et 38).

*Svāyambhuvāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KîLvelûr, et de Kanaka dīkṣitar, Tirunelvêli (no. T. 39 et 40)

*Vāruṇapaddhati*, copie du manuscrit d'Ayyāmaṇi Śivācrāya, Tiruvāḍānai, (no. T. 55)

*Vimalāgama*, Copie du manuscrit d'Ayyāmaṇi Śivācārya, Tiruvāḍānai (IFI n° I73)

*Vīrāgama*, copies des manuscrits d'Akṣaya gurukkaḷ, KīLvelûr, de Subrahmaṇya gurukkaḷ, KuNRakkuḍi et de Rāmanātha gurukkaḷ, Kaṇḍanūr (no. T. 29, 30 et 31).

*Yogajāgama*, copies des manuscrits de M. K. Sundareśa Baṭṭar, Madurai, de J. Viśvanātha gurukkaḷ, Mêlmaṅgalam (no. T. 24 et 26), d'Adyar Library and Research Centre Madras, n° T 599, et de Madras Government Oriental Manuscripts Library, R. n° 14726.

# ERRATA

Page 4 *śloka* 19a : la note porte sur इदम् au lieu de लब्धं dans 19b

Page 7 La citation de *Suprabhedāgama* I, 37, 30b-34a doit être placée sous la note 9 au lieu de 15

| Page | ligne | au lieu de | lire |
|---|---|---|---|
| 8 | 33 | चाप्युरुत: | चाप्यूरुत: |
| 10 | 2 | कर्णतालकम् | कर्णनालकम् |
| 14 | 5 | मध्यमं | मध्यमां |
| 16 | 22 | पञ्चाङ्गुल | यच्चाङ्गुल |
| 17 | 16 | हन्वन्तं | नालान्तं |
| ,, | 23 | जात्वायामं | जान्वायामं |
| 18 | 16 | सार्धसप्तांशं | सार्धसप्तांशं |
| ,, | 20 | तथा | तस्य |
| ,, | 23 | D.खन | D:खन |
| 20 | 12 | étre | être |
| ,, | 19 | 138-139a | 57, 36-43a |
| 21 | 14 | भान्वङ्मुलं | भान्वङ्गुलं |
| 22 | 5 | त्तस्मद्धास | त्तस्माध्द्रास |
| 28 | 20 | I, 67, 71 | I, 67, 1b-7 |
| 30 | 8 | प्रासादास्याग्रत: | प्रासादस्याग्रत: |
| ,, | 16 | सालपत्रं | साष्टपत्रं |
| 31 | 16 | मानुषं | मानुषे |
| ,, | 31 | V | A |
| 32 | 9 | 34a | 84a |
| 34 | 7 | द्विनेत्रां | त्रिनेत्रां |

| Page | ligne | au lieu de | lire |
|---|---|---|---|
| 34 | 34 | 10 A,C,D : त्रिनेत्रां pour द्विनेत्रां | 10 C, E : द्विनेत्रां pour त्रिनेत्रां |
| 46 | 1 | II, 59,211 | II, 59 2-11 |
| 51 | 4 | शरचापौ | वरचापौ |
| 63 | 10 | कुर्बन्ति | कुर्वन्ति |
| 64 | 8 | स्यादधोरू | स्यादधोरु: |
| 65 | 9 | विचक्षण: | विचक्षण |
| 70 | 1 | भवेद्धीमन् | भवेद्धीन |
| 76 | 7 | ाकाराणां | प्राकाराणां |
| 84 | 32 | 16 cf. | cf. |
| 92 | 23 | I, 34, | 34, |
| ,, | 27 | 22b-24a | 22b-23a |
| 95 | 2 | सर्बालंकार | सर्वालंकार |
| ,, | 6 | तदर्धं बा | तदर्धं वा |
| ,, | 32 | 71b-72a | 71b-73a |
| 117 | 17 | I, 61 | II, 61 |
| 118 | 13 | II, 66 | II, 61 |
| 165 | 25 | सप्तात्रर्गा॰ | सप्तवर्गा॰ |
| 168 | 30 | *Vīrāgamā* | *Vīrāgama* |
| 170 | 21 | यज्ञेन्द्रो | यक्षेन्द्रो |
| 175 | 1 | देव | देवं |

*TABLE DES MATIÈRES*

## अनुक्रमणिका

PUBLICATIONS DE L'INSTITUT FRANÇAIS D'INDOLOGIE

Nos

1. Kārāvelane—*Kāraikkālammeiyār.* Œuvres éditées et traduites. Introduction par Jean Filliozat. 1956.

2. Jean Filliozat—*Les relations extérieures de l'Inde* (1)
   1. *Les échanges de l'Inde et de l'Empire Romain aux premiers siècles de l'ère chrétienne.*
   2. *La doctrine brahmanique à Rome au IIIème siècle* 1956.

3. Madeleine Biardeau—*Le Tattvabindu de Vācaspatimiśra* Edition critique, traduction et introduction. 1956.

4. J. Monchanin, J. Filliozat, A. Bareau—*Entretiens* 1955. 1956.

5. Louis Renou—*Etudes sur le vocabulaire du Ṛgveda.* Première série. 1958.

6. Suzanne Siauve—*La voie vers la connaissance de Dieu* (*Brahma-Jijñāsā*) *selon l'Anuvyākhyāna de Madhva.* 1957.

7. Dev Raj—*L'esclavage dans l'Inde ancienne d'après les textes palis et sanskrits.* Avec une préface du Dr. Jean Filliozat, professeur au Collège de France. 1957.

8. Alain Daniélou—*Tableau comparatif des intervalles musicaux.* 1958.

9. Alain Daniélou—*La musique du Cambodge et du Laos.* 1957.

10. André Bareau—*La vie et l'organisation des communautés bouddhiques modernes de Ceylan.* 1957.

11. Alain Daniélou et N. R. Bhatt—*Textes des Purāṇa sur la théorie musicale.* Vol. I. Edition critique, traduction française et introduction. 1959.

12. Charlotte Vaudeville—*Kabīr Granthāvalī* (*Doha*). Avec introduction, traduction et notes. 1957.

13. Madeleine Biardeau—*Sphoṭa Siddhi* (*La Démonstration du Sphoṭa*) *par Maṇḍana Miśra.* Introduction, traduction et commentaire. Texte sanskrit établi par N. R. Bhatt avec la collaboration de T. Ramanujam. 1958.

14. Suzanne Siauve—*Les noms védiques de Viṣṇu dans l'Anuvyākhyāna de Madhva* (*Brahma-Sūtra* I, 1, *adhikaraṇa* 2 *à* 12). Texte avec traduction et notes. 1958.

15. Charlotte Vaudeville—*Etude sur les sources et la composition du Rāmāyaṇa de Tulsī-Dās.* Traduction en hindi par J. K. Balbir. तुलसीदास रचित रामचरितमानस का मूलाधार व रचनाविषयक समालोचनात्मक एक अध्ययन, fasc. I 1959, fasc. II. 1965.

16. Alain Daniélou et N. R. Bhatt—*Le Gītālaṃkāra.* L'ouvrage original de Bharata sur la musique. Edition critique, traduction française et introduction. 1959.

17. Rasik Vihari Joshi—*Le rituel de la dévotion kṛṣṇaïte.* Préface par Jean Filliozat. 1959.

18. N. R. Bhatt—*Rauravāgama,* édition critique, Vol. I. Introduction : Les Āgama çivaites, par Jean Filliozat. 1961.